# SARASVATĪ BHAVANA STUDIES

*( Vol. XXI )*

**General Editor**
DR. BHĀGĪRATHA PRASĀDA TRIPĀTHĪ 'VĀGĪŚA ŚĀSTRĪ'
Director, Research Institute
Sampurnananda Sanskrit Vishvavidyalaya
Varanasi




# KĀTANTRA-VYĀKARANA-VIMARŚAH

by

DR. JĀNAKĪ PRASĀDA DWIVEDĪ
Vācaspati ( D Litt )
Research Assistant

Sampurnananda Sanskrit Vishvavidyalaya,
Varanasi



VARANASI
1975

# सरस्वतीभवन-अध्ययनमाला

( २१ )

प्रधानसम्पादकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

अनुसन्धानसंस्थाननिदेशकः

सम्पूर्णानन्दसस्कृतविश्वविद्यालये

# कातन्त्रव्याकरणविमर्शः

लेखकः सम्पादकश्च

डॉ० जानकीप्रसादद्विवेदः

विद्यावारिधिः ( पी-एच्० डी० ), वाचस्पतिः ( डी० लिट्० )

अनुसन्धानसहायकः

सम्पूर्णानन्दसस्कृतविश्वविद्यालये



वाराणस्याम्

३२ तमे वैक्रमाब्दे ] [ १८९७ तमे शकाब्दे

# प्रास्ताविकम्

वेदव्याख्यानाय प्रातिशाख्यनिरुक्तव्याकरणरूपा शब्दानुशासनस्य महती परम्परा दृश्यते सुचिराद् भारते वर्षे। प्रातिशाख्येषु पदविभागादिरूपा वाग्व्याक्रिया वैदिकशब्दानुशासनमंशत आख्याति। व्याकरणशिक्षापूर्वकमेव निरुक्तोपदेशविधिर्व्यज्यते यास्कीये निरुक्त इति व्याकरणरूप शब्दानुशासनमिद विराजते निरुक्तपरम्परातः प्राक्तनम्। यद्यपि प्राचीनाना व्याकरणाना बहूनि नामानि श्रूयन्ते प्राचीनभारतीयवाङ्मये तथापि किमपि प्रकरणमाश्रित्य रचितत्वात् तेषा व्याकरणाना तत्परम्पराकाणा चान्येषा व्याकरणाना लोपो जातः। जागर्ति केवल माहेशी परम्परा सम्प्रत्यपि। माहेन्द्री परम्पराप्यंशतो जागर्तीति समामनन्ति केचन दोषज्ञाः। सा शब्दानुशासनपरम्परा द्विधाविभूता—१. मातृकापाठरूपा विस्तृता, २. प्रत्याहाररूपा संक्षिप्ता चेति। साम्प्रतं समुपलभ्यमाना व्याकरणग्रन्था द्वितीयामेव परम्परामनुकुर्वन्तो विलसन्ति।

तैत्तिरीये षाष्ठे वाग्व्याकृत्यर्थं देवा इन्द्र प्रार्थयन्ते— ते देवा इन्द्रमब्रुवन्निमा नो वाचं व्याकुरु इति' (६, ४, ७)। शब्दानुशासनस्य विस्तृता माहेन्द्री परम्परा महेन्द्रगुरोर्बृहस्पतेरुपज्ञायते। तस्या विस्तृतत्व निरदेशि भगवता पतञ्जलिना महाभाष्यपस्पशाह्निके— 'एव हि श्रूयते बृहस्पतिरिन्द्राय दिव्य वर्षसहस्र प्रतिपदोक्ताना शब्दाना शब्दपारायण प्रोवाच, नान्तं जगाम। बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता, दिव्य वर्षसहस्रमध्ययनकालो न चान्त जगाम' इति।

अष्टमवैक्रमाब्दभवेन श्रीहरिभद्रसूरिणा जैनेन्द्रव्याकरणमेवैन्द्रव्याकरणमित्यसाधि। ततश्चाष्टादशे वैक्रमाब्दे महावीरप्रोक्तमैन्द्रव्याकरण भगवद्वाग्वादिन्यपरनामधेयमुद्भावित रत्नर्षिणा, चेष्टित च तेन तस्य तथात्वसाधनाय। श्लोकबद्धाया भगवद्वाग्वादिन्या जैनेन्द्रसूत्रपाठो दृश्यते। तस्य रचयित्रा पाणिनीयव्याकरणे शब्दावतारन्यासाभिधा टीका कृता। पाणिनेः प्राक्तनाना व्याकरणानाम् अनेके सिद्धान्ता जैनेन्द्रव्याकरणे नून समासाद्यन्ते। नैतावता तस्यैन्द्रव्याकरणत्वं सिद्ध्यति। जिनेन्द्रशब्द इन्द्रशब्दश्रवणेन तथाभासः स्यात्। जिनेन्द्रबुद्ध्यपरनामधेयेन देवनन्दिना कृत जैनेन्द्रव्याकरणमिति तत्त्वविदो विदन्ति।

महेन्द्रव्याकरणस्य सुदीर्घसमयसाध्यत्वाद् महामुनिना पाणिनिनाऽवतारितं महेशपरम्पराकप्रत्याहारगर्भित शब्दानुशासनम्। नात्र चित्र यदि महेन्द्रपरम्पराभाणि सर्वाणि व्याकरणान्यतिशेते पाणिनीयं शब्दानुशासनम्। तत्रापि सन्ति बहूनि सूत्राणि प्राक्तनाना व्याकरणानाम्। पाणिनिना तेषा केषाञ्चिदाचार्याणा नामानि सादर गृहीतानि, येषा मतानि विभाषया प्रतिपाद्यान्यासन्। तत्र प्राच्यौदीच्यादिदिशा प्राक्तनवैयाकरणमतानि प्रदर्शितानि। प्रत्याहारगर्भितसूत्रातिरिक्तानि बहूनि सूत्राणि पाणिनेरष्टाध्याय्या प्राक्तनेभ्यो व्याकरणेभ्यो गृहीतानीत्युपलब्धसूत्रैः सह तुलनया गम्यते।

यद्यप्यवैदिकानि जैनबौद्धव्याकरणानि सन्त्यंशतो माहेन्द्रपरम्परानुवर्तीनि, तथापि पाणिनेर्व्याकरणस्य महत्त्वमूरीकुर्वद्भिरपि पाणिनेः परवर्तिभिस्तैस्तैर्वैयाकरणैर्न पारितः संवरीतुं स्वकीयेषु व्याकरणेषु पाणिनीयप्रत्याहारसूत्रक्रमसमावेशस्य लोभः।

सम्प्रत्युपलभ्यमानं महेन्द्रपरम्पराकं कातन्त्रमेव तादृशं पाणिनेः परभवं शब्दानुशासनम्, यत्र नालम्बिता महेशपरम्पराका प्रत्याहारक्रमप्रक्रिया। यद्यपि कातन्त्रव्याकरणस्य नामविषये विवदन्ते सूरयः, तथापि तस्य बृहत्तन्त्रात् सङ्क्षेपे नास्ति सशीतिलेशोऽपि। कु= लघुतन्त्रमेव कातन्त्रमिति दुर्गसिंहादयः। कुत्सितं तन्त्रं कातन्त्रमित्यन्ये। कार्त्तिकेयतन्त्रं कातन्त्रमिति केचन। अपरे कात्यायनतन्त्रं कातन्त्रम् इत्यूरीकुर्वन्ति। इतरे काशकृत्स्नतन्त्रमेव कातन्त्रमिति समामनन्ति। कालापकतन्त्रमेव कातन्त्रमिति केचित् प्रतिजानते। इह सर्वत्राद्यस्य पदस्य प्रथमेनाक्षरेण सह तन्त्रशब्दयोजनया कातन्त्रम् इत्यस्य निष्पत्तिरित्याकूतम्। एतेन तस्मात् तस्माद् व्याकरणादस्य तन्त्रस्य सङ्क्षेपोऽभिप्रेयते तैस्तैर्मतवादिभिः। पाणिनेर्व्याकरणापेक्षया लघीयस्त्वादिदं कातन्त्रमिति परे। कातन्त्रव्याकरणमिदं कस्माच्चिद् बृहत्तन्त्राल्लघूकृतमित्यभ्युपैति दशपाद्युणादिवृत्तिकारः। हेमचन्द्रोऽप्येवमेव स्वीकरोति— 'बृहत्तन्त्रात् कला आपिबतीति कलापकं शास्त्रम्' इति। सङ्ग्रहार्थकोऽपि कलापशब्दः। अतो विविधानां व्याकरणानां सङ्ग्रहात्मकमिदं कलापव्याकरणम्। भगवत्कुमारप्रणीतसूत्रानन्तरं तदाज्ञयैव श्रीशर्ववर्मणा प्रणीतमिदं व्याकरणमित्येतस्मात् कारणादस्य नामधेयं कौमारं तन्त्रं प्रथितमिति केचन। कुमारकार्त्तिकेयप्रोक्तत्वात् कौमारमिदं तन्त्रमिति यद्यपि प्रसिद्धिः, तथापि भगवतः कार्त्तिकेयस्य चौर्यशास्त्राचार्यतयैव विश्रुतत्वम्, न तु व्याकरणशास्त्राचार्यतया। कुमाराणां राजकुमाराणां वेदं कौमारं तन्त्रमित्यन्ये समाद्रियन्ते मतम्। कुमार्याः=सरस्वत्या आगतमिदं कौमारमितीतरे सम्शृण्वते। कलापो मयूरपिच्छः। मयूरपिच्छानां मध्यादुपदेशोऽस्य समजनि कातन्त्रस्येति त्रिविष्टपीया परम्परा। जैनाः साधवो मयूरपिच्छं कलापं धारयन्ति, व्यवधानपूर्वकं चोपदिशन्ति। कातन्त्ररूपमालाप्रणेता जैनाचार्यः श्रीमच्छर्ववर्मेति स्पष्टमुदलेखि श्रीभावसेनेन स्वरचितायां कातन्त्ररूपमालाप्रक्रियायाम्। किञ्च, कलापापरपर्यायस्य कातन्त्रव्याकरणस्यादावन्ते च जैनपरम्पराकम् 'ओं नमः सिद्धम्' इति नमस्कारात्मकं मङ्गलं बहुषु हस्तलेखेषु दृश्यते।

शर्ववर्मैव वररुचिः, तेन शङ्कुसंक्षिप्तमैन्द्रव्याकरणं लघूकृतम्, तदेवेदं कातन्त्रमिति त्रिविष्टपीया परम्परेति केचिद् दोषज्ञा अभ्युपगच्छन्ति। कातन्त्रस्य कृद्भागो वररुचिभावित इति ज्ञायते दौर्गव्याख्यया। स च वार्त्तिककारकात्यायनाद् भिन्नः, परवर्ती श्रुतधरापरनामधेयः प्राकृतप्रकाशग्रन्थकृदासीत् तृतीये खीस्ताब्देऽवस्थितः। शर्ववर्मणो महाभाष्यकारः परवर्तीति कीर्तनमव्यवस्थितम्। कथासरित्सागरानुसारिकथाया प्राकृतभाषाविदः सातवाहनस्य राजसंसदि गुणाढ्यः शर्ववर्मा चेति बुधवरावास्ताम्। राज्ञो दीपकर्णेः पोषितपुत्रः सातवाहनोऽभूत् संस्कृतभाषानभिज्ञ इति कथासरित्सागरः। सिंहवाहनत्वादस्य समजनि सातवाहनाख्येति तत्रैव। 'शालिवाहन' इत्यपि नामान्तरं सातवाहनस्य। वस्तुतस्तु सप्तिवाहनः सातवाहनः। सप्तिरित्यश्वपर्यायः। शालिशब्दस्यापि तथार्थत्वं प्राप्यते शालिहोत्रशब्दे। ऐतिहासिकैः प्रमाणै राज्यविस्तारानन्तरम् आन्ध्रनृपाः सातवाहनोपाधिमभजन्। तत्र षष्ठः सातवाहनो नृपोऽभूद् द्वितीयः शातकर्णिः। कथासरित्सागरे दीपकर्णिरस्यैव

नामान्तर ज्ञायते। सातवाहनवंशीयः सप्तमो राजा जातः 'हाल' इत्याख्यः। प्राकृतप्रियस्य तस्यैव राजसमदि शर्ववर्मा गुणाढ्यश्चेति धीमन्तावववर्तताम्। तदन्यतर. शर्ववर्मा राजानमपाठयदिति सातवाहनीयहालकाल एव प्राप्तप्रचार समजनि कातन्त्रम्। कालस्तस्य राज्ञः २० २४ तम खीस्ताब्दो निश्चितः। तस्यैव समकालिकः शूद्रको राजाभूद् येन पद्मप्राभृतकभाणे समुल्लिखित कातन्त्रव्याकरणम्। पुष्यमित्रसमकालिकस्य भगवतो महाभाष्यकारस्य पतञ्जलेः समय खीस्तात् पूर्वं द्वितीयशताब्दो निर्णीत इति सिद्ध्यति पतञ्जलेः परवर्ती शर्ववर्मा।

'सूत्राच्च कोपधात्' (४, २, ६५) इति सूत्रे भगवान् पतञ्जलि. 'कालापक.' इति प्रत्युदाहरति। शब्दसादृश्यादेव तेन कालापकव्याकरणेनैव भाव्यमिति निष्कर्षो युक्तियुक्तो नाभाति। 'तेन प्रोक्तम्' (४, ३, १०१) इति सूत्रे महाभाष्यकार 'ग्रामे ग्रामे काठक कालापक च प्रोच्यते' इत्युदाहरति। 'ङ्याप् प्रातिपदिकात्' (४, १, १) इत्यत्रापि महाभाष्ये 'काठकम्, कालापकम्' इत्याद्युदाहरण दृश्यते। काठकसदृशः कालापकग्रन्थोऽपि वैदिकः, न तु कातन्त्रीयः। स्यात् स वैदिकः सूत्रग्रन्थः, ग्रामे ग्रामे वैदिकग्रन्थस्य प्रचारः सभाव्यते, न तु कातन्त्रस्य व्याकरणस्य। तादृश कालापकमधीते वेद वा कालापकः। अन्यच्च, आदौ शर्ववर्मसगृहीतस्य व्याकरणस्य प्रसिद्धिः कातन्त्रतयैव सजाता। शूद्रककाले तथैव लभ्यते। परतश्च त्रिविष्टपादौ सग्रहग्रन्थतयेद प्रथितम्। कलापो नाम सग्रहग्रन्थः। कार्तिकेयोपदिष्टत्वान्मयूरपुच्छार्थः कलापस्य विभावित। तादृशी कथापि तत्र कल्पिता।

भगवद्वाग्वादिन्या तु पाणिने. कलापाद्युपजीवित्वमसर्वज्ञत्वमनाप्तत्व च साधितम्—"अत एव 'शश्छोटि' (८, ४, ६३) इति पाणिनीयसूत्र 'वर्गप्रथमेभ्यः शकारः स्वरयवरपरश्छकार नवा' (१, ४, ३) इति शर्ववर्मकर्तृककालापकसूत्रानुसारि। अत एव पाणिन्यादयोऽसर्वज्ञा इति सिद्धम्। अत एव तेषा तत्त्वत आप्तत्वाभाव इति सिद्धिः। शश्छोटिप्रमुखैः सूत्रैस्तच्छ्मश्रुप्रभृतिपदादर्शी कलापाद्युपजीवी पाणिनिरजिनत्व प्रति नाभ्यक्तः।" इति। एव तावद् रत्नर्षिणा समाचरितः फल्गुप्रयासस्तथाकथितमहावीरप्रोक्तव्याकरणादवरत्वसाधनाय। तेन पाणिनेरप्रामाणिकत्वमप्युक्त तत्रैव—'प्रमाणपदव्यामुपेक्षणीयानि पाणिन्यादिप्रणीतानि सूत्राणि स्यात्कारवादित्रदूरत्वात् परिव्राजकादिभाषितवत्। अप्रमाणानि च कपोलकल्पनामलिनानि हीनमातृकत्वात् तदेव।" इति। इत्थ कलापव्याकरणस्य पाणिने. पतञ्जलेश्च प्राग्वर्तित्वप्रतिपत्तये मुधायासः प्रकल्प्यते।

कातन्त्रव्याकरणस्य प्रचारः प्रामुख्यतः सीमावर्तिषु प्रदेशेष्वेव लक्ष्यते। अङ्गवङ्गकलिङ्गकश्मीरराजस्थानादिप्रदेशा अस्य प्रयोगभूमिः। राजस्थानादौ प्रक्रियानुसारिणो व्याकरणस्यास्याध्ययनाध्यापनपरिपाटी सुनिर्भरमभूत्। अस्यानुकृतौ पाणिनेरष्टाध्यायीसूत्राणि बौद्धेन सूरिणा धर्मकीर्तिना प्रक्रियात्वेन व्यवस्थापितानि 'रूपावतारः' इति ग्रन्थरचनया। परम्परेय क्रिस्तो षोडशशताब्दीं यावदविच्छिन्ना लक्ष्यते। पाणिनीयव्याकरणे प्रक्रियाग्रन्थानामवतारणान्मन्दप्रचार सवृत्तं कातन्त्रव्याकरणमिदम्। ततो राजस्थानप्रदेशेषु भूरिप्रचार-

स्यास्य सूत्राणा पाठो जातोऽपभ्रष्टः। स च तत्र 'पाटी' इत्याख्ययाख्यायते। गवेषकेणेह गवेषणाप्रबन्धे तत्रोपलब्धस्य पाटीक्रमस्य यथास्थान विहित. समुल्लेखः। राजस्थानससक्ते बुन्देलखण्डे बालकानामक्षरारम्भसमये 'ओना मासी धम्' इति कातन्त्रव्याकरणपरम्परा-प्रचलितस्य 'ओ नमः सिद्धम्' इत्यस्यापभ्रष्टं नमस्कारात्मक मङ्गलमुच्चार्यते। अतो राजस्थानवत् तत्राप्यस्य व्याकरणस्य पुष्कल प्रचार आसीदिति वक्तु शक्यते। परतश्चाप-भ्रष्टपाठस्यानुपयोगिता विभाव्य लोकतो नष्टा व्याकरणस्यास्य परम्परा। बुन्देलखण्डे चापभ्रष्टं नमस्कारात्मकं मङ्गलमुपहासरूपतया स्मर्तुमारब्धम्।

लुप्ताध्ययनाध्यापनपरिपाटीकस्य भूरिटीकस्य व्याकरणस्यास्य पर्यालोडनपूर्वक पर्यालोच-नायै महान् प्रयत्न. समास्थितो गवेषणाप्रबन्धलेखकेन तत्रायुष्मता श्रीजानकीप्रसादद्विवेदेन। 'कातन्त्रव्याकरणविमर्शः' इत्याख्योऽय गवेषणाप्रबन्धोऽस्य विश्वविद्यालयस्य वाचस्पति (डी० लिट्०) उपाधये रचितो गवेषकेण। इह चतुर्दशशतसूत्रात्मक कातन्त्र सखिलपाठं पर्यालोचितम्। अप्रचलितत्वाट्टीकापूर्णं सपूर्णं कातन्त्रवाङ्मय मुद्रित नोपलभ्यते सम्प्रत्यपि। मुद्रितमपि विविधासु लिपिषु सदब्धत्वात् सर्वत्र चानुपलभ्यत्वात् सुदुष्प्रापम्। विविधप्रदेश-स्थाना हस्तलेखानामुपयोगेन कर्तुमपारि पर्यालोचनेयमनुसन्धायकेन। एतदर्थम् उत्कलवङ्ग-गुर्जरराजस्थानकश्मीरादिप्रदेशस्थान् पुस्तकालयान् उपेत्य वङ्गोत्कलशारदादिलिपिकाः समधीताः शतद्वयाधिका हस्तलेखाः श्रीद्विवेदेन। धातुपाठ-गणपाठोणादिसूत्र-लिङ्गानु-शासनादीना खिलपाठाना क्वचित् तुलनात्मकः क्वचिच्च पर्यालोचनात्मको विमर्शः सूक्ष्मेक्षिकया कृतः। इह सज्ञा-परिभाषा-विधि-नियमातिदेशाधिकारसूत्राणि कातन्त्रीयाणि सुपरि-शीलितानि।

सक्षिप्तस्यास्य कातन्त्रस्य तद्धितभागो नितरा सक्षिप्तो वर्तते। पाणिनीये व्याकरणे ११११ सूत्राणि, ६९८ वार्तिकानि चेत्थ सहत्य १८०९ सख्या सपद्यते समेषाम्। निःशेषं कातन्त्रमेव १४०० सूत्रात्मक चकास्ति। अहो सक्षिप्तता कातन्त्रीया! पाणिनीयस्य तद्धित-भागस्य विस्तरमीदृग परिलक्ष्य प्रत्यपादि काव्यमीमासाकारेण पाणिनीयाना तद्धितमूढत्वम्। कातन्त्रे तु तद्धितानामभिधानलक्षणत्वाल्लोकोपचारेणैव सिद्धिर्मन्यते। गवेषणाप्रबन्धे सक्षिप्त-तमस्य तद्धितस्य प्रमुखान् प्रत्ययान् प्रदर्श्य सगतिश्चेष्टिता।

विविधपरिशिष्टाना योजनेन प्रबन्धोऽय नितरामुपयोगी सवृत्तः। परीक्षकाणा प्रति-वेदनेन विषयस्य चावलोकनेन लेखकस्यास्य परिश्रमो बहिष्ठा प्रशसामर्हति। विद्वत्सज्जाना जिज्ञासूना च पाणिपल्लवे ग्रन्थमिम प्रस्तुवतो मे जाजायते परमामोदः। ग्रन्थरत्नोपहाराय चाशीराशिभिरभिनन्द्यते श्रीद्विवेदः।

विश्वविद्यालयानुदानायोगस्यानुदानसाहायकेन ग्रन्थस्यास्य मुद्रण सजातमिति विश्व-विद्यालयस्य पक्षतस्तत्रत्येभ्योऽधिकारिभ्यः साधुवादान् वितरन् विरमति।

गुरुपूर्णिमायाम्
२०३२ वैक्रमाब्दे
(२३-७-७५ खी०)

**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**
निदेशकः
अनुसन्धानसस्थानस्य

# भूमिका

## प्रवृत्तिनिमित्तम्

लोकप्रयुक्ताना येषा शब्दाना साधनाय पूर्ववर्तिनि व्याकरणे तत्तदाचार्यैः कृत प्रयासः, प्रायेण तेषामेव शब्दाना साधनमुत्तरवर्तिष्वपि व्याकरणग्रन्थेषु कृतमाचार्यै। तत्र प्रत्येक व्याकरणग्रन्थे कोऽसौ भिन्न क्रम समादृत, येन तेषु केषाचिद् ग्रन्थाना पृथगस्तित्वमद्यापि दृश्यते श्रूयते चापि। एतस्य बलीयसः कामस्य परीक्षणमेव पाणिनीयोत्तरप्रणीतकातन्त्रव्याकरणानुसन्धानस्य प्रवृत्तौ निमित्तम्। १६६५ तमक्रैस्ताब्दात् प्रभृति १६६७ तमक्रैस्ताब्दपर्यन्त विद्यावारिधि (पी-एच्• डी०) उपाधये पाणिनीयसज्ञाशब्दाना विचारावसरेऽन्येष्वपि कातन्त्रादिषु कतिपयेषु व्याकरणग्रन्थेषु प्रयुक्ता सञ्ज्ञाशब्दा समधीता, तत्र कातन्त्रे प्रत्याहार-वैदिकशब्दान्वाख्यानाद्यभावस्य दर्शनमप्यत्र प्रवृत्तेः कारण मन्तव्यम्।

महर्षिपाणिन्युत्तरवर्तिभिरनेकैराचार्यैर्व्याकरणग्रन्था प्रणीताः, तत्र केचिदध्ययनाध्यापनादौ प्रचलिता केचिच्च ततो बहिर्भूता। प्रचलितास्तावत् कातन्त्र-चान्द्र-जैनेन्द्र शाकटायन-सरस्वतीकण्ठाभरण-सक्षिप्तसार-हैम-सारस्वत - मुग्धबोध - सुपद्म - हरिनामामृत - प्रयोगरत्नमालाख्या ग्रन्थाः। अप्रचलितेषु केचिदत्यन्त नाध्ययनाध्यापनयोः समादृता, केचिच्च समादृता अपि पश्चात् क्षीणप्रभावा जाता। विश्रान्तविद्याधर-सूत्रसारप्रक्रिया-पाणिनीयमतदर्पण-प्रक्रियारत्नमणि-सूत्रसार - सूत्रप्रकाश-पदचन्द्रिका - शिशुबोध - शब्दरत्नाकर - जुमरकौमुदी-चैतन्यामृत-गोविन्दव्याकरण-पारसीकप्रकाश-प्रबोधचन्द्रिका-रत्नमहोदधि-रत्नाकर-ऋजुप्राज्ञ-कारिकावली-बालकबोध - द्रुतबोध - वृत्तिदीपिका - राघवेन्द्रीय - पारिजात-आशुबोध - भावसिंह-प्रक्रिया-प्रबोधप्रकाश-प्रक्रियार्णव-दीप-बालशिक्षा शुद्धाशुबोधाख्यग्रन्थानामध्ययनादावत्यन्त न जात· समादर। बालावबोधन मलयगिरिशब्दानुशासन-हरिनामामृताख्या व्याकरणग्रन्था पूर्वं प्रचलिता अपि पश्चाद् ग्रन्थरूपेणावशिष्टाः। प्रचलितेषु ग्रन्थेषु कातन्त्रस्य वङ्गप्रदेशे बहीयान् प्रचार प्रवर्तते स्मेत्यादि पूर्वं प्रात स्मरणीयैर्गुरुवर्यै श्रीरामशङ्करभट्टाचार्यैर्निर्दिश्योक्तकर्मणि प्रवृत्तिः प्रवर्धिता।

भारतवर्षस्य चतुर्दिक्षु वर्तमानेषु प्रदेशेषु कातन्त्रस्याध्ययनाध्यापनादिक जातमिति मया त त प्रदेशमुपस्थायावगतम्। भारतस्य पूर्वस्या दिशि वर्तमानयोर्वङ्गोत्कलप्रदेशयोः, उत्तरस्या कश्मीरप्रदेशे, पश्चिमाया राजस्थान-गुर्जरप्रदेशयो, दक्षिणस्या च आन्ध्रमद्रास-महाराष्ट्रप्रदेशेषु व्याकरणमिद पर्याप्त प्रचलितमासीत्। दक्षिणप्रदेशान् विहायैतेषु स्थानेषु

स्वयमेव गत्वा मयाऽधिकारिभिर्विद्वद्भिस्तथा श्रुतम् । येषा मान्याना विदुषा कातन्त्रविषयक-परिचयादिप्रदानात्मकः सहयोग. संजात., लेखेन नामनिर्देशपूर्वक तान् प्रति कृतज्ञताया विज्ञापन न विस्मरिष्यामि ।

लोकप्रयुक्तानामेव शब्दाना साधुत्व व्याकरणशास्त्रमन्वाचष्टे इति तत्र तत्रोक्तेनाऽऽचार्यवचनेन लोकव्याकरणशास्त्रयोरस्ति कश्चित् सम्बन्धविशेष इति प्रतीयते । कातन्त्रे लौकिका एव शब्दा अन्वाख्याता इति तस्य तु लोकेन सम्बन्धः सुनिश्चित एवेति प्रसङ्गतो व्याकरणे लोकप्रामाण्यस्य निदर्शनाय किञ्चिदुच्यते—

कश्चिदपि क्रियाशील प्राणी प्रतिक्षण यस्मिन् कर्मणि प्रवृत्तो दृश्यते तस्मिन् कर्मणि प्रवृत्ते प्रयोजक· शब्द एव । शब्देन कश्चिदपि व्यवहार· सरलतया सम्पद्यते । व्यवहाराच्च शब्दस्यार्थेन सह यो ह्यनादितया सम्बन्ध स स्पष्ट परिलक्ष्यते । अनादिसबन्ध शाब्द-बोधस्य हेतुरुच्यते । व्यवहारगताना शब्दाना साधुत्वस्य ज्ञापनार्थं प्रवृत्त व्याकरणशास्त्र लोकव्यवहारमतिक्रम्य न जातु वर्तते । लोकशब्देनात्र शिष्टव्यवहारो गृह्यते । उच्यते चापि—

लोक्येते चात्र शब्दार्थौ लोकस्तेन स उच्यते ।
व्यवहारोऽथवा वृद्धव्यवहर्तृपरम्परा ॥

( म० भा० प्र० उ० ४।१।१ ) इति ।

आचारवन्तः कस्याश्चिद् विद्याया. पारगा ये ब्राह्मणा शिष्टपदवाच्यास्त एव शब्दार्थनिर्णये प्रमाणपदमुपयान्ति । तथाहि—

**भावतत्त्वविदः शिष्टा. शब्दार्थेषु व्यवस्थिताः** ( वा० प० १।१३।२१ ) इत्युक्तं श्रीभर्तृहरिणा । भावतत्त्वविद =ब्रह्मतत्त्वसाक्षात्कारवन्त इति व्याख्यात श्रीनागेशभट्टेन । तै. शिष्टैः शब्दप्रयोगरूप कृतो यो व्यवहारस्तस्य व्याकरणशास्त्रादौ सत्त्वाल्लोकशब्देन व्याकरणशास्त्रमपि गृह्यते । अयमभिप्राय.-सम्भाषणे, काव्यादौ, शब्दानुशासनात्मकशास्त्रे च यो हि शिष्टैर्यदर्थे शब्दव्यवहार क्रियते स एवार्थनिर्णायकः, व्यवहारस्यार्थनिर्णायकत्वाद् इति । अत एव यस्मिन्नर्थे यस्य शब्दस्य व्यवहारो नोपलभ्यते स शब्दः साधुत्व नोपैति । तथाहि—

अदृष्टव्यवहारस्य शतकृत्वोऽपि शृण्वतः ।
न कस्यचित् स्वतन्त्रस्य शब्दात् स्यादर्थनिर्णयः ॥

( स्फो० सि०-गोपा० टी०, पृ० १३ ) इति ।

काव्यादौ शिष्टैः प्रयुक्तानामपि शब्दाना साधुत्वस्य नियामक व्याकरणशास्त्रमेव स्मर्यते । तेन प्रकृतिप्रत्ययादिविभागज्ञानपूर्वक शब्दाना प्रयोगेणाभ्युदयो जायते ( द्र०-म० भा०, पस्प०, पृ० ५६ ) । महाभाष्यप्रदीपकारेण नित्याना शब्दाना सङ्कीर्णप्रयोग-

निरासो यथा स्यादिति व्याकरणेन साध्वसाधुविभागः क्रियते इति युक्तमेवोक्तम् ( द्र०-म० भा० प्र० ३।१।७ )।

प्रत्यक्षानुमानोपमानशब्दरूपप्रमाणचतुष्टयान्तर्गतो यो हि शब्दः प्रमाणमङ्गीक्रियते तेन शास्त्रमेव गृह्यते। शास्त्रसङ्केतितस्य शब्दस्य प्रामाण्यमसंशयमाद्रियते। शास्त्रज्ञानपूर्वकमेव शब्दार्थज्ञानेन धर्मादिपुरुषार्थाना तत्त्वमधिगन्तु शक्यते। अत एव व्याकरणाध्ययनस्याऽऽवश्यकता निर्दिशन् जैनशाकटायनाचार्य स्वीयशब्दानुशासनस्याऽऽरम्भे उक्तवान्—

धर्मार्थकाममोक्षेषु तत्त्वार्थावगतिर्यतः।
शब्दार्थज्ञानपूर्वेति वेद्यं व्याकरणं बुधैः॥ इति।

व्याकरण तु स्मृतिरिति कीर्त्यते। अतस्तत्र कदाचित् प्रयुक्ताना ग्रन्थप्रणयनकालेऽप्रयुक्तानामपि केषाचिच्छब्दाना साधन यदि केनचिल्लक्षणेन निर्दिशेदाचार्यस्तर्हि तेषा शब्दानामसाधुत्व न मन्तव्यम्। किं च ऋषिप्रयुक्तस्यापि शब्दस्यासाधुत्वं नाशङ्कनीयम्, न च तद्विषये बलाल्लक्षणान्तर प्रकल्प्य तस्यापशब्दता ससाध्य प्रयोज्यशब्दस्य सिद्धिर्विज्ञापनीया।

यद्यपि पदादिविभागपूर्वकमृग्वेदादिमन्त्राणामप्यर्थस्य निर्णायकत्वाद् व्याकरणम् "वेदानां वेदम्" ( छा० उप० ७।१ )', "तेषा च सामर्थ्यजुषां पवित्र महर्षयो व्याकरण निराहु" ( वा० प०—स्वो० टी० १।१४ ) इत्यादिवचनैर्बहुधा स्तूयते। किं च लौकिकशब्दाना परिज्ञानस्योपायो व्याकरणमेवेति कातन्त्रवृत्तिटीकाकारो दुर्गसिंहोऽनुमन्यते। उक्त च तेन—"लौकिकाना शब्दाना पुनर्नापर एव सम्प्रदायो व्याकरणादृते। व्याकरणेन हि प्रतिनियतार्थप्रतिपादनसामर्थ्यादेषा बुद्ध्या प्रतिनियतान् शब्दान् प्रयुञ्जते जनाः" ( कात० वृ० टी०—मङ्गलाचरणम् ) इति, तथापि सर्वे शब्दा एकस्मिन्नेव व्याकरणग्रन्थे सूत्रैर्न साधयितु शक्यन्ते, शिष्टव्यवहारस्यातिविस्तृतत्वात्। शिष्टा हीतिहासपुराणादिषु नानाविधान् शब्दान् प्रयुञ्जते येषा परिगणनमत्राशेषतः कर्तुं न शक्यते।

एव हि दृश्यते—ये हि शब्दा महाकविभिः काव्यादिषु प्रयुज्यन्ते तेऽपि प्रामाण्य भजन्ते महाकवीनामपि शिष्टान्तर्गतत्वात्। तै प्रयुक्तानां शब्दाना व्याकरणशास्त्रेण साधुत्वमात्र ज्ञाप्यते। अर्थस्य निर्धारणमपि तेषा वचनेन कर्तुं शक्यते प्रयोगेणैवार्थनिर्धारणस्य सम्भवात्। उच्यते चापि—

"शास्त्रेऽनुपात्तोऽप्यर्थं प्रयोगादेव व्यवस्थाप्यते" ( म० भा० प्र० १।४।११ ) इति। स च प्रयोगो लोके सम्भाव्यते।

प्रस्तुतस्य प्रघट्टकस्यायं निष्कर्षः—लोकव्यवहारहेतु शब्दो द्विविधः—शिष्टै शास्त्रकाव्यादौ व्यवहरणीय, देशव्यवहारविज्ञैर्लोके तत्तत्कार्येषु व्यवहरणीयश्च। अतो कति-

वशाद् ये शब्दा लोके प्रसिद्धिमुपगतास्तेषामनुशासनस्याऽऽनर्थक्यमेव बहुधा व्याचक्षते व्याख्याकारा । ते च शब्दा लक्षणमन्तरेणाऽऽचार्यैरपि व्यवह्रियन्त एव । तेनाभिधानाप्रयण लोकोपचारपर्यवसायीति मन्यते । काव्यशास्त्रप्रयुक्ताना शब्दाना विषये काव्यशास्त्रकर्तारः शिष्टा एव प्रमाणमिति ।

कारकाणा प्रयोगे या विवक्षा नियामिका मन्यते सा विवक्षाऽपि लौकिकी प्रयोग-मर्यादामतिक्रम्य न कथञ्चिद् प्रवर्तते । महर्षिपाणिनिना कालोपसर्जनादीना परिभाषा लोक-मेव प्रमाणमङ्गीकृत्य न कृता । अस्य विस्तरः कश्चिद् मदीये **व्याकरणे लोकस्य प्रामाण्यम्** इति लेखे द्रष्टव्य ( सार० सु०, २४ व० १ अ०, पृ० ३१-५५ )।

## कातन्त्रव्याकरणस्य परिचय.

कातन्त्रव्याकरणे शब्दसाधनप्रक्रिया व्याकरणान्तरीयप्रक्रियापेक्षया प्रायेण भिन्नैवाव-लोक्यते । लौकिकशब्दसाधनफलकेऽप्यस्मिन् व्याकरणे मतान्तरेण केचन छान्दसा अपि शब्दा अन्वाख्यातास्तेन ग्रन्थकारमते ते लोकप्रयुक्ता अपि मन्तव्या ।

पाणिनिव्याकरणापेक्षयाऽल्पत्वेन व्याकरणस्यास्य **कातन्त्रम्** इति नाम जातम् । ईषद् तन्त्र कातन्त्रम्, ईषदर्थे कुशब्दस्य कादेशः, **"का त्वीषदर्थेऽक्षे"** ( कात० २।५।२५ ) इति । **कौमारादीन्यप्यस्यैव** नामानि । गौडास्तु कालापनाम्ना व्याकरणमिद विदन्ति ।

शर्ववर्माचार्यप्रणीतेऽस्मिन् व्याकरणे सन्धि-नाम-आख्यातात्मकास्त्रयोऽध्याया वर्तन्ते । एषामेकोनविंशतिपादेषु पञ्चपञ्चाशदुत्तराष्टशती ( ८५५ ) सूत्राणा दृश्यते । तत्र सन्धि-नामाऽऽख्याताध्यायानामुपस्थापनक्रमविषये कविराजो निर्दिशति—

सन्ध्यादिक्रममादाय यत्कलापं विनिर्मितम् ।
मोदकं देहि देवेति वचनं तन्निदर्शनम् ॥
( क० च०–मङ्गलाचरणम् ) इति ।

महर्षिवररुचिप्रणीतानि कृत्सूत्राणि दुर्गसिंहेन कातन्त्रसम्बद्धानि विज्ञायैकत्र योजितानि । उक्त च कविराजेन—

"वररुचिना तृनादिक पृथगेवोक्त ततश्च वररुचिशर्ववर्मणोरेकबुद्ध्या दुर्गसिंहेनोक्त-मिति" ( क० च० २।१।६८ ) इति । काश्मीरके कातन्त्रव्याकरणे नामचतुष्टयस्य लौप्रत्ययात्मक सप्तमः पादोऽपि वररुचिकात्यायनप्रणीत ।

अत्र व्याकरणे विभक्तिपदवर्णानामादिमध्यान्तलोपो दृश्यते । शर्ववर्माचार्येण ग्रन्थलाघव समादृतम् तेन क्वचिदनर्थका अपि केचन शब्दाः सूत्रेषु प्रयुक्ता । लोक-प्रामाण्यस्य विशेषतया समादृतत्वादव्ययोपसर्गकारकादिसञ्ज्ञा न व्याख्याता. । किं च

वररुचिमहर्षिणा प्रोक्तमत्र विषये—

वाशब्दैश्चापिशब्दैर्वा शब्दानां ( सूत्राणाम् ) चालनैस्तथा ।
एभिर्यऽत्र न सिध्यन्ति ते साध्या लोकसम्मताः ॥
( द्र०-क० च० १।१।२३ ) इति ।

एतदीयवर्णसमाम्नाये 'अ' इत्यादयो द्विपञ्चाशद् वर्णा पठ्यन्ते । काश्मीरकास्तु एकोनपञ्चाशद् वर्णानङ्गीकुर्वन्ति । वर्णसमाम्नाये प्लुतवर्णानामपठितत्वादनुपदिष्टशब्देन तेषा बोधः क्रियते । व्याख्यातासु स्वरादिकृत्यान्तासु पञ्चसप्ततिमितसञ्ज्ञास्वेका ऊष्मसञ्ज्ञा निरर्थिका, तदीयवर्णविबोधार्थ 'शिट्' इति सञ्ज्ञान्तरस्य व्यवहारात् । वर्णादयो द्वात्रिंशत्तु सञ्ज्ञा अव्याख्याता एव प्रयुक्ता । पाणिनीयमेकशेषप्रकरण युक्त्या निरर्थक विज्ञापितम् । कार्यिण कार्यस्य च प्रायेण समानविभक्तिको निर्देश कृत । व्याख्याकारैरनेकेऽपाणिनीया अपि काव्यादौ प्रयुक्ता शब्दा व्याख्यानबलेन साधवो विज्ञापिता । सूत्रेषु केचन शब्दाः परिभाषाज्ञापनार्थमुपात्ता. ।

कातन्त्रधातुगणे नव गणा दृश्यन्ते—जुहोत्यादेरदादौ पठितत्वात् । तत्र सप्तषष्ट्युत्तर-सप्तदशशतमिता ( १७६७ ) धातवो दण्डकशैल्या पठिता. । ये हि केचिद् धातवोऽर्थादि-भेदप्रदर्शनार्थैकस्मिन्नेव गणे आवृत्त्या पठितास्तेषा पञ्चसप्तति—( ७५ ) सङ्ख्या इतोऽधिका दृश्यते । एव योजनेन द्विचत्वारिंशदुत्तराष्टादशशती ( १८४२ ) धातूनामुपपद्यते । शर्ववर्मा-चार्येणानुशासनसूत्रेष्वेतेषा धातूना मध्ये सप्तदश गणा , वररुचिकात्यायनेन च कृद्भागीय-सूत्रेषु त्रयो गणा प्रयुक्ताः, तेन विंशतिर्मुख्या अवान्तरगणा जायन्ते । प्रकारान्तरेणाभीष्ट-साधनाय चान्येऽपि जपादयो नव गणा उभाभ्या प्रयुक्ता इति कातन्त्रीये धातुपाठे एकोनत्रिंश-दवान्तरगणाः सन्तीति वेदितव्यम् । धातुषु विंशतिरनुबन्धास्तत्तत्कार्यार्थं योजिताः ।

गणपाठ ( प्रातिपदिकशब्दपाठ ) साम्प्रत वृत्तिग्रन्थे एव वर्तते । अनुशासनसूत्रेषु सर्वादीनामेकोनत्रिंशद्गणानामुपयोग कृत., एकविंशतीना शर्ववर्माचार्येण, अष्टानां च वररुचिकात्यायनेन । उणादिप्रकरणे षट्सु पादेषु पञ्चपञ्चाशदुत्तरशतद्वयमिता ( २५५ ) प्रत्ययाः पठिता ।

नमस्कृत्य गिरं ( शिवम् ) भूरिशब्दसन्तानकारणम् ।
उणादयोऽभिधास्यन्ते बालव्युत्पत्तिहेतवे ॥

इत्युणादिप्रकरणारम्भे दुर्गसिंहोक्तौ कस्यचित् कर्तृनाम्नः स्मरणाभावादभिधानपदो-पादानाच्च स्वय दुर्गसिंहेनोणादिसूत्राणि प्रणीतानीति प्रतीयते । दुर्गसिंहकृतलिङ्गानुशासने षडशीतिकारिकासु प्रायेण सप्तदशशतमिताना स्त्रीपुनपुंसकलिङ्गानि निर्धारितानि । ग्रन्थस्यास्य हस्तलेखा बीकानेर-अहमदाबादादिस्थानेषूपलभ्यन्ते । डेक्कनकालेजीयशोधसंस्थान-

पूनातः १६५२ तमे खिष्टाब्दे ग्रन्थोऽयं प्रकाशित.। बालाना विनोदाय श्रीदुर्गसिंहेन ग्रन्थस्यास्य प्रणयने कृतः प्रयासः, अन्ते उच्यते चापि तेन—

आनन्त्यादिह शब्दानां लिङ्गानामप्यनन्तता।
सुवर्णैर्घटितं किञ्चिद् बालानां मुखमण्डनम्॥ इति।

सूत्रधातुगणोणादिलिङ्गानुशासनरूपेभ्यः पञ्चाङ्गेभ्योऽतिरिक्ता कातन्त्रीया परिभाषाः, शिक्षासूत्राणि चापि समुपलभ्यन्ते।

राजस्थानेषु जैना हैमव्याकरणात् पूर्वं कातन्त्रमधीयते स्म। जैनाचार्या बालान् कातन्त्रसन्धिप्रकरणस्य सूत्राणा विकृतरूपाणि सस्कारार्थ पाठयन्ति स्म। कश्मीरराजस्थान-गुर्जरवङ्गोत्कलप्रदेशेषु पूर्वमस्याध्ययनाध्यापने प्रचुरमास्ताम्। श्रीमालवशीयेन सङ्ग्रामसिंहेन शार्ववर्मिककातन्त्रव्याकरणमवलम्ब्य बालशिक्षाख्य व्याकरण प्रणीतम्। परवर्तिभि क्षीरस्वाम्यादिभिर्व्याख्याकारै क्षीरतरङ्गिण्यादिग्रन्थेषु कातन्त्रमत बहुश उद्धृतम्।

**विशेषः**

साम्प्रत कातन्त्रस्योपलब्ध सस्करण दुर्गसिंहेन परिष्कृतं प्रतिभाति। वररुचिना कात्यायनेन शर्ववर्मप्रणीताना सूत्राणा दुर्घटनाम्नी वृत्ति., स्वप्रणीतकृत्सूत्राणा च चैत्रकूटी-नाम्नी वृत्ति प्रणीताऽऽसीद् या साम्प्रतं नोपलभ्यते। नामचतुष्टयाध्यायान्तर्गत 'समास-तद्धित' इति प्रकरणद्वय श्लोकबद्धम्। काश्मीरका राजस्थानीयाश्चानेके कातन्त्रस्य व्याख्यानग्रन्था बालबोधिन्यादयः शारदाक्षरेषु नागराक्षरेषु च बालानामेव कृते प्रायेणोपयोगिन सन्ति, तदुद्देश्येनैवाऽऽचार्यैस्तत्तद्ग्रन्थाना प्रणीतत्वात्। शेषाशपूरणाय कातन्त्रपरिशिष्ट-कातन्त्रोत्त-रादयो ग्रन्था पश्चादाचार्यै रचिताः। अस्य व्याकरणस्य कातन्त्रमन्त्रप्रकाश-कातन्त्र-विभ्रमादयः केचिद् ग्रन्था अवश्यं मननीय किञ्चिद् वैशिष्ट्यमापादयन्ति।

**अत्रेदं विचार्यते—**

व्याकरणस्य वेदाङ्गत्वाद् वैदिका अपि शब्दा यदा व्याकरणेनैवान्वाख्येया वर्तन्ते न केवल लौकिका एवेति, कथ न तर्हि कातन्त्रव्याकरणे वैदिका शब्दा अन्वाख्याताः? इति। वेदेष्वपि बहवो लौकिका. शब्दा. प्रयुज्यन्ते, अतो लौकिकशब्दाना साधनप्रक्रिया जानन्तो विद्वास प्रकृतिप्रत्ययविभागोहनपूर्वक वैदिकशब्दानामपि ज्ञान कर्तुं प्रभवन्त्येवेति वैदिक-शब्दाना विषये यथा तैर्निर्णयः कृतस्तथैवान्यैरपि विज्ञेय इत्येवमभिप्रेत्य वैदिकशब्दानामनु-शासन न कृतमत्र ग्रन्थे इत्युदीरिते जिज्ञासान्तरमिदमुपस्थाप्यते—वैदिकशब्दाना परिज्ञानं यदि लौकिकज्ञाना सकाशात् कर्तुं शक्यम्, तर्हि लौकिकानामपि शब्दाना तत्सकाशात् सुतरा ज्ञान कर्तुं शक्यत एव। एव न काचिदावश्यकता लौकिकप्रयोगसिद्धये शास्त्रारम्भ-स्येति किमर्थमाचार्येण शर्ववर्मणा शास्त्रारम्भे प्रयासः कृत ? इति। विषयेऽत्र कातन्त्रवृत्ति-कारोक्तवचनानुसारेणैतद् वक्तु शक्यते—लौकिकशब्दाना बाहुल्यात् तेषा ज्ञान लक्षणैर्यथा

लाघवेन कर्तुं शक्यते न तथा वृद्धोपदेशपरम्परया तेषामुपदेशः सङ्ग्रहो वा कर्तुं शक्यते इत्यभिज्ञायाऽऽचार्यो लौकिकान् शब्दाननुशास्तीति । यथोक्तम्—

वैदिका लौकिकाश्चैव ये यथोक्तास्तथैव ते ।
निर्णीतार्थास्तु विज्ञेया लोकात् तेषामसङ्ग्रहः ॥

( कात० वृ० १।१।२३ ) इति ।

व्याख्याकारैर्लौकिकशब्दज्ञानस्य व्याकरणमेव साधनं नान्यदिति व्याख्यातम् । वैदिकसम्प्रदायस्य युगमन्वन्तरादिष्वप्यविच्छिन्नत्वात् तेषां वैदिकशब्दानां परिवर्तनं न सम्भाव्यते इति लाघवैकशरणेनाऽऽचार्येण सूत्रैर्न कश्चिदुपायो निर्दिष्टस्तत्सिद्धये ।

एतत्तु वक्तुं समीचीनं प्रतिभाति यद् ग्रन्थगौरवभयाल्लोके तत्तच्छब्दप्रयोगस्य प्रसिद्धिवशाद् वा ये हि लौकिकाः शब्दा व्याकरणग्रन्थेष्वाचार्यैर्नान्वाख्यातास्तेषां तु ज्ञानं वृद्धोपदेशादेव करणीयमिति । तेन नेदं मन्तव्यम्—सर्वे शब्दा लोकादेव ( वृद्धोपदेशादेव ) ज्ञातुं शक्यन्ते न किञ्चित् प्रयोजनं व्याकरणशास्त्रस्येति । कातन्त्रे ये हि शब्दाः प्रदर्शित-प्रकारैर्न साधयितुं शक्यन्ते तेषां ज्ञानं वृद्धोपदेशानुसारेणैव करणीयमिति निर्दिदेश तत्र भवान् भगवान् वृत्तिकारो वररुचिः । ( द्र०-श्लोक , वाशब्दैः—लोकसम्मता इति, पृ० ५ ) ।

## शोधप्रबन्धे विषयस्योपस्थापनयोजना

सातवाहनभूपालो यथाशीघ्रं व्याकरणज्ञानमर्जयत्विति धिया प्रणीतमिदं व्याकरणं विशेषतः कुमाराणाम् ( बालानाम् ) हिताय प्रभवतीति मन्तव्यम् । व्याख्याकारैरनेकत्र वचनैरिदं निर्दिष्टम् ।

कलापचन्द्रस्यारम्भे, †कातन्त्रपरिशिष्टस्य भूमिकायां च शालिवाहनभूपतये व्याकरण-ज्ञानमाविर्भावयितुं शर्ववर्माचार्येण कुमारमाराध्य कातन्त्रं प्रणीतमित्युक्तम् । तत्र शालिवाहन इति पाठो न साधीयान्, किं च कथासरित्सागरादौ पठितः सातवाहन इत्येव पाठ उचितः प्रतीयते । खिष्टतः पूर्वं महर्षिपतञ्जलिना स्वीये महाभाष्ये "सूत्राच्च कोपधात्" (अ०४।२।६५) इति सूत्रीयस्य "सङ्ख्याप्रकृतेरिति वक्तव्यम्" इति वार्त्तिके 'माहावार्त्तिक-कालापक' इति प्रत्युदाहरणद्वयमुपन्यस्तम् । तत्र महावार्त्तिकशब्दवत् कलापकशब्दोऽपि सूत्रवाचकः कोपधश्चावश्यं स्यादिति वक्तुं शक्यते, तत्रैव जातस्याण्प्रत्ययस्य लुगभावात् । स च कालापकशब्दः कातन्त्रव्याकरणस्य नामान्तरमुद्दिश्य प्रयुक्त इति युधिष्ठिरमीमांसकस्य मतमादरणीयं मन्ये । शकसंवत्प्रवर्तकः श्रीशालिवाहनभूपतिस्तु ततः पश्चाज्जातः । एतेनेदं ज्ञायते—पाणिनिपतञ्जलिमहर्ष्योर्मध्यकाले व्याकरणस्यास्य प्रणयनं जातमिति ।

ऐन्द्रव्याकरणस्योपलब्धं यत् "वर्णा अक्षराणि, अर्थः पदम्" इति सूत्रद्वयम्, तस्य कातन्त्रेऽदर्शनात् कातन्त्रमैन्द्रमतमतितरामनुसरतीति वक्तुं न शक्यते । समग्रस्य काशकृत्स्न-

---

† ग्रन्थावेतौ श्रीगुरुनाथविद्यानिधिभट्टाचार्येण सम्पादितौ ।

तन्त्रस्यानुपलब्धिवशादुपलब्धे चांशे पर्याप्तवैषम्यस्य सत्त्वाच्च कातन्त्र काशकृत्स्नतन्त्रस्य सङ्क्षेप इति वक्तु न शक्यते । किं च पूर्वं प्रचलितस्य कृत्स्नस्य व्याकरणशास्त्रस्य सङ्क्षेपरूप कातन्त्रमिति कथन न दोषावह प्रत्युत सङ्गतमिति तर्कलाघवतः प्रतीयते ।

शोधप्रबन्धेऽस्मिन् मया कातन्त्रव्याकरणस्य तद्व्याख्यातृणा तत्र स्मृतानामाचार्याणा च देशकालविषयक विवेचन न कृतम्, तस्य स्वतन्त्ररूपेणानुसन्धेयविषयत्वात् । देशकालादि-परिचयविषये मदीय प्रकाशयिष्यमाणः कातन्त्रव्याकरणशास्त्र का इतिहास नामा ग्रन्थो द्रष्टव्य । व्याकरणस्यास्य ग्रन्थसम्पत्तिर्भूयसी समुपलभ्यते, येनानुसन्धानकर्मणि न जायते विरति । काश्मीरप्रदेशे प्राप्ताना शारदाक्षरमयग्रन्थाना मुद्रण नाद्यावधि जातम्, अपेक्षितसाधनाभावात् । वङ्गाक्षरेषु मुद्रितो ग्रन्थराशिर्मया शोधप्रबन्धेऽस्मिन् मुख्यतः प्रयुक्त , तस्य भूयस्त्वेनोपलम्भात् । नागराद्यक्षरेष्वपि ये ग्रन्था मया कातन्त्रव्याकरणस्य हस्तलिखिता मुद्रिताश्चावलोकिता, प्रायेण तेषामेवात्र परिचयः प्रदत्त । कलापतन्त्रतत्त्वबोधिन्यादय सन्ति केचिदेव ग्रन्था येषा परिचयः सूचीपत्रमवलम्ब्योपन्यस्त ।

अस्य शोधप्रबन्धस्य लेखने दुर्गसिंहकृतकातन्त्रवृत्तेः, दुर्गकृतकातन्त्रवृत्तिटीकाया, त्रिलोचनदासकृतकातन्त्रवृत्तिपञ्जिकाया, कविराजसुषेणविद्याभूषणकृतकलापचन्द्रस्य, हरिरामकृतव्याख्यासारस्य, रमानाथकृताया मनोरमानाम्न्या कातन्त्रधातुटीकायाः, दुर्गकृत-परिभाषावृत्तेः, दुर्गकृतौणादिकसूत्रवृत्ते दुर्गकृतलिङ्गानुशासनसूत्रटीकायाः, कविकण्ठहार-कृतचर्करीतरहस्यव्याख्यानस्य, गोपालाचार्य—चारित्रसिंहकृतकातन्त्रविभ्रमवृत्त्योश्च विशेष उपयोगः कृतः ।

वृत्तिकारशब्देन कातन्त्रसूत्राणा वृत्तिकारो दुर्गसिंह, टीकाकारशब्देन च कातन्त्र-वृत्तिटीकाकारो दुर्गः कातन्त्रधातुसूत्रटीकाकारो रमानाथश्च स्मृत । एतच्च तत्र तत्र प्रसङ्गवशादवसेयम् । त्रिलोचनदासकृतस्य पञ्जीनामकव्याख्यानस्य क्वचित् पञ्जीशब्देन क्वचिच्च 'कात० वृ० प०' इति साङ्केतिकशब्देन व्यवहार कृत । 'कवि०—क० च०' इति सङ्केतद्वयमेकस्यैव प्रमाणस्य प्रसङ्गे व्यवहृतम् । तत्र कवि० इति सङ्केत कलापचन्द्रकार-कविराजसुषेणविद्याभूषणस्यावबोधाय, क० च० इति सङ्केतो निर्दिष्टग्रन्थस्य कलापचन्द्रस्या-वबोधाय प्रयुक्त इति वेदितव्यम् । कातन्त्रपरिभाषावृत्तेः कातन्त्रपरिशिष्टवृत्तेश्च कृते समान एव कात० परि० वृ० इति साङ्केतिकः शब्दो व्यवहृतः, परं तत्र तत्र ग्रन्थकारोल्लेखनेन तत् समाहितमेव । ग्रन्थकारानुद्धरणस्थले विषयप्रसङ्गवशादवसेयम् । सूत्राणा यत्र केवल-मध्यायादिसङ्ख्या प्रदत्ता तानि सूत्राणि कातन्त्रीयाणि वेदितव्यानि, पाणिनीयव्याकरणस्य सूत्राणामध्यायादिसङ्ख्याया पूर्वमष्टाध्यायीपदबोधक 'अ०' इति साङ्केतिक शब्दो व्यवहृतः । कातन्त्रीयसूत्राणा क्रमसङ्ख्या स्वयोजिताध्यायादिसङ्ख्यानुसारेणोपन्यस्ता, वङ्गीयग्रन्थेषु पूर्णाध्यायक्रमेण सूत्रसङ्ख्याया प्रदर्शितत्वात्, न तु पादक्रमेण । राजस्थान-प्राच्यविद्याप्रतिष्ठानजोधपुरतः प्रकाशिताया कातन्त्रसूत्रसूच्या क्वचिदकारादिक्रमस्योपन्यासे

वैषम्यदर्शनात् । कातन्त्रसूत्राणि विषयादिसाम्य प्रदर्शयद्भिः पाणिनीयसूत्रैः सह शीघ्रमेव प्रकाशयिष्यन्ते ।

प्रमाणायापेक्षितानि वचनानि ग्रन्थसन्दर्भश्च मया प्रायेण विषयविवरणेनैव सहोपन्यस्तः, न तु अधस्ताट्टिप्पणीषु । अधस्तात् तान्येव वचनान्यङ्कितानि येषा विषयविवरणेन सहोपन्यासे स्वारस्य नाधिकं प्रतीयते, ग्रन्थसन्दर्भोऽपि एवमेव प्रदर्शित । यत्रोपरि निरुक्तादीतिपदमुद्धृत्य प्रमाणाय तत्रोक्तानि वचनान्यधस्तात् पठितानि, तानि वचनान्यादिपदेनाभिप्रेतग्रन्थान्तराणा न सन्ति किं त्वाऽऽदिपदात् पूर्वं लिखितस्य ग्रन्थस्येति सङ्ख्यामात्रं तत्र प्रदत्तम्, न तु ग्रन्थनाम । यत्र पूर्वं ग्रन्थस्य ग्रन्थकारस्य वा सङ्केतः कृतस्तत्राध्यायादिसङ्ख्यैवोल्लिखिता, न तु ग्रन्थादेर्नाम ।

ग्रन्थोऽयं सप्तस्वध्यायेषु विभक्त । तत्र कातन्त्रसम्बद्धस्य कस्य ग्रन्थस्य क्व प्रणयनं समादरो वा जात इति सामान्यतो निदर्शनाय तत्तत्प्रदेशेषु प्राप्ताना हस्तलिखिताना मुद्रितानां च ग्रन्थाना परिचयः प्रथमेऽध्याये तत्तत्प्रदेशीयवाङ्मयपरिचये सङ्गृहीत । एतेषामुपस्थापने नापेक्षितः कालक्रम । गुर्जरप्रदेशे प्रायेण त एव हस्तलेखा दृष्टा ये राजस्थानेषूपलभ्यन्ते इति राजस्थानीयवाङ्मये एव तेषा कृतः समावेशः । उत्कलाक्षरेषूपबद्धानामुत्कलराज्यसङ्ग्रहालये सुरक्षिताना हस्तलेखाना परिचय उत्कलप्रदेशीयवाङ्मये सग्रथित । होशियारपुरे दिल्लीस्थहस्तलेखसग्रहालये च सुरक्षिता हस्तलेखा कश्मीरेभ्यः समागता इति तेषा काश्मीरकवाङ्मये स्थाने समावेश कृत । तत्तत्प्रदेशीयवाङ्मयमुपन्यस्यास्मिन्नेव प्रघट्टके सम्प्रदायान्तरेऽस्य समादरः कियाञ्जात इति निदर्शनाय क्षीरतरङ्गिण्यादिग्रन्थेषूद्धृतानि कातन्त्रसम्बन्धीनि कानिचिद् वचनान्युपन्यस्तानि । प्राप्ताना सर्वेषा ग्रन्थाना विषयादिपरिचयो विस्तरभिया नोपस्थापितस्तथापि अपेक्षिताशस्य पूर्तये चर्करीतरहस्य-कातन्त्रविभ्रमाख्यग्रन्थयोर्यथासम्भव विस्तरेण परिचय प्रदत्तः । ग्रन्थयोरनयो परिचयप्रदानानन्तर विशेषज्ञानाय कारिका अपि समग्राः सङ्कलिता. । राजस्थानेषु पूर्वमध्ययनाध्यापनयोरुपयुक्तानि कातन्त्रीयसन्धिप्रकरणस्य सूत्राणा विकृतरूपाणि दर्शितानि । तत्र लेखनपठनयोर्दोषसत्त्वात् पाठभ्रशोऽपि सम्भाव्यते । व्याकरणाङ्गाच् शिक्षाख्यमङ्ग वेदस्य यदपि भिन्नम्, तथापि व्याकरणे तदपेक्ष्यते इत्युपलब्धानि कातन्त्रीयशिक्षासूत्राण्यपि वाङ्मयाध्याये सङ्कलितानि ।

वाङ्मयाध्याये उपलब्धाना ग्रन्थाना परिचये उपस्थापिते तत्र व्याकरणविषयः केन क्रमेणोपस्थापित· ? शब्दसाधने के च पारिभाषिकाः शब्दाः पूर्वाचार्याणा समादृताः ? के च स्वय प्रकल्पितास्तत्र लाघवं गौरव वेत्यादिजिज्ञासायाः प्रशमनाय द्वितीयेऽध्याये ग्रन्थक्रमेण कातन्त्रसूत्राणां रचना तेषा क्रम. कार्याणि चोपस्थापितानि । तत्रादौ सन्धिविषये किञ्चिद् विचार्यते-दीर्घादिसन्धिप्रकरणे महर्षिपाणिनिना पूर्वपरयोः स्थाने एक आदेशो निर्दिश्यते । आचार्येण शर्ववर्मणा तु पूर्वस्यैवावर्णस्य दीर्घाद्यादेश निर्दिश्य परस्थो वर्णो

लोप्यते। अकारादयः स्वरवर्णाः स्वतन्त्रा न तूच्चारणादावपरस्य कस्यचिद् वर्णस्य साहाय्यमपेक्षन्ते। एकारादयश्चत्वार (ए, ऐ, ओ, औ) सन्ध्यक्षरसञ्ज्ञका वर्णाः स्वरवर्णद्वयसंयोगेन निष्पन्ना अपि स्वतन्त्रा एव स्वरा स्वीक्रियन्ते। एवमवर्ण एवेवर्णादौ परतो यदि एकारादिरूपमाप्नोतु तर्हि वैचित्र्य किञ्चित् प्रतिभाति, एकारादावकाराद्यतिरिक्तस्यापि वर्णस्य सम्भवात्। इद मन्ये–ह्रस्व एव वर्ण उच्चारणवशाद् दीर्घादिरूप प्राप्नोति तर्हि दीर्घविधौ पूर्वस्थस्य ह्रस्वस्य दीर्घस्य वा वर्णस्य दीर्घरूपे परिणमनमुचितमेव। अवर्णस्यैकारादिवर्णरूपे परिणमनेन एकारादिसन्ध्यक्षरेष्ववर्णस्यैव प्राधान्य वक्तु शक्यते। उभयो पूर्वपरयोर्वर्णयो स्थाने जातो दीर्घादिवर्ण आदेशो मन्यते, पूर्ववर्णस्य जातो दीर्घादिवर्णो विकार इति। अत्र वर्णान्तरप्राप्तिरेव सन्धिरवगन्तव्य। लोकेऽपि दृश्यते–निहते शत्रौ सन्धि, परस्परवार्तया मतैक्ये सति जीवितेऽपि शत्रौ सन्धि सजायते। पाणिनीये कातन्त्रे चानयोरुक्तप्रकारयोः पृथक् पृथगन्यतर प्रकार सन्धेरय निर्दिष्ट इति। सन्ध्यध्यायेऽपेक्षिताः काश्चित् परिभाषा मध्ये उक्ताः।

द्वितीयाध्यायस्य विषयविभागदृष्ट्या नामचतुष्टयमिति नाम कीर्त्यते। यथोच्यते—

शब्दाना साधन यत्र कारकाणा च निर्णय।
समासस्तद्धितो यत्र तच्चतुष्टयमुच्यते ॥

(व० भा० २।१।१) इति।

नामचतुष्टयाध्यायस्य प्राथमिके पादत्रितये स्याद्यन्ता शब्दा ससाधिता। ततश्चतुर्थे कर्त्रादिकारकरूपलक्षणमाश्रित्य प्रवर्तमानाना विभक्तीना निरूपणाय कारकप्रकरण विहितम्। उक्तपादचतुष्टये प्रदर्शिताना स्याद्यन्तपदाना स्यादिप्रकृतीना चैकार्थीभावरूप समासप्रकरण पञ्चमे पादे प्रारब्धम्। षष्ठे च पादे तद्धितानामभिधानलक्षणत्वाल्लोकोपचारेणैव सिद्धौ सत्या तत्सज्ञामनुक्त्वैवाणादितद्धितप्रत्ययाः प्रकीर्तिताः।

सन्धि-नामचतुष्टयाध्यायद्वितये वर्णाना स्याद्यन्तपदाना च कार्यं प्रदर्श्य क्रियापदमाख्यातुमाख्यातप्रकरणमारब्धम्। कातन्त्रसूत्राणा विषयनिर्देशपुरस्सर पादप्रकरणसङ्गतिः श्रीजोगराजेन वर्णिता, तन्मतमुपस्थाप्यते—

सञ्ज्ञाश्च परिभाषाश्च प्रथमे पाद आदिशेत्।
द्वितीये स्वरसन्धि च तृतीये तन्निषेधनम् ॥
वैयञ्जनं चतुर्थे च सन्धि वैसर्गिक परे।
षष्ठे प्रथमवच्चैवं सन्धिप्रकरण जगौ ॥
नाम्न आद्ये स्वरान्तस्य लिङ्गस्य स्यादिनिर्णयः।
स्वरान्तव्यञ्जनान्तस्य द्वितीये युष्मदस्मदोः ॥
तृतीयेऽपि त्यदादीनामित्थं नामपदस्थितिः।
चतुर्थे कारकस्येह विनियोगोऽथ पञ्चमे ॥

समासवृत्तिसिद्धस्य तद्धितेष्वपि वर्तनम् ।
षष्ठेऽथ सप्तमे प्रोक्तलिङ्गात् स्त्रीप्रत्ययात् स्त्रियाम् ॥
आख्यातेष्वाद्ति कालपुरुषार्थनियोजना ।
स्यादुद्देशे द्वितीयेऽपि सनादिप्रत्ययान्तता ॥
ततो विकरणा आत्मनेपरस्मैविनिर्णय ।
तृतीयेऽभ्यासकार्याणि चतुर्थे सम्प्रसारणम् ॥
आदेशागमलोपादि पञ्चमे तु गुणागुणा ।
तत्र षष्ठ सप्तमे सेडनिट्कता ॥
सङ्करोऽष्टम इत्येवमाख्यातिकपदक्रम ।
सचिन्तनीयो धात्वर्थकालभेदाद् विचक्षणै ॥

( श्लो० ३-७, ९-१२ ) इति ।

वररुचिकात्यायनप्रणीते कृदाख्यचतुर्थाध्याये तव्यदादय प्रायेण शत प्रत्यया· प्रोक्ता· ।

एव सूत्र-धातु-गण-उणादि-लिङ्गानुशासनाख्येषु पञ्चाङ्गेषु पूर्वमनुशासनसूत्राणा विषय प्रदर्श्य तृतीयेऽध्याये खिलपाठे पूर्वं धातुपाठ आलोचितः । यत्र प्रयुक्ताना गणानुबन्धाना प्रयोजनादिकमुपन्यस्य रमानाथशर्मकृता धातुसूत्राणा मनोरमानाम्नी टीकामवलम्ब्य षट्सप्ततिधातुविषये विशेष कश्चिद दर्शित । तदनु चतुर्थेऽध्याये गणपाठे कृतो विचार । यत्र सर्वादिषु एकोनत्रिंशद्गणेषु पठिताना शब्दाना पाणिनीयगणेषु पठितेभ्यः शब्देभ्य कियदन्तरमिति निर्दिश्य तेषा युक्तायुक्तत्वविवेकोऽपि प्रायेण कृत । व्यवस्थितः कातन्त्रगणपाठो मया न लब्ध इति वृत्त्यादिव्याख्यानमत्राश्रित्य कार्यं कृतम् । अस्मिन्नेव चतुर्थेऽध्याये दुर्गसिंहप्रणीतानामुणादिसूत्राणा विषयेऽपेक्षित किञ्चिदुदीरितम् । अन्ते च प्रत्ययतत्प्रयोगयो परिज्ञानाय प्रत्ययोदाहरणसूची सङ्कलिता । तत्र प्रयुक्तानामनुबन्धाना गणाना च प्रयोजनादिकमप्युपस्थापितम् । दुर्गसिंहप्रणीते लिङ्गानुशासनेऽपि च कृतो विचारोऽस्मिन्नेवाध्याये समावेशित. ।

अध्यायचतुष्टये व्याकरणस्य पञ्चाङ्गेषु सामान्यतया कृते विचारेऽनुशासनभागस्य षड्विधेषु सूत्रेषु प्रयुक्ताना सञ्ज्ञाना विचार पञ्चमेऽध्याये प्रस्तुत । तत्र पञ्चसप्ततिः परिभाषिताः, द्वात्रिंशच्चापरिभाषिता. = पूर्वाचार्यप्रयुक्तार्थे स्वीकृताश्च सञ्ज्ञा विचारिता । आदौ संज्ञानामावश्यकतादिविषयेऽपि किञ्चिदुक्तम् । सञ्ज्ञाना कार्यबाहुल्यात् स्वतन्त्रे एवाध्याये तद्विषयो वर्णितः । षष्ठे चाध्याये व्याकरणस्याङ्गान्तरभूताना* परिभाषाणा

---

* एकेनैवाऽऽचार्येण पञ्चाङ्गाना प्रायेण प्रणीतत्वाद् व्याकरण पञ्चाङ्गमुच्यते
परिभाषाः वार्त्तिकवचनानि च व्याख्यातृभिर्यथावश्यक निर्दिश्यन्ते ।

प्रयोजनादि परीक्षितम्। परिभाषासग्रहे प्रकाशिता दुर्गसिंह-भावमिश्राभ्यां व्याख्याता: परिभाषा अत्राऽऽधाररूपेण स्वीकृता:। वृत्त्यादिव्याख्यानेषु दृष्टानामितोऽतिरिक्तानामपि परिभाषावचनाना तदन्ते कृतः संग्रहः, येन तत्र व्याख्यातानां परिभाषाणामपूर्णत्वं विज्ञायते।

एतदनु सप्तमेऽध्याये विधिनियमातिदेशाधिकारसूत्रविषये कृतो विमर्श। विधावादेशागमनिपातविकल्पप्रकृतिभावा विचारिता। नियमप्रकरणे व्याकरणमीमांसासम्मत नियमलक्षण विवेचयताऽनुशासनभागे समागताना नियमसूत्राणा प्रयोजनादिक प्रायेण सोदाहरणमुपन्यस्तम्। अतिदेशप्रकरणे कातन्त्रे समादृतानामतिदेशभेदाना ससूत्रोदाहरणं विचार प्रस्तुत। अधिकारप्रकरणे तद्भेदानुपन्यस्य सूत्रेषु तेषा संघटन विधाय ग्रन्थ उपसहृत.। उक्तेषु प्रकरणेषु यथासम्भव पाणिनीयप्रकरणे प्रदर्शितेन कार्येण सह तुलनात्मक परीक्षणमपि न विस्मृतम्।

यद्यपि शारदाद्यक्षरेषु प्राप्ताना केषाचिद् हस्तलिखितग्रन्थाना प्रायेण प्रत्येकमेकैकस्य पत्रस्य निदर्शनायोद्धरण मुद्रण चावश्यकमासीत्, तथापि कश्मीरादिप्रदेशेष्वनुसन्धानकाले 'फोटो कॉपी' व्यवस्थाया: सम्पादनाभावान्नैतदत्र विहितम्।

परिशिष्टभागे कातन्त्रीयानुशासनभागस्य वृत्त्यादिकतिपयेषु व्याख्यानेषु स्मृताना-चार्यान् ग्रन्थांश्चोपनिबध्यास्मिन् शोधप्रबन्धे स्मृतानामाचार्याणा ग्रन्थाना च नामानि तत्परिचयपुरस्सरमङ्कितानि। वृत्त्यादिव्याख्यानेषु स्मृतानामाचार्याणा ग्रन्थानां चानुक्रमणिका परभाविन कस्यचिदाचार्यस्य कालनिर्णये इतिहासलेखकानुपकरिष्यतीति मन्ये। विशिष्ट-शब्दानुक्रमणिकायां समालोचिता:, परिभाषिता, द्रव्यगुणपरिमाणबोधकाश्च शब्दा, अपाणिनीयशब्दादिसूची, उदाहरणानि, व्याख्यातानि सूत्राणि च प्रस्तुतानि। शोधप्रबन्धस्य पञ्चमे परिशिष्टे उपन्यस्तो विशिष्टशब्दसूच्यात्मकोऽयमशोऽवश्यं द्रष्टव्य:। प्रयुक्तानां साङ्केतिकशब्दानां पूर्णरूपाणि, शुद्धिपत्रमपि चान्ते दर्शितम्।

## यात्राविवरणं कृतज्ञताप्रकाशनं च

विद्यावारिधि ( पी-एच्० डी० ) उपाधये पाणिनीयव्याकरणे शास्त्रीयसंज्ञानां तात्पर्यविमर्शः इति विषये १९६७ तमे क्रैस्ताब्दे शोधप्रबन्धमुपस्थाप्य वाचस्पति ( डी० लिट्० ) उपाधये व्याकरणदृष्ट्या कालविषये कश्चिद् विमर्शोऽष्टौ मासान् यावत् कृत:। तद्विषयकग्रन्थानामध्ययनेन विशेषतश्च सारस्वतीसुषमायां ( व० ११ अ० १-४, पृ० ३७-५० ) प्रकाशितस्य डॉ० रामसुरेशत्रिपाठिमहोदयरचितस्य कालतत्त्वाख्यलेखस्या-ध्ययनेन नातोऽधिकमनुसन्धातुमहं समर्थं इत्याकलय्य कातन्त्रव्याकरणानुसन्धाने मनोयोगः कृत.। कार्यमेतद् मान्यानामनुसन्धानसं[illegible]ध्यानामाचार्यश्रीबलदेवोपाध्यायानामादेशेन डॉ० श्रीरामशङ्करभट्टाचार्याणां निर्देशने प्रारब्धम्।

पूर्वं वङ्गलिपेर्ज्ञानाय निर्दिश्य वङ्गाक्षरेषु मुद्रिताना जीर्णावस्था गताना कातन्त्र-व्याकरणग्रन्थानामुपलब्धये प्रशसनीयः किं वाऽविस्मरणीय प्रयासस्तैः स्वय कृत कारितश्च। अध्ययन-व्याख्यान–लेखनकार्येषु व्यापृतमानसैरपि समयेऽनुसन्धानकार्यगतिनिरीक्षणेन, यथाशीघ्र शोधप्रबन्धस्य पूर्तये उत्साहस्य सवर्द्धनेन, मध्ये मध्ये विषयान्तरेऽप्यनुसन्धानपूर्णस्य निबन्धस्य लेखनायोद्बोधनेन, उपस्थापितं लेख समये समुचितं संशोध्य प्रदत्तेनापेक्षित-निर्देशनेन च प्रायेण वर्षत्रय यावदनवरतं तैरत्र कृतः शारीरो वाचिको मानसश्च श्रमः, यस्य परिणामस्वरूपा कार्यपूर्तिमेषम (१९७१) पश्यामि। विश्वविद्यालये त्यागपत्रस्य स्वीकृतौ सत्या नियमानुसारेण कार्यमिद तेषा निर्देशने पूरयितु नासीत् सञ्चालकमहोदयानामभिप्रेतम्। तदानीमपि पूर्ववदेव यैरत्र कृतो मनोयोग, प्रात.स्मरणीयानां वेदव्याकरणसाङ्ख्य-योगन्यायादिविविधविषयपरिशीलनतत्पराणा प्रतिभासारसमर्जितयशसा तेषा गुरुवर्याणां श्रीमता डॉ० रामशङ्करभट्टाचार्यमहोदयाना कार्यमिद स्मार स्मार प्रतिपद हर्षमनुभवामि। तेषामाशीराशिर्मम जीवनस्य श्रेयसे साफल्याय चाल स्यादिति कामयमानोऽतितरा प्रणतोऽह तान् प्रति कृतज्ञता विज्ञापयामि।

डॉ० श्रीरामशङ्करभट्टाचार्याणा त्यागपत्रस्य स्वीकृतावनुसन्धानकार्यमेतद् विश्व-विद्यालये प्राचीनव्याकरणदर्शनागमविभागस्याध्यक्षपदमलंकुर्वता वाचस्पति (डी० लिट्०) उपाधिभाजा माननीयाना डॉ० श्रीरामप्रसादत्रिपाठिमहोदयाना निर्देशकत्वे पूरयितु-मादिष्टोऽहम्। अध्यापन–लेखनादिकार्येषु सततमवहितैर्मध्ये व्याधिमनुभवद्भिरपि तैरत्र विचाराय कृतं कालक्षेप न जातु विस्मरिष्यामि। प्रतिपद जीवनस्य प्रगतये तेषामुदार-चरिताना सान्निध्य प्रकाममाशीराशिं च कामयमानस्तत्कृत जाने, ज्ञास्यामि चापीत्याशासे।

केन्द्रीय-विश्वविद्यालय-अनुदान-आयोगेन १।१२।६८ तमदिनाङ्काद् वर्षत्रयं यावत् प्रतिमासं शतत्रयमुद्रात्मिका कनिष्ठानुसन्धानपारिषदवृत्ति (Junior Research fellowship) स्वीकृत्य चिरमुत्साहः सवर्द्धितः। एतत्कार्यार्थं तत्रत्यानधिकारिणः कर्मकराश्च बहुभि. साधुवादैर्योजयामि।

यात्राप्रसङ्गे तत्तत्संस्थानेभ्योऽधिकारिभ्यश्चात्र प्राप्त यत् साहाय्य तद्विवरणमुपन्यस्य कृतज्ञतां विज्ञापयिष्यामि—

सर्वप्रथमं २२।५।६९ तमे दिनाङ्के जम्मूप्रदेशाय प्रस्थानमकारि। तत्र धर्मार्थट्रस्ट-संस्थाया मन्त्रिमहोदयानां स्वीकृतिमवाप्य श्रीरणवीरसंस्कृतानुसन्धानपुस्तकालये तदीयातिथिभवने निवसता जगद्धरभट्टप्रणीतायाः कातन्त्रलघुवृत्तेरध्ययन सप्तदशदिनानि यावत् कृतम्। तत्रत्यैः पुस्तकालयाध्यक्षमहोदयैर्मान्यैः श्रीमद्भी रामकृष्णमहोदयैर्हस्तलेखानाम-

ध्ययने साहाय्यमाचरता स्थानीयविदुषा परिचयस्य प्रदानेन प्रशस्य यत् किञ्चिदाचरित तदर्थं तेभ्यो धन्यवादान् वितरामि। तत्रत्याना माननीयानामनन्तराम–काकाराम–विश्व-मूर्ति-विहारीलालप्रभृतिमहाभागाना सहयोगोऽविस्मरणीय। उक्तसाहाय्यस्य प्रदात्र्या-स्तस्याः सस्थायास्तत्रत्याधिकारिणां च शुभ कामये। तत्रत्यडोगरीशोधसंस्थानस्या-ध्यक्षमन्त्र्यादिसद्भिर्विदुषा सानिध्ये कातन्त्रव्याकरणस्य निबन्धपाठमायोज्यानुसन्धानकार्य-प्रगतये उत्साह सर्वद्धितस्तदर्थं सर्वे सन्तस्ते धन्यवादार्हा।

श्रीनगरस्थसर्वकारीयानुसन्धानपुस्तकालये संचालकपदमलकुर्वता श्रीमता पृथ्वीनाथ-पुष्पमहोदयाना सहयोग न विस्मरिष्यामि, यैः शारदाक्षरैरुपबद्धाना कातन्त्रकौमुद्यादि-हस्तलेखाना प्रदर्शनस्य पाठनस्य च विशतिदिनानि यावत् कृतः प्रबन्ध। पण्डितप्रवराणा तत्र भवता श्रीदीनानाथयक्षमहोदयाना शारीर वाचिक मानस चोपकारश्रमं कथ विस्मरिष्ये, मान्याना येषामनुग्रहेणैव कश्मीरेषु जात कातन्त्रव्याकरणस्य प्रचार तद्व्यवस्था च ज्ञातवान्। पुस्तकालये पण्डितारदमलकुर्वद्भिर्हस्तलेखाध्ययनेऽपि च तै समयेऽपेक्षितः सहयोगः कृतस्तेभ्यः प्रणामाञ्जलिमर्पयामि। तत्रत्यपुस्तकालयाध्यक्षानुसन्धानाधिकार्यादीन् प्रति कृतज्ञता विज्ञापयस्तस्या· सस्थाया प्रगति कामये। शैवागमपारंगतेभ्य श्रीमद्भ्यो बलजिन्नाथशास्त्रिमहोदयेभ्योऽपि प्रणामाञ्जलिं निवेदयामि, यैस्तत्रत्य कातन्त्रव्याकरणस्य परिचयः प्रदत्त।

राजस्थानप्राच्यविद्याप्रतिष्ठानजोधपुरस्य पुस्तकालये कातन्त्रविभ्रमादीन् बहून् हस्तलेखान् विंशतिदिनपर्यन्तमधीतवान्। मान्यै श्रीमद्भिर्हरीश-लक्ष्मीनारायण-ठाकुरदत्त–विनयसागरप्रभृतिभिर्यैस्तत्राध्ययने कृत साहाय्यम्, सर्वे ते धन्यवादार्हाः। तत्रत्यै सञ्चालक-महोदयैः श्रीमद्भि डॉ० फतहसिहमहोदयैरध्ययनार्थं कृतेनापेक्षितप्रबन्धेनोपकृतोऽह तेभ्यो नमस्काराञ्जलिमावेदयामि।

अखिलभारतीयप्राच्यविद्यासम्मेलने जादवपुरमुपगम्य विविधभाषाविद्भिर्वङ्गीयै श्रीक्षेत्रेशचन्द्रचट्टोपाध्यायमहोदयै· सह कातन्त्रव्याकरणविषये जातेन वार्तालापेन वङ्गेषु कियान् कातन्त्रव्याकरणस्य प्रचारः समभूदिति विषये किञ्चिद् विज्ञातम्। एतदर्थं तान् प्रणामाञ्जलिनाऽर्चयामि। उक्तप्रसङ्गे साहाय्यमवाप्य डॉ० विश्वनाथभट्टाचार्यानपि प्रणमामि।

दिल्लीस्थराष्ट्रियाभिलेखागारस्य निदेशक–उपनिदेशकमहाभागौ धन्यवादार्हौ, याभ्या तत्र कातन्त्रलघुवृत्त्यादिहस्तलेखानामध्ययनाय स्वीकृतिं प्रदायापेक्षित प्रबन्ध कृत। समये ग्रन्थप्रदानेन हस्तलिखितग्रन्थाध्यक्षमहोदयाना साहाय्यं नून प्रशसनीयमिति तेऽपि धन्यवादार्हाः।

अलवरस्थराजस्थानप्राच्यविद्याप्रतिष्ठानस्य शाखाकार्यालयाध्यक्षमहोदयाः श्रीमन्तो

वेणीमाधवमहोदया धन्यवादार्हा, यैः समये कार्यालये उपस्थाय कातन्त्रमन्त्रप्रकाशादिहस्तलेखानामध्ययने साहाय्य कृतम् ।

जयपुरस्थराजस्थानप्राच्यविद्याप्रतिष्ठानस्य शाखाकार्यालयाध्यक्षमहोदया श्रीमन्तो जमुनालालबल्दुआमहोदया धन्यवादार्हाः, येषा निर्देशेन जयपुरस्थग्रन्थालयान्तराणा परिचय प्राप्येप्सितं कार्यं मया सम्पादितम् ।

बीकानेरस्थ–अनूपग्रन्थालयस्याधिकारिणा महाराजस्य वैयक्तिकसचिवाना श्रीबाबूराममहोदयाना प्रबन्धेन तत्रत्या द्वाविंशतिर्हस्तलेखा मयाऽल्पीयस्येव समयेऽधीता ,तदर्थं ते धन्यवादार्हा । बीकानेरस्थराजस्थानप्राच्यविद्याप्रतिष्ठानस्य शाखाकार्यालयाध्यक्षमहोदयाः श्रीमन्तो दाऊदयालमहोदया धन्यवादैः सत्क्रियन्ते, येषामपेक्षितैः सत्प्रयासैरेकस्मिन्नेव दिवसे त्रयोदशहस्तलेखानामध्ययनकार्यं मया सम्पादितम् ।

उदयपुरस्थराजस्थानप्राच्यविद्याप्रतिष्ठानस्य शाखाकार्यालयाध्यक्षमहोदया श्रीमन्तो व्रजमोहनजावलियामहोदया धन्यवादार्हा । येषा सकाशाद् हाडौतीबोलीनामकवाङ्मयेन सह कातन्त्रव्याकरणस्य सम्बन्धविषये किञ्चिज्ज्ञातम् ।

अहमदाबादस्थ–लालभाईदलपतिभाईभारतीयसंस्कृतिविद्यामन्दिरस्य सञ्चालकमहोदयैः श्रीमद्भिर्दलसुखमालवणियाँमहोदयैर्हस्तलेखानामध्ययनायापेक्षित प्रबन्ध विधायाहमतितरामुपकृत , तदर्थं ते नून धन्यवादार्हाः । सस्थाया अस्या अन्यैरप्यधिकारिभि कृतमुपकारभरमङ्गीकुर्वन् सस्थायाः प्रगति कामये ।

विक्रमविश्वविद्यालयीयसिन्धियाप्राच्यविद्याशोधप्रतिष्ठाने श्रीमता रमेशपुरोहिताना चारुप्रबन्धेन कलापदीपिकादीन् हस्तलेखानल्पीयस्येव समयेऽधीत्येष्टमापादितमिति तदर्थं ते धन्यवादार्हा । संस्थाया अन्येषामप्यनुसन्धानतत्पराणा श्रीमता बाबूरामप्रभृतिविदुषा निर्देशोऽविस्मरणीय । सस्थाया· सञ्चालकमहोदयाना स्वीकृतिपत्रे आसीदेषोऽनुबन्ध –
अत्रत्यग्रन्थसाहाय्येन लिखितस्य लेखस्य ग्रन्थस्य वा प्रकाशित प्रतिरूपद्वय सस्थायै निःशुल्क समर्पणीयमिति, तत् प्रकाशकैरवश्य पूरणीयम् ।

होशियारपुरस्थविश्वेश्वरानन्दवैदिकशोधसस्थानस्य सचालकमहोदयाना विश्रुतयशसा वैदिकवाङ्मयपरिशीलनैकव्रताना तपोनिधीनामुदारचरिताना श्रीमता डॉ० विश्वबन्धुमहोदयाना स्थानान्तरेभ्य समागतस्यानुसन्धातृवर्गस्य कृतेऽनुसन्धानावासादे कृतश्चारुप्रबन्धो नूनं प्रतिष्ठापदमर्हति । तै प्रत्यह प्रात साय च स्वास्थ्यसवर्धनाय भ्रमणप्रसङ्गेऽनुसन्धातृवर्गेण सह कृतो विचारस्तत्रापेक्षितः प्रदत्तो निर्देशश्च कस्यचिदप्यनुसन्धातु. श्रेयसेऽलमिति मन्ये, तेषा निर्देश श्रेयस्कर मन्वानोऽवनतशिरस्कः कृतज्ञता विज्ञापयामि । तत्रत्या ग्रन्थाध्यक्षमहोदया श्रीमन्त श्यामलालमहोदया· क्यूरेटरपदमलङ्कुर्वन्तः श्रीमन्तः के० वी० शर्ममहोदया अपि धन्यवादार्हाः, यैः समयेऽपेक्षितं ग्रन्थजातमुपस्थाप्य निर्देशान्तरप्रदाने-

नाहमनुगृहीतोऽस्मि । श्रीमता वीरेन्द्रशर्म–कन्हैयालालपाराशर–वेदप्रकाशादीनामपि सहयोगोऽविस्मरणीयः ।

नवनालन्दास्थपालिशोधसस्थानस्य सञ्चालकैः परमादरणीयैः श्रीमद्भिर्भिक्षुजगदीश-कश्यपमहोदयैः कृतेनाऽऽवासाध्ययनयोः प्रबन्धेन तोषमवाप्य तेषा चरणकमलद्वय श्रद्धया स्पृशामि । तत्रत्यैर्ग्रन्थाध्यक्षादिमहोदयैः समयेऽपेक्षितमुपस्थाप्य मदीप्सित पूरितमिति तेऽपि धन्यवादार्हा ।

श्रीकामेश्वरसिहदरभङ्गासस्कृतविश्वविद्यालयस्य मिथिलाशोधसस्थानस्य च ग्रन्थाध्यक्ष-महोदयाभ्या यथाशक्ति साहाय्यं कृतमिति तावपि धन्यवादैरलङ्क्रियेते ।

भुवनेश्वरस्थ–उत्कलराज्यसग्रहालयस्य क्यूरेटरपदमलकुर्वता श्रीमता नीलमणिमिश्र-महोदयाना निर्देशस्तत्रत्यानामुत्कलाक्षरनिबद्धाना ताडपत्रीयकातन्त्रीयहस्तलेखानामध्ययनाय परमो हितावह सजातः । वैद्यप्रवराणा स्वनामधन्याना श्रीमता मानगोविन्दमहोदयाना साहाय्येनाधमर्णता नीतोऽय जन । अध्यापनकार्ये आसक्तैरप्युदारचरितैर्यैरुत्कलाक्षराङ्कित-ताडपत्रीयहस्तलेखाः साहाय्यान्तरानपेक्षयैव मत्समक्ष पठिताः । अविस्मरणीयाभ्यामेताभ्यां धन्यवादान् वितीर्य सन्तोषलेशमावहामि । तत्रत्याः सम्पादकमहोदया श्रीमन्तो दुःखिश्याम-पट्टनायकमहोदया अपि धन्यवादार्हा , यैः पूर्वं तत्रत्यकातन्त्रहस्तलेखान् ससूच्य तान् पठितुमह प्रेरित । पुरीवास्तव्याभ्या परमादरणीयाभ्या श्रीमद्भ्यां बलरामकोटमठाधीश–चिन्ता-मणिमहोदयाभ्यामस्ति मे प्रणामाञ्जलि , ययोरनुग्रहेण भुवनेश्वरस्थहस्तलेखानामध्ययनकार्यं मम सम्पन्नम् ।

श्रीमद्भिर्जगन्नारायण–यश पालप्रभृतिभिर्मित्रवर्यैरत्र यत् कृत साहाय्य तदर्थं ते धन्यवादार्हा· ।

पर्यवसाने प्रकाशकस्य सम्पूर्णानन्दसस्कृतविश्वविद्यालयस्याधिकारिणो वन्दनीयाः, यैः शोधप्रबन्धस्यास्य महत्त्वमुपयोगिता चाङ्गीकुर्वद्भिर्ग्रन्थप्रकाशनेन शाब्दिकानुपकुर्वद्भि कातन्त्रव्याकरणस्य प्रचाराय प्रसाराय च प्रशसनीयः कश्चित् प्रयास आचरितः । कार्येऽस्मि-न्ननुसन्धानसस्थाने निदेशकपदमलंकुर्वता वाचस्पति-वागीशोपाधिभाजा समादरणीयानां डॉ॰ भागीरथप्रसादत्रिपाठिमहोदयाना मनोयोग. सतत स्मरणीय., स्पृहणीयः, हृदयेनाभि-नन्दनीयश्चेति ते प्रणतेन शिरसाऽभिवाद्यन्ते । मुद्रणकार्ये कौशलं दर्शयद्भ्यः सीसकाक्षरादि-योजकेभ्योऽपि धन्यवादान् वितरन् परमा मुदमावहति—

गुरुपूर्णिमा, स॰ २०३२<br>दिनाङ्कः २३।७।७५<br>वाराणसी

विदुषामाश्रवः<br>**जानकीप्रसादद्विवेदः**<br>अनुसन्धानसहायकः



# विषयानुक्रमणिका

—.०:—

—.०.—



—:०:—

| | | |
|---|---|---|
| **गणपाठ-उणादिसूत्र-लिङ्गानुशासनसूत्राणां विमर्शः** | **चतुर्थः** | **१२३-५९** |



—:०:—

| | | |
|---|---|---|
| **कातन्त्रीयसंज्ञाविमर्शः** | **पञ्चमः** | **१६०-९२** |



—:०:—

| | | |
|---|---|---|
| **कातन्त्रीयपरिभाषाविमर्शः** | **षष्ठः** | **१९३-२२०** |

॥ श्रीमङ्गलमूर्तये नमः ॥

# कातन्त्रव्याकरणविमर्शः

## मङ्गलाचरणम्

स्मारं स्मारं विमलमनसा ज्ञानरत्नाकराणाम्,
यन्माहात्म्य लसति विदुषां कीर्तिवल्ली धरायाम् ।
भक्त्या यस्याहमिह निरतो रम्यकातन्त्रतन्त्रे,
तस्मै कस्मैचिदतिमहसे श्रद्धया स्यान्नतिर्मे ॥ १ ॥

## प्रथमोऽध्यायः=कातन्त्रवाङ्मयम्

### व्याकरणस्य सङ्क्षेपेण कश्चित् परिचयः

परब्रह्मणो निःश्वासीभूतस्य वेदस्य शिक्षा-कल्प-व्याकरण-ज्यौतिषच्छन्दोनिरुक्तात्मकेषु षट्स्वङ्गेषु वेदार्थज्ञाने सन्देहाभावाद्युपपादनेन साक्षादुपकारकत्वात् प्राधान्यमाम्नायते व्याकरणस्य । व्याकरणाध्ययनस्य रक्षादिप्रयोजनानि प्रदर्शयता महाभाष्यकारेण पस्पशाह्निके लाघवमपि प्रयोजनमेकमुपस्थापितं तस्य । किं बहुना—'अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः' (पु० परि० पा०, परि० ९५) इति प्रवादः प्रसरति वैयाकरणनिकाये, समाद्रियन्ते च प्रायेण प्रवचनपद्धतौ शब्दसङ्क्षेपसरणिं शाब्दिकाः । तथापि 'वृक्ष' शब्दस्य बोधनाय 'क्ष' इति शब्द व्यवहरतो न किञ्चिद् वैदग्ध्यं प्रस्फुरति, शब्दलाघवोपयोगस्यासार्वत्रिकत्वात् । अत एव शब्दसाधनप्रसङ्गे सामान्यरूपेण कञ्चिद् विधिमादावुक्त्वा तस्य प्रपञ्चः प्रदर्श्यते आचार्यैः । उच्यते च महाभाष्ये—

"कश्चिदुत्सर्गः कर्तव्यः कश्चिदपवादः कथंजातीयकः पुनरुत्सर्गः कर्तव्यः कथंजातीयकोऽपवादः ? सामान्येनोत्सर्गः कर्तव्यः, तद्यथा—'कर्मण्यण्' (अ० ३।२।१)। तस्य विशेषेणापवादः, तद्यथा 'आतोऽनुपसर्गे कः' (अ० ३।२।३) इति" (पस्प०, पृ० ३५) इति।

व्याकरणे चैष उत्सर्गापवादरूपो नियमः सर्वत्र समाद्रियते । उक्तं च हेलाराजेन—'लक्षणप्रपञ्चाभ्यां हि व्याकरणम्' (वा० प०-प्र० प्र० ३।७।१४७) इति । प्रपञ्चप्रदर्शने लाघवेन कार्यं कर्तुं न शक्यते किं वाऽपेक्ष्यते, अत एव न्यासकारः[१] कारकप्रकरणेऽपादानसञ्ज्ञायाः प्रपञ्चप्रसङ्गे समुदीरयति—

---

१. काशिकाया एक न्यासाभिधं व्याख्यानम्, यस्य नामान्तरमस्ति काशिकाविवरणपञ्जिकेति । जिनेन्द्रबुद्धिना प्रणीतमिदं व्याख्यानम् ।

'न च प्रपञ्चे गुरुलाघवं चिन्त्यते'।

( १।४।२५ ) इति।

उक्तकथनस्यायमेवाऽऽशयः—व्याकरणेऽपि केचिदाचार्याः शब्दसाधनार्थं प्रदर्शनीयेषु नियमेषु क्वचिल्लाघवमाश्रयन्ते केचिच्च गौरवमेव। श्रूयते च व्याकरणस्य पूर्वतनेषु ग्रन्थेषु लौकिकवैदिकोभयविधाना समेपा शब्दाना साधनार्थं लक्षणानि नियतान्यासन्। ततोऽर्वाचीनैर्वैयाकरणैः केचिन्नियमाः परित्यक्ता अशतो वा गृहीताः। अतस्तेषा ग्रन्थाः सङ्क्षिप्ता एव साम्प्रतमुपलभ्यन्ते। क्रमिकसङ्क्षेपपरिज्ञानार्थमिदमेव वचनमलम्—

समुद्रवद् व्याकरणं महेश्वरे तदर्धकुम्भोद्धरणं बृहस्पतौ।
तद्भागभागाच्च शतं पुरन्दरे कुशाग्रबिन्दूत्पतितं हि पाणिनौ॥

( उद्धृ०—व्याकरणदर्शनेर इतिहासादौ ) इति।

इदानीन्तने काले उपलब्धेषु व्याकरणेषु पाणिनीयमेव व्याकरण विजयते। तत्र चैतादृशी शब्दसाधनसरणिः समादृता या हि सर्वेषा शाब्दिकानामभ्यन्तरं चमत्करोति। तदीयश्चैकोऽपि वर्णो नानर्थक इति समुद्घोषयति महाभाष्यकारः ( द्र०-म० भा० १।१।१, ६।१।३७), प्रतिपादयति च न्यासकारोऽपि। तथा हि उक्तम् -

"इङ्गितेनोन्मिषितेन महता वा सूत्रप्रबन्धेनाऽऽचार्याणामभिप्रायो लक्ष्यते" ( १।१।७ ) इति।

तेन यत्र क्वचिदाचार्यः प्रकारान्तरमाश्रीयते तत्र नूनमेव किञ्चित् कारण प्रकल्प्यते व्याख्याकारैः। यथा "प्रत्ययः" ( अ० ३।१।१ ) इति सञ्ज्ञाधिकारसूत्रमेकवचनान्तमेवोपात्तमाचार्येण पाणिनिना, तदन्तर्गत च "तद्धिताः" ( अ० ४।१।७६ ) इति सूत्रं कथ बहुवचनान्त कृतमित्यत्र व्याचक्षते व्याख्याकाराः—

"तद्धिताः" इति बहुवचनान्तस्योपादानेन सूत्रानुक्ताना वार्त्तिककारप्रदर्शिताना 'ञ-अञ्-डिमच्' प्रत्ययानामपि ग्रहणं [1]भवतीति

**शब्दलाघवमर्थलाघवं च**

लघोर्भावः लाघवम्। लघु + अण् ( इगन्ताच्च लघुपूर्वात्, अ० ५।१।१३१ ) लोकव्यवहारस्य लाघवेन सम्पादनार्थं शब्दाना प्रयोगः क्रियते जनैः। तत्र साधुशब्दाना प्रयोगेण धर्मोऽवाप्यते इति शिष्टाः साधुशब्दाना ज्ञानायातितरा यतन्ते। कस्यचिद् विषयस्य ( अर्थस्य ) स्पष्टमवबोधनार्थं कदाचिद् बहवः कदाचिच्चाल्पीयास एव साधुशब्दाः प्रयुज्यन्ते। एषा लौकिकी प्रवृत्तिर्यत् क्वचिद् व्यवहारे विस्तरस्य क्वचिच्च संक्षेपस्य समादरः क्रियते इत्यर्थः। प्रायेण विस्तरानन्तरमेव संक्षेप आश्रीयते। तथा हि—

१. एकवचन एव कर्तव्ये यद् बहुवचनं क्रियते तस्यैतत् प्रयोजनम्—अनुक्ता ये तद्धिता लक्षणवाक्यैरनभिहितास्तेषामपि परिग्रहो यथा स्यात्, यथा—पृथिव्या ञाञौ ( म० भा० ४।१।७६–वा० ) इत्यादि न कर्तव्यं भवति ( न्या० ४।१।७६ ) इति।

विस्तीर्य हि महज्ज्ञानमृषिः संक्षेपतोऽब्रवीत् ।
इष्टं हि विदुषां लोके समासव्यासधारणम् ॥
( म० भार० १।५१ ) इति ।

लाघवेन साधुशब्दाना ज्ञानं व्याकरणेन जायते । व्याकरणाध्ययनस्य प्रयोजनानि ब्रुवता महाभाष्यकारेण लाघवेन शब्दज्ञानमपि तस्यान्यतम प्रयोजनं निर्दिष्टम्[1] । प्रकृति-प्रत्ययविभागरूपया व्याकरणस्य प्रक्रियया साधुशब्दाना ज्ञान यथा लाघवेन जायते न तथा शास्त्रान्तरेणेत्यर्थः । अध्यापनार्थमुपदेशार्थं वा ब्राह्मणेन शब्दराशेर्ज्ञानमवश्य करणीयं भवति । शब्दाना चाऽऽनन्त्यात् तेषा प्रतिपदपाठापेक्षया व्याकरणशास्त्रोक्तलक्षणैः साधुत्वोपदेशः सुकर । लक्षणैरुपदेशे कृतेऽवश्यमाचार्यैः सिद्धशब्दराशेः सम्पूर्ति कर्तुं शक्यते । प्रतिपदपाठाऽऽश्रयणेन तु अनन्तशब्दराशेर्ज्ञान न सम्भाव्यते । तथा हि—

ऋषयोऽप्युपदेशस्य नान्तं यान्ति पृथक्त्वशः ।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥
( शाब० भा० २।१।७ ) इत्युक्तम् ।

पाणिनीयव्याकरणे यथा "एक पूर्वपरयोः" ( ६।१।८४ ) इत्यधिकारे "वृद्धिरेचि" ( ६।१।८८ ) इति सूत्रेण पूर्वपरयोरवर्ण–एचोर्वृद्धिरेकादेशो भवतीति निर्दिष्टे 'देवैश्वर्यम्, गङ्गौघः' इत्येतादृशेषु सर्वेषु शब्देषु वृद्धिकार्यं प्रवर्तते ।

व्याकरणशास्त्रे शब्दसाधुत्वस्योपदेशाय यो हि अणादिप्रत्याहारवृद्धिसंज्ञादिप्रयोग, सूत्रान्तरेषु इष्टशब्दानामनुवृत्तिश्च दृश्यते, तत्सर्वमपि लाघवोद्देश्येनैव क्रियते । अक्षर-समाम्नायस्योपदेशो लघ्वर्थमङ्गीक्रियते[2] आचार्यैः । यावन्त उपायाः समाश्रिता व्याकरण-शास्त्रे लाघवेन शब्दज्ञानार्थम्, तेषु संज्ञाप्रयोगरूपेणोपायेन लाघवविशेषो[3] दृश्यते । संज्ञा=नाम । लोकेऽपि हस्तपादादिविशिष्टायाः कस्याश्चिदाकृतेर्देवदत्तादिनामोच्चारणेन व्यवहारे सारल्य लाघव चोपजन्यते । किं च देवतादीना नामानि अवश्य विज्ञेयानि, तज्ज्ञानमन्तरा मन्त्रार्थतत्त्वमधिगन्तु न शक्यते इति शौनकेन सकेतितम् । तथा हि—

अवश्यं वेदितव्यो हि नाम्नां सर्वस्य विस्तरः ।
न हि नामान्यविज्ञाय मन्त्राः शक्या हि वेदितुम् ॥
( बृ० दे० १।८० ) इति ।

नामकरणमेकः सस्कार एव निश्चितो भारतीयैः । व्याकरणे संज्ञामन्तरा नियमा लक्षणानि वा निर्धारयितुं न शक्यन्ते इति सक्षेपः । संज्ञाप्रयोगमन्तरैवाह व्याकरणग्रन्थं

१. रक्षोहागमलघ्वसन्देहा प्रयोजनम् ( म० भा०, पस्प०, पृ० १३ ) ।
२. वर्णज्ञान वाग्विषयो यत्र च ब्रह्म वर्तते ।
तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते ॥ ( म० भा०–वा०, प्रत्या०, पृ० १२६
३. शब्दव्यवहारो लघुस्ततोऽपि लघीयो नाम ।
( म० भा० प्र० ५।१।२७ ) ।

रचयिष्यामीति कृतप्रतिज्ञोऽपि चन्द्राचार्यं सफलता नाधिजगाम ( द्र०–म० प०, व०७, सं० ८-९, पृ० १७८–७९ ) ।

क्वचिद् व्याकरणे शब्दाना क्वचिच्चार्थस्य लाघव दृश्यते । पाणिनीयव्याकरणे सूत्रवचनेषु शब्दलाघवमङ्गीक्रियते, संज्ञादिप्रयोगे क्वचिदर्थलाघवमपि । कतिपयेषु शब्देषु अर्थवैपुल्यस्य समावेशः शब्दलाघवम् । ते च शब्दा विविधान् नियमान् ज्ञापयन्ति । एतेन ज्ञायते–प्रयुक्तेषु कतिपयेष्वेव शब्देषु ईप्सितमर्थसर्वस्वं निहितं वर्तते इति[1] । भाष्यादौ व्याख्यातमर्थजात सूत्रवचनेष्वेव वर्तते, व्याख्याकारैः स्पष्टमवबोधाय शब्दान्तर-बाहुल्यस्य प्रयोगः क्रियते इत्यवगम्यते । तथा हि—

सूत्रेष्वेव हि तत्सर्वं यद् वृत्तौ यच्च वार्त्तिके ।
सूत्रं योनिरिहार्थानां सूत्रे सर्वं प्रतिष्ठितम् ॥
( त० वा० ३।३ ) इति ।

येषामाचार्याणा शब्दलाघवे समादरबुद्धिरासीत् ते शब्दप्रयोगेऽर्धमात्राया अपि लाघवे संजाते पुत्रोत्सवमनुभवन्ति स्म । पुत्रोत्सवोऽभीष्टार्थसिद्धिद्योतक, तद्वदर्धमात्रा-लाघवेनार्थसिद्धेः सम्पत्तिमधिगच्छन्ति स्मेत्यर्थ. । एतदभिप्रायेणैवैषा प्रसिद्धिर्वर्तते वैया-करणनिकाये–अर्धमात्रालाघवेन पुत्रोत्सव मन्यन्ते वैयाकरणाः ( परि० शे०, परि० १३३ ) इति । परमदः शब्दलाघवं कस्यचिद् विषयस्य प्रपञ्चप्रदर्शने, पर्यायशब्दाना प्रयोगे च [2]नाऽऽद्रियते । प्रपञ्चस्य प्रदर्शनेन विषयस्य सावयव ( सविभागम् ) ज्ञानमबुधानामपि जायते इति तत्र शब्दबाहुल्यस्य प्रयोग उपादेय एव मन्यते । यथा–पूर्वाचार्यप्रदर्शितो-पादानसज्ञाया विस्तरः पाणिनिना कथमादृत ? तस्य बहिष्कार खण्डन वा कथ स न कृतवानिति विचारणाया कातन्त्रविस्तरकारेणोक्तम्–कस्यचिन्मतस्य खण्डनाय बुद्धेर्द्वैगुण्य-मपेक्ष्यते इति । अयमाशयः—प्रपञ्चस्याप्रदर्शनेन वर्ण्यविषयस्य साकल्येनावबोधो न सम्भ-वति, तस्मात् प्रपञ्चस्य समाधानं प्रकारान्तरेण विधाय तत्खण्डनं न कार्यम्, किं चापेक्षितः प्रपञ्चः प्रदर्शनीय एव । तथा हि—

प्रत्याख्यातुमिहाऽऽख्यातमिति तन्त्रान्तरोदितम् ।
स्वीकर्तुमथवाऽस्माकं पक्षपातो न विद्यते ॥

किं च—

तन्त्रान्तरप्रणीतानां सूत्राणां परमाग्रहात् ।
प्रत्याख्यानेन यत्नस्य द्वैगुण्यमुपजायते ॥
( द्र०–म० प०, व० १२ सं० ६ ) इति ।

---

१ परिभाषेन्दुशेखरादौ सूत्रवचनज्ञापितानि परिभाषारूपाणि दृश्यन्ते ।

२ न च प्रपञ्चे गुरुलाघव चिन्त्यते ( न्या० ३।४।२५ )
पर्यायशब्दाना गुरुलाघवचर्चा नाऽऽद्रियते ( सीर० परि० वृ०, परि० १२२ ) ।

तदेव शब्दलाघवमाद्रियते येनार्थज्ञाने न भवति काचिद् हानिः। यथा वृक्षरूपस्यार्थस्य बोधो न सम्भाव्यते 'वृ' शब्दस्य 'क्ष' शब्दस्य वा प्रयोगेणेति तदर्थबोधाय न तच्छब्दः प्रयुज्यते। न च तेन प्रकारेण प्रयोक्तुर्वैदग्धी काचित् परिस्फुरति। अर्थबोधो झटिति स्यादित्येतदर्थमीषदपेक्षिता नियमतोऽनपेक्षिताश्चापि शब्दा यत्र प्रयुज्यन्ते तदर्थलाघवम्। अनुवर्तनीयशब्दस्यैकत्र पाठे प्रतिसूत्रमपठितत्वेनोच्चारणे पाठे वा भवति लाघवम्, परमर्थावबोधकालेऽनुवर्तनीया अपठिताः क्रियाशब्दाश्चावश्य बुद्धिपथमानीयन्ते, तदैवार्थबोधो जायते।

शब्दलाघव व्यवहारे यथा शब्दसक्षेपमातनोति न तथाऽर्थलाघवम्। अर्थलाघवमर्थज्ञाने सारल्यमाहोस्विल्लाघवमपेक्षते। तत्र चासन्देहोपपादनाय मन्दधीबोधनाय च बहुत्र विभागशः सूत्राणि प्रणीयन्ते, शब्दबाहुल्य चाऽऽश्रीयते। एतच्चार्थलाघव कातन्त्रे प्रतिष्ठितम्। दृश्यते च तत्र—

"**ए अय्, ऐ आय्, ओ अव्, औ आव्**" (१।२।१२-१५) इति सूत्रचतुष्टयम्, न च तेषामेकस्मिन् सूत्रे पाठः कृतः। तत्र वृत्तिकारेण हेतु प्रदर्श्यते—"**एतेषु विसन्धिः पृथग्योगश्च स्पष्टार्थः**" (कात० वृ० १।२।१५) इति। छन्दोबद्धत्वात् तद्धितसमासप्रकरणयोर्नियमोऽस्य बाहुल्येन प्रवर्तते, अत एव पञ्जीकारेणोक्तम्—

"**समासस्तद्धितश्चैव सुखप्रतिपत्त्यर्थमनुष्टुब्बन्धेन विरचित इत्यत्र विज्ञेयग्रहणम्। एवमुत्तरेष्वपि योगेषु शब्दलाघवं न चिन्तनीयम्, अर्थप्रतिपत्तिलाघवस्य शर्ववर्मणोऽभिप्रेतत्वात्**" (पञ्जी २।५।५) इति।

लौकिकशब्दव्याख्यानपरं चतुर्दशशतसूत्रेषु (८५४+५४६=१४००) निबद्धं शर्ववर्म-कात्यायनाभ्या प्रोक्तमिद व्याकरणं पाणिनीयग्रन्थपरिमाणापेक्षया काशकृत्स्नग्रन्थपरिमाणापेक्षया वाऽल्पत्वात् कातन्त्रमुच्यते। ईषत् = सङ्क्षिप्तम्, तन्त्रम् = सूत्रम्, तन्त्र्यन्ते व्युत्पाद्यन्ते शब्दा येन तदिति व्युत्पत्त्या। ईषदर्थे 'कु' शब्दस्य 'का' आदेशः (का त्वीषदर्थेऽक्षे, कात० २।५।२५)। बोधप्रक्रियाया अपि क्वचिद् ग्रन्थेऽस्मिन् दृश्यते सक्षेपः। विषयदृष्ट्या तु व्याकरणशास्त्रस्यैवात्र संक्षेपः सन्निहित इति वक्तुं शक्यते।

तस्यैव कातन्त्रस्य कियद् वाङ्मयमासीत्? साम्प्रतं च कियदुपलभ्यते? तस्य च बाहुल्येन प्रचारः क्व जातः? का चोपयोगिता? कियाश्च प्रभावस्तस्य वर्तते व्याकरणान्तरेषु इत्यादिजिज्ञासया कर्तृत्वविचारोपन्यासपुरस्सरमादौ वङ्गीय तस्य वाङ्मयमुद्दिश्य किञ्चिद् वक्तुमिष्यते।

### कातन्त्रव्याकरणस्य कर्तृत्वविचारः

उपलब्धकातन्त्रसूत्राणा प्रणेताऽऽचार्यः शर्ववर्मा इति प्रसिद्धिः। यथोक्तं टीकाकारेण—"**तत्र भगवत्कुमारप्रणीतसूत्रानन्तरं तदाज्ञयैव श्रीशर्ववर्मणा प्रणीतं सूत्रं**

**कथमनर्थकं भवति"** ( कात० वृ० टी० १।१।२ ) इति। श्रीसुषेणविद्याभूषणेनैतद्-व्याकरणस्य रचनाया ऐतिहासिक वृत्तमुपस्थापयतोक्तम्—राज्ञ्या साक्षेपं प्रबोधितो राजा शालिवाहनोऽचिरेणैव कालेन वैयाकरणो भवेदिति कृतसङ्कल्पेन शर्ववर्माचार्येण भवानीसुतं स्वामिकार्तिकेय समाराध्य ततो व्याकरणमिद सम्प्राप्तमिति।[१]

कातन्त्रे सन्धि-नाम-आख्यातात्मकं यदध्यायत्रितयमुपलभ्यते तस्य क्रमेणोपस्थापनस्य निमित्त **'मोदकं देहि देव'** इति वचनमेव मनुते कविराजः[२]। तदित्थ विज्ञेयम्—मोदकमित्यत्र 'मा+उदकम्' इति गुणसन्धिर्वर्तते, तेन सन्धिकार्यमादौ प्रदर्श्य 'मोदकम्' इत्यस्य नामपदत्वान्नामचतुष्टय विवेचितम्। तदनु 'देहि' इत्याख्यातपदत्वादाख्यातिकं सर्वं कार्यं सङ्क्षेपतः समुपस्थाप्य ग्रन्थ उपसहृत.।

दुर्गसिंहादिभिः 'परे, केचिद्' इत्यादिशब्दै पूर्वाचार्याणा स्मरणात् ततः प्रागपि बहवो वृत्तिकारा अभूवन्निति विज्ञायते। यथा केचिदिति—

**१—ऐस्करणादतिजरसैरिति केचित्। २—केचित्तास्मादिति किम्? इमैर्गुणैः सप्तर्षयः स्वर्गं गताः** ( कात० वृ० २।१।१८, ३।३८ )। **३—केचिदनृच्छ्वोरिति पठन्ति, ऋच्छेर्नाम्यादेरुकारान्तस्य च न भवतीत्यर्थः** ( कात० वृ० टी० ३।२।१६ )।

पर इति—**१. पराभिप्रायेणेति कुलचन्द्रः** ( कवि० २।१।३५ ) इत्यादि।

तत्र पूर्वं शर्ववर्माचार्येण ग्रन्थस्यास्य वृत्ति. कृतेति गुरुपदहालदारेण निर्दिष्टम्[३]। पर तत्परिचयोल्लेखाभावाद् विशेषो वक्तु न शक्यते। अनन्तर महर्षिवररुचिना दुर्घटवृत्तिः प्रणीता। तत्राऽऽदावुच्यते—

---

१. राजा कश्चिन्महिष्या सह सलिलगत. खेलयन् पाणितोयै,
सिक्तस्ता व्याहृतोऽसावतिसलिलतया मोदक देहि देव!
मूर्खत्वात्तत्र बुद्ध्वा स्वरघटितपदं मोदकस्तेन दत्तो
राज्ञी प्राज्ञी तत. सा नृपतिमपि पतिं मूर्खमेन जगर्ह॥

पुरा किल श्रीशालिवाहनाभिधान बसुधाधिप झटिति व्युत्पादयितु प्रतिश्रुतवता भगवता शर्ववर्माचार्येण कुमाराभिधानो भगवान् भवानीसुतस्तपसा समाराधित, स च तदाराधनाधीनतामुपगत. सन् निज- व्याकरणज्ञानमाविर्भावयितु पद्यपादरूप सूत्रमिदमादिदेश— सिद्ध इत्यादि ( कवि० १।१।१ ) इति।

२. सन्ध्यादिक्रममादाय यत्कलाप विनिर्मितम्।
मोदक देहि देवेति वचन तन्निदर्शनम्॥
( कवि०—मङ्गलाचरणप्रसङ्गे ) इति।

मोदकं देहीति पाठो वस्तुतः क्वत्यः इति न विद्म.। कथासरित्सागरे तु 'मोदकैर्देव! परिताडय' इति पाठो दृश्यते ( द्र०—ल० १। त० ६। श्लो० ११४ )। बृहत्कथादौ सम्भाव्यते एष पाठः। कविराजवचने तूक्तानुपूर्वीकः पाठो वर्तते। अस्तु, उभयत्र सन्धिनामाऽऽख्यातरूपक्रमे न कश्चित् सन्देहो वर्तते।

३. जिनि कातन्त्रेर विस्तस्वृत्ति लिखियाछेन तिनि सर्ववर्मार नाम करेन ना केन ( व्या० द० इति०, पृ० ४२७ ) इति।

देवदेवं प्रणम्यादौ सर्वज्ञं सर्वदर्शिनम् ।
कातन्त्रस्य प्रवक्ष्यामि व्याख्यानं शार्ववर्मिकम् ॥ इति श्लोको मङ्गलाचरणे उक्तः, स एव दुर्गसिंहेनापि ग्रन्थस्य निर्विघ्नतया सम्पूर्त्यर्थमुपन्यस्तः, न तु स दुर्गसिंहप्रणीत इति हरिरामवचनात्[१] प्रतीयते । कविराजोऽप्येनं श्लोकं वररुचिकृतमनुमन्यते ( द्र०—कवि०, मङ्गलाचरणम् ) । "ना-ग्रहणं योगविभागार्थं तेन किं स्यादित्याह—तस्मिन्नित्यादि वररुचिवृत्तिः" ( कवि० ३।२।३८ ) इत्यत्र कविराजेन स्पष्टमेव तदीयो वृत्तिग्रन्थः स्मृतः । कविराजोद्धृतानि तदभिमतव्यञ्जकानि कानिचिद् वचनानीह प्रदर्श्यन्ते यथा—

१—बिन्दुमात्र इति = स चार्धचन्द्राकृतिस्तिलकाकृतिश्चेति वररुचिः । २—अर्थः पदमैन्द्राः, विभक्त्यन्तं पदमाहुरापिशलीयाः, सुप्तिङन्तं पदं पाणिनीयाः, इहार्थोपलब्धौ पदमिति वररुचिः ।

३— वा-शब्दैश्चापिशब्दैर्वा शब्दानां ( सूत्राणाम् ) चालनैस्तथा ।
एभिर्येऽत्र न सिध्यन्ति ते साध्या लोकसम्मताः ॥
इति वररुचिः ।

४—वररुचिस्तु चकारात् क्वचिदघोषेऽप्युत्वं भवति, यथा—वातोऽपि तापपरितो सिञ्चति, ( १।१।९, २०, २३, ५।८ ) इत्यादि ।

कातन्त्रे यो हि कृद्भागः परिलक्ष्यते तत्सूत्राणि न शर्ववर्मकृतानि किञ्च वररुचिकात्यायनकृतानि विज्ञेयानीति वृत्तिकारेण दुर्गसिंहेन स्पष्टमेवोक्तम्—

वृक्षादिवदमी रूढाः कृतिना न कृताः कृतः ।
कात्यायनेन ते सृष्टा विबुद्धिप्रतिबुद्धये ॥
( कात० वृ०, कृत्प्रक० ) इति ।

कातन्त्रैकदेशस्य कृद्भागस्य प्रणेतृत्वात् कात्यायनस्तदेकदेशीय इति स्मरति कविराजः—"कैश्चित् कातन्त्रैकदेशीयैरिति पञ्जी । कातन्त्रशब्दोऽत्र सकलवैयाकरपरः, कातन्त्रं ये विदन्ति सूरय इत्यर्थेऽणप्रत्ययविधानात् तदेकदेशीयैर्वररुचिप्रभृतिभिरित्यर्थः" ( कवि० २।१।४१ ) इति । तत्सूत्राणामङ्गीकारः कातन्त्रे वररुचिशर्ववर्मणोरभेदबुद्ध्या दुर्गसिंहेन कृत इत्यपि कविराजो[२] विज्ञापयति । स्वरचितकृत्सूत्राणां 'चैत्रकूटी' वृत्तिरपि

---

१ अथ चकारेति कथमुच्यते, लिलेख इति वक्तु युज्यते, यावता देवदेवमित्यादिश्लोको वररुचिकृतदुर्घटवृत्तेरादौ दृश्यते । तत्कथमयं चकार इत्युक्तवान् । सत्यम्, धातूनामनेकार्थत्वात् 'कृ' धातुरपि लेखने वर्तते, अतो नोक्तदोषः ( व्या० सा०, मङ्गलाचरणम् ) इति ।

२. प्रकृतिप्रत्ययसङ्गतिमात्रमेव शर्ववर्मणा दर्शितम्, न विशेषप्रत्ययाभिधानं तेन कृतम् ( कात० वृ० टी० २।१।६८ ) । वररुचिना तृनादिकं पृथगेवोक्तम्, नतश्च वररुचिशर्ववर्मणोरेकबुद्ध्या दुर्गसिंहेनोक्तम् ( कवि० २।१।६८ ) ।

वररुचिना प्रणीतेति कविराजेन[१] निर्दिष्टम् । ये हि केचिदत्र शर्ववर्मकृतसूत्रोपरि 'चैत्रकूटी' वृत्तिर्वररुचिना कृतेति मन्यते तेषां मतमुपेक्ष्यमेव । यतो हि कविराजः कृत्सूत्राणामेव व्याख्याने चैत्रकूटीवृत्तिं स्मरति, न तु शर्ववर्मकृतसूत्राणां व्याख्याने । अहमदाबादस्थे ला० द० भा० संस्कृतिविद्यामन्दिरे वररुचिकृतायाः कृद्वृत्तेरेको हस्तलेखो वर्तते, पर स न वररुचिकात्यायनस्य प्रतीयते । यतो हि ग्रन्थादावुपन्यस्तः—

वृक्षादिवदमी रूढाः कृतिना न कृताः कृत ।
कात्यायनेन ते सृष्टा विबुद्धिप्रतिपत्तये ॥ इति श्लोकः,

"सिद्धिरिज्वद् ञ्णानुबन्धे" ( ४।१।१ ) इतिसूत्रस्य व्याख्याने "सिद्धिग्रहणं भिन्नकर्तृकत्वान्मङ्गलार्थम्" इति वचनं च कर्त्रन्तरं साधयति । पञ्चमस्य षष्ठस्य च पादस्यान्ते 'इति पण्डितवररुचिविरचितायां कृद्वृत्तौ पञ्चमः, षष्ठः पादः समाप्तः' इत्युपन्यस्तेन पाठेनान्येन केनचिद् वररुचिनामकेन विदुषा व्याख्यानमेतदकारीति वक्तुं शक्यते ।

१—केचिद् योगं विभजन्ति, २—केचित् करणमनुवर्त्य यथासङ्ख्यसम्बन्धमिच्छन्ति, ३—एकस्वरमनुवर्तयन्त्यन्ये ( कात० वृ० ४।४।४५, ६५, ६।७६ ), ४—आद्या वृत्तिकाराश्चैवमेवोदाहृतवन्तः ( कात० वृ० टी० ४।१।२० ) इत्यादिवचनैर्निर्दिष्टानां पूर्वतनानां वृत्तिग्रन्थानां परिचयोऽनुपलब्धिवशादुपस्थापयितुं न शक्यते ।

कातन्त्रस्योपलब्ध संस्करणं दुर्गसिंहेन परिष्कृतं प्रतिभाति । माधवीयधातुवृत्ति—क्षीरतरङ्गिणी—दैवादिषु धातुव्याख्यानभूतग्रन्थेषु बहूनि मतानि "दुर्ग-दौर्ग" इति नामभ्यामुद्धृतानि दृश्यन्ते । सर्वविद्यानिधान-कवीन्द्राचार्य-सरस्वतीमहाभागेन स्वीयग्रन्थसूचीपत्रे संस्कृतव्याकरणग्रन्थमध्ये कलापव्याकरणातिरिक्तं दौर्गव्याकरणमप्युल्लिखितम् ( द्र०-सं० १४७ ) । यद्यपि कातन्त्रस्यैवापरं नाम यत् कौमारव्याकरणं तदपि तत्रोद्धृतमिति तत्र तत्तन्नामभिः प्रकाशिता ग्रन्थाः समुल्लिखिता इति वक्तुं शक्यते । पञ्जीकारस्त्रिलोचनदासः "तादर्थ्ये" ( २।४।२७ ) इतिसूत्रं चन्द्रगोमिप्रणीतं मनुते । इह तु वृत्तिकारेण दुर्गसिंहेन मतान्तरप्रदर्शनार्थमुपस्थापितमिदं सूत्रम्[२] । तेनोपर्युक्तो विचारः प्रामाण्यं भजते ।

स्यादय एकविंशतिः ( २१ ) त्यादयश्चाशीत्युत्तरैकशतं ( १८० ) प्रत्ययाः सूत्रेषु न पठिताः, किन्तु वृत्तिकारेणैव प्रदर्शिताः । अत्र समादृतो वर्णसमाम्नायो ग्रन्थादौ नावलोक्यते, व्याख्याकारैश्च निर्दिश्यते ।

---

१. तथा च वररुचिः—वृ हवृहयोरमी साध्या वृ हवर्हादयो यदि ।
तदा सूत्रेण वैयर्थ्यं न वर्हां भावके स्त्रियाम् ( कवि० ४।२।६८ ) इत्येव पाठो दृश्यते, तथापि गुरुपदहालदारेण तत्र चैत्रकूटीत्यभिधानस्यापि निर्देशः कृतः ( द्र०—व्या० द० इति०, पृ० ५७९ ) । संस्करणान्तरे चैतदपि सम्भाव्यते ।

२. तादर्थ्यमिति = कथमिदमुच्यते, न खल्वेतच्छर्ववर्मकृतसूत्रमस्तीति । अत्र तु वृत्तिकृता मतान्तरमाख्यातम् । इह हि प्रस्तावे चन्द्रगोमिना प्रणीतमिदम् ( पञ्जी २।४।२७ ) इति ।

"वर्णसमाम्नाये कादिष्वकार उच्चारणार्थः" ( कात० वृ० टी० १।१।६ ), ननु वर्णसमाम्नायस्य क्रमसिद्धत्वात् सन्ध्यक्षरसञ्ज्ञाऽनन्तरमेवानुस्वारविसर्जनीययोः सञ्ज्ञानिर्देशो युज्यते, तत्कथं व्यतिक्रमनिर्देशः ? सत्यमनयोरप्रधानत्वात् पश्चात् सञ्ज्ञानिर्देशः ( पञ्जी १।१।१६ ), ननु इकारपर्यन्तमिति कथमुक्तं क्षकारस्यापि विद्यमानत्वात्, नैवम्-क्षकारस्योक्तवर्णेष्वेवान्तर्भावात्। कथन्तर्हि वर्णसमाम्नाये तदुपदेश इति चेत्, कादीनां संयोगसूचनार्थमिति न दोषः" ( कवि० १।१।९ ) इति। तेन पाठाभावेऽपि कश्चिद् वर्णसमाम्नायो नूनमत्राऽऽचार्येणाङ्गीकृत इत्यवगन्तव्यम्।

साम्प्रतमेतेषु शर्ववर्म-कात्यायनप्रोक्तेषु कातन्त्रसूत्रेषु दुर्गसिंहप्रणीता वृत्तिरुपलभ्यते। सेय वृत्तिर्वररुचिवृत्तेः शतत्रयवर्षानन्तर रचितेति गुरुपदहालदारो[1] विज्ञापयति। तेन चित्सुखाचार्यप्रणीतायाश्चिच्छुवृत्तेरपि निर्देशः कृतः। चिच्छुवृत्ते. शिष्यहितान्यासनामक व्याख्यान काश्मीरकेणोग्रभूतिना कृतम्[2]। ग्रन्थोऽय ( हस्तलिखितः ) शारदाक्षरेषु २४६ पत्रात्मक. श्रीनगरस्थसर्वकारीयपुस्तकालये सुरक्षितो दृश्यते। होशियारपुरस्थे विश्वेश्वरानन्दवैदिकशोधसंस्थानेऽप्येकस्त्रुटितोऽस्य हस्तलेखो वर्तते, परं स चिच्छुवृत्तेर्व्याख्यानभूतो ग्रन्थ इति न प्रत्येतु शक्यते। चिच्छुवृत्तेः साम्प्रतमनुपलब्धिवशात्तद्विषये मौनमालम्ब्यते।

वङ्गीयकातन्त्रवाङ्मये उपलब्धानां ग्रन्थानां परिचय.

१—कातन्त्रसूत्राणा दुर्गसिंहेन कृत वृत्त्याख्यं व्याख्यान सम्प्रति बहूनुपकरोति जिज्ञासून्, तच्च नागराक्षरेषु वङ्गाक्षरेषु च मुद्रितं सम्पूर्णमुपलभ्यते। शर्ववर्मकृतसूत्रसम्मतमेव मदीयं व्याख्यान भविष्यति, आहोस्विदेकत्र फलदर्शनान्मयापि ग्रन्थकरणे साफल्यं प्राप्स्यत इत्यभिप्रायेण वररुचिकृतेनैव श्लोकेन मङ्गलमाचरति दुर्गसिंहः स्वीये कातन्त्रवृत्तिग्रन्थे—

देवदेवं प्रणम्यादौ सर्वज्ञं सर्वदर्शिनम्।
कातन्त्रस्य प्रवक्ष्यामि व्याख्यानं शार्ववर्मिकम्॥ इति।

श्लोकान्तरमपि क्वचिद् हस्तलेखेषु दृश्यते, तच्च दुर्गसिंहेन प्रणीतमिति कथञ्चित् प्रकल्पयितुं शक्यते। तद्यथा—

ऊँकारं बिन्दुसंयुक्तं नित्यं ध्यायन्ति योगिनः।
कामदं मोक्षदं दे[illegible] नमो नमः॥

---

१ वाररुचिक वृत्तिर प्राय ३०० वत्सर परे दौर्गवृत्ति एवं काश्मीरे चिच्छुवृत्ति रचित हइयाछे। वर्धमानेर कातन्त्रविस्तरवृत्ति चिच्छुवृत्तिर परवर्ती ( व्या० द० इति०, पृ० ३९५ )।

२ कौमारसम्प्रदाये चिच्छुवृत्तिर उपरि काश्मीरक उग्रभूति शिष्यहितान्यास प्रणयन करेन ( व्या० द० ईति०, पृ० ३९८ )

पट्टकं निश्चलं कृत्वा मनः कृत्वा सुनिश्चलम् ।
उपाध्यायं नमस्कृत्य ततो व्याख्यानमारभे ॥इति ।

२—श्रीगौतमपण्डितेन दौर्गसिंहीयवृत्तेः कलापदीपिकानाम्नी नातिविस्तृता टीकैका प्रणीता, यत्र विद्यानन्द-वर्धमानादीनामाचार्याणा बहूनि मतान्युद्धृतानि । ग्रन्थकर्ताऽऽत्मानं पादावसाने उपन्यस्तेन पाठेनेत्थं परिचाययति—**इति वीरसिंहदेवोपाध्याय-गौतमपण्डितविरचितायां दुर्गसिंहोक्तकातन्त्रवृत्तिटीकायां कालापदीपिकायां नाम्नि प्रथमः पादः समाप्त इति ।** अत्र **वीरसिंहदेव** इति पितुर्नाम ग्रन्थकर्तुरेवोपाधिराशिर्वेति न निश्चयः ।

३—**टीका** इत्यभिधेयमेकं व्याख्यान वृत्तिग्रन्थस्यास्य दुर्गसिंहेन कृतम् । टीकाकारो दुर्गसिंहो वृत्तिकाराद् भिन्नः प्रतीयते । तथा हि ग्रन्थादौ तेनोक्तम्—

"**भगवान् वृत्तिकारः श्लोकमेकं कृतवान् देवदेवमित्यादि**" इति । अत्र वृत्तिकारो दुर्गसिंहः, तदर्थं प्रयुक्तो भगवानिति शब्दो वृत्तिकाराट्टीकाकारस्य भिन्नता विज्ञापयति । टीकाकारेण तान्यपि कानिचित् प्रतीकवचनानि व्याख्यातानि यानि दुर्गवृत्तौ नोपलभ्यन्ते, तानि च वचनानि यदि वररुचिवृत्तौ स्युस्तर्हि वररुचिमुद्दिश्य 'भगवान्' इति शब्दस्य प्रयोगो वृत्तिकारेणापि दुर्गसिंहेन कर्तुं शक्यते । एवमत्र वृत्तिकार-टीकाकारयोरैक्यमपि सम्भाव्यते । मन्ये—वररुचिवृत्तेर्वृत्ति-टीकेत्यभिधेय व्याख्यानद्वयमेकेनैव दुर्गसिंहेन प्रणीतमिति ।

४—"**क्रियाभावो धातुः**" ( ३।१।९ ) इत्यत्र दुर्गसिंहकृतटीकाया व्याख्यानरूपा **आख्यातमञ्जरी** इति नाम्नी विद्यासागरेण रचिता टिप्पणी साम्प्रतमुपलभ्यते, यत्र धातुविषयको विचारो वर्तते ।

५—दुर्गसिंहीयवृत्तिस्थशब्दाना तात्पर्यार्थस्य स्पष्टं प्रतिपादनाय श्रीत्रिलोचनदासेन **कातन्त्रवृत्तिपञ्जिका** रचिता । तेनाऽऽदौ मङ्गलमाचरतैवमुच्यते—

प्रणम्य सर्वकर्तारं सर्वदं सर्ववेदिनम् ।
सर्वीयं सर्वगं सर्वं सर्वदेवनमस्कृतम् ॥
दुर्गसिंहोक्तकातन्त्रवृत्तिदुर्गपदान्यहम् ।
विवृणोमि　　यथाप्रज्ञमज्ञसञ्ज्ञानहेतुना ॥ इति ।

येन त्रिलोचनेन कातन्त्रोत्तरपरिशिष्टं[1] प्रणीतं तस्य पञ्जिकाकारेण साम्य न वेति न विद्मः । अस्यां कातन्त्रवृत्तिपञ्जिकायामपि प्रदर्शितानि मतानि केचिद् व्याख्याकारा उप-

१. इह निखिलव्याकरणसंवादि-कौमारव्याकरणरहस्यदीक्षागुरुणा त्रिलोचनकविचन्द्रमहामहोपाध्यायेन कृतोत्तरपरिशिष्टस्याख्यातप्रकरणे तस्य लुक्, चर्करीतं च, बहुलमित्यादीनि, यानि यानि सूत्राण्यभिहितानि ( चर्करीतरहस्यस्य प्रारम्भे ) इत्यादि ।

युक्तानि न मेनिरे, अतस्तेषां विचारसरणिं दूषयितुं त्रिलोचनमतस्य च युक्तत्वमाख्यातुं कविराजेन श्रीसुषेणविद्याभूषणेन **कलापचन्द्रो** निर्मित, यत्र वृत्तिकारटीकाकारयोरपि मतं परीक्षितम्। अन्ये ये हेमकर-कुलचन्द्रप्रभृतयो व्याख्याकारास्तेषामपि मतान्युद्धृत्यौचित्य-विचारः प्रदर्शितः।

६—श्रीमत्कर्णोपाध्यायश्रीवर्धमानशिष्येण श्रीत्रिविक्रमेण कातन्त्रपञ्जिकाया एका **उद्द्योतनाम्नी** व्याख्या व्यरचि, या हि आख्यातभागस्य चतुर्थपादं यावदुपलभ्यते। तत्र पूर्वेषामसारवचनानां विचारो न कृत इति ग्रन्थान्ते उच्यते—

**उक्तं यदालूनविशीर्णवाक्यैर्निरर्गलं किञ्चन फल्गु पूर्वैः।**
**उपेक्षितं सर्वमिदं मया तत् प्रायो विचारं सहते न येन॥**
**आसीदियं पञ्जरचित्रसालिकेव हि पञ्जिका।**
**उद्द्योतव्यपदेशेन त्वियं पूर्णोज्ज्वलीकृता॥** इति।

७—कारकीय त्रिलोचनदासस्याभिमत पल्लवयितुं श्रीमणिकण्ठभट्टाचार्येण **त्रिलोचनचन्द्रिकानाम्नी** टीकैका निरमायि। अर्वाचीनोऽयं ग्रन्थः प्रतिभाति। ग्रन्थान्तस्य पाठेन ग्रन्थकर्तुः पाण्डित्यं परिलक्ष्यते, तद्यथा—

**इति महामहोपाध्याय- प्रगल्भतर्कसिंह-भट्टाचार्यश्रीमणिकण्ठविरचितायां त्रिलोचनचन्द्रिकायां षट्कारकखण्डनमण्डने समाप्ते।** इति।

८—पञ्चिका-कलापचन्द्रयोः केषुचिदंशेषु भट्टाचार्येण श्रीसीतानाथसिद्धान्तवागीशेन **सञ्जीवनी** टीका प्रणीता। सा च नमस्कारपादे **नमस्कारसञ्जीवनी**, धातुसूत्रे **धातुसञ्जीवनी**, सर्वनामप्रकरणे **सर्वनामसञ्जीवनी**त्याख्या भजते। श्रीमता अन्नदाचरणतर्कचूडामणिना व्याख्याग्रन्थावमू आधारीकृत्य **कौमुदीनाम्नी** टीका प्रणीता, या हि **१३१६** तमे वङ्गाब्दे नोयाखालीस्थरामेन्द्रयन्त्रे सम्मुद्रय सारदाचरणभट्टाचार्येण प्रकाशिता। ग्रन्थकारो ग्रन्थादौ मङ्गलमुपन्यस्य स्वीयं परिचयं प्रस्तौति—

**सर्वानन्दस्य विमले कुले जातः श्रिया युतः।**
**अन्नदाचरणस्तर्कचूडामण्युपनामकः॥**
**नोयाखालीजिलायत्त-सोमवाड़ास्थले वसन्।**
**विदधामि नमस्कारपादव्याख्यामहं मुदा॥**
**वैयाकरणचित्ताब्धिं विधायोत्तरलं त्विषा।**
**कौमुदीयं कौमुदीव सततं ननु राजताम्॥**इत्यादि।

९—कुलचन्द्रेण दुर्गवाक्यानां प्रबोधाय दुर्गवाक्यप्रबोधनामको ग्रन्थः प्रणीत आसीत्। धातुसूत्रीयः कारकपादीयश्च स साम्प्रतमुपलभ्यते। प्रौढमनोरमाकारेणैव[1] कुलचन्द्र

---

१. सीमेत्यादि। एतच्च दुर्गवाक्यप्रबोधे कुलचन्द्रेणोक्तम् (प्रौ० म०, पृ० ७२९), (सीमा—अण्डकोष इति पाठो दृश्यते दुर्गवाक्यप्रबोधे। द्र०—२।४।१९)।

स्मृतः । धातुसूत्र-कारकपादातिरिक्तस्याप्यंशस्य व्याख्यासारादावुद्धृतानि कानिचित् कुलचन्द्रमतानीह निदर्शनाय प्रस्तूयन्ते—

( १ ) "अत्र कुलचन्द्रः–उद्देशसूत्रमिदमिति, ( २ ) स्वरग्रहणमुत्तरार्थमिति कुलचन्द्रः, ( ३ ) यद्यप्येतत्सञ्ज्ञाप्रयोजनप्रतिपादकमेकमेव सूत्रं तथापीत्येवमाद्य इति यद् वृत्तावुक्तं तत्प्रवाहवशादिति कुलचन्द्रः ( कवि० १।१।१ ), ( ४ ) तथा च कुलचन्द्रः—काम्पिल्लनागः = काम्पिल्लो विक्रमादित्यदेशे प्रसिद्ध इति, ( ५ ) सूत्रसमीपत्वादस्यापि तद्व्यपदेश इति कुलचन्द्रेणोक्तम्" ( व्या० सा० १।१।१, मङ्गलाचरणम्) इत्यादि । कुलचन्द्रोऽयं श्रीविश्वमहीधरात्मज आसीदिति एकेन हस्तलेखेन ज्ञायते ( द्र०—Discriptive Catalogue of the Sanskrit manuscripts in the collection of the Asiatic Society of Bengal, Vol. VI, P. 91 ) ।

१०—दुर्गटीकाया एका कातन्त्रोत्तरनाम्नी व्याख्या श्रीविद्यानन्देन विजयानन्देन वा विरचिता । यद्यपि ग्रन्थोऽयं पूर्णतया हस्तलेखेषु दृश्यते, तथापि दुर्गटीकाया व्याख्येयमिति न क्वचित् स्पष्टमुल्लिखितम् । ग्रन्थस्यास्यापर नाम विद्यानन्द इति दृश्यते । ग्रन्थान्ते तेन ग्रन्थस्य परिमाणादिविषये उक्तम्, तद्यथा—

सहेतुकमिहाशेषं लिखितं साधु सङ्गतम् ।
अतः शृण्वन्तु धीमन्तः कौतुकोत्तालमानसाः ॥
कातन्त्रोत्तरनामायं विद्यानन्दापराऽऽह्वयः ।
मानं चास्य सहस्राणि स्वर्वैद्यगुणिता रसा ॥

निर्माय सद्ग्रन्थमिमं प्रयासादासादित· पुण्यलवो मया यः ।
तेन त्रिदुःखापहरो नराणां कुर्याद् विवेकं शिवभावनायाम् ॥

इति विजयानन्दविरचिते कातन्त्रोत्तरे विद्यानन्दापरनाम्नि कृत्सु षष्ठः पादः समाप्तः । इति ।

११—पुण्डरीकाक्षविद्यासागर. कातन्त्रप्रदीपनामक कातन्त्रव्याख्यानभूतं ग्रन्थ प्रणिनाय, यस्य कारकीयः कश्चिदंशः साम्प्रतमुपलभ्यते इति हर्षमुपैति कालापकाना चेतः । वङ्गदेशे धातुसूत्रनाम्ना प्रसिद्धस्य "धातुविभक्तिवर्जमर्थवल्लिङ्गम्" (२।१।१) इत्यस्यापि कातन्त्रसूत्रस्य व्याख्यान दृश्यते । उपलब्धांशातिरिक्तेऽपि भागेऽनेन नूनं कातन्त्रं प्रदीपेन प्रकाशितमासीदिति कविराजप्रभृतिव्याख्याकाराणा कैश्चिद् वचनैर्विज्ञातु शक्यते । तद्यथा—

"वस्तुतस्तु विद्यासागरस्य मते नमस्कारं कृत्वाऽव्यवहितं ग्रन्थप्रतिपादनार्थमादिग्रहणम्, समासान्तविधेरनित्यत्वादिति सागरेणोक्तम् ( व्या० सा०, मङ्गला०,१।४।५२ ), अन्यच्च कातन्त्रप्रदीपेऽनुसन्धेयम्, सागरस्तु—यदि नियमेनान्यत्र दीर्घाभावः साध्यते, तर्हि न नामि दीर्घमिति प्रतिषेधोऽनर्थकः स्यात्—प्राप्तेरभावात्" ( कवि० २।१।१७, २।१५ ) इत्यादि ।

१२—गणरत्नमहोदधिकारेण श्रीवर्धमानेन कातन्त्रविस्तरनाम्नी वृत्तिरेका प्रणीताऽऽसीत्, परममुद्रितेति सा सुखं नोपलभ्यते इति निर्दिष्टं गुरुपदहालदारेण[1]। कारकप्रकरणे कश्चिदंशस्तस्या मञ्जूषापत्रिकाया ( व० १२ अ० ६ ) प्रकाशितो दृश्यते। तत्र बुद्धिसिद्धमवधिभावमाकलय्य तन्त्रान्तरोक्तसूत्राणां खण्डनस्य स्वीकारस्य च विषये समीचीन एष विचार उपस्थापितः—

प्रत्याख्यातुमिहाख्यातमिति तन्त्रान्तरोदितम्।
स्वीकर्तुमथवाऽस्माकं पक्षपातो न विद्यते॥

किञ्च—

तन्त्रान्तरप्रणीतानां सूत्राणां परमाग्रहात्।
प्रत्याख्यानेन यत्नस्य द्वैगुण्यमुपजायते॥
( २।४।७ ) इति।

ग्रन्थस्यास्यैका हस्तलिखिता प्रतिलिपिर्जैसलमेरीयहस्तलिखितभाण्डागारे वर्तते इति सूचयति श्रीधररामकृष्णभाण्डारकरमहोदयः[2]। उत्कलाक्षरैर्निबद्धाः केचन हस्तलेखा भुवनेश्वरस्थे उत्कलप्रदेशीयसांस्कृतिकव्यापारविभागस्य ग्रन्थालयेऽपि सुरक्षिताः सन्तीति वेदितव्यम्।

१३—श्रीमता रामनामकेन विदुषा कातन्त्रवाक्यविस्तरनामैको ग्रन्थः प्रणीतः, स चातिसङ्क्षिप्तः। ग्रन्थान्ते तेन ग्रन्थादिपरिचयः स्वयमेवोपस्थापित, यथा—

कौशिकान्वयसम्भूतः सर्वदेवात्मजो भुवि।
रामाख्यया प्रसिद्धो हि नागरो विप्रसेवकः॥ १॥
जडानां सुखबोधार्थं कृतवान् वाक्यविस्तरम्।
हास्यपूर्वं हि धीराणां ग्राह्यश्चेद् दोषवर्जितः॥ २॥

इति श्रीनागरस्थानवास्तव्यनागरज्ञातीयकौशिकान्वयव्याससर्वदेवसुतपण्डितरामविरचितं शब्द-कारक-समास-तद्धित-क्रिया-कृत्प्रयोगाणां लौकिकभाषया वाक्यविस्तरं समाप्तम् इति।

१४—सन्धिसूत्रेषु हरिरामकृत व्याख्यासारनामक कातन्त्रव्याख्यानमुपलभ्यते, सन्धिभागीयस्य यस्य सन्धिचन्द्रिका इति नामान्तरमपि दृश्यते। तत्रैकोनाशीतिसूत्रेषु ( ७६ ) सप्तषष्टिः ( ६७ ) सूत्राणि व्याख्यातानि। "देवदेव प्रणम्य" इत्यादिश्लोको

१. वर्धमान ११४० खृष्टाब्द गणरत्नमहोदधि प्रणयन करेन। गुर्जरे तिनि राजा कर्णदेवेर सभाय थाकितेन। तिनि गोविन्द सूरि शिष्य। ताहार कातन्त्रविस्तरवृत्ति एकखानि प्रामाणिक ग्रन्थ, एखन ओ किन्तु उहा मुद्रित हय नाइ ( व्या० द० इति०, पृ० ४५७ ) इति।

२. राजस्थान में संस्कृत साहित्य की खोज, पृ० ३२।

दुर्घटवृत्तेरादौ वररुचिना मङ्गलाचरणरूपेणोपन्यस्त इति विशेषोऽभिहितस्तेन। नामचतुष्टयस्य प्राथमिके पादत्रितये एवोपलभ्यते टीकेयम्। अग्रिमयोराख्यातकृद्भागयोर्वृत्तेरस्या उपलम्भात् कारक-समास-तद्धितेतिपादत्रितयस्यापि टीकयाऽनया नूनं भाव्यम्। वृत्ति टीका पञ्जिका वाऽऽदाय नाय ग्रन्थ. प्रणीतः, अपि तु स्वतन्त्ररूपेण क्वचिद् विशेषाभिमतप्रदर्शनार्थं रचितः। आदावुक्त तेन—

विश्वनाथपदद्वन्द्वं नत्वा गुरुपदं मया।
तन्यते हरिरामेण व्याख्यासारः समासतः॥ इति।

एतेनोपलब्धव्याख्याना सारस्यात्र वर्णितत्वाद् व्याख्यासार इत्यन्वर्थमेव टीकाया अस्या नाम प्रतीयते।

१५—दीर्घाङ्गीकुलसम्भूतश्रीशिवानन्दशर्मात्मजश्रीरामदासचक्रवर्तिना कातन्त्रचन्द्रिकानाम्नी टीकैकाऽऽख्यातान्त रचितेति तदीयहस्तलेखस्य विवरणेन[1] ज्ञायते।

१६—पण्डितेन श्रीगोवर्द्धनेन चतुरध्याना वृत्तिग्रन्थे टिप्पण्यः समायोजिताः। स च ग्रन्थः (चतुष्कवृत्तिटिप्पणी) नामचतुष्टयस्य तृतीयपादान्तमुपलभ्यते। आदावुक्तं तेन—

प्रणम्य सारदां देवीं ज्ञाननेत्रप्रबोधिनीम्।
शार्ववर्मिकसूत्राणां प्रक्रियां च क्रमाद् ब्रुवे॥ १॥ इत्यादि।

१७—कातन्त्रैकदेशे वररुचिप्रणीते कृद्भागे मञ्जरीनाम्नी टीका शिवरामशर्मणा सवृत्तिकैकोनविंशतिकारिकाभिः प्रणीता। ग्रन्थादौ स इत्थ मङ्गलमाचरति—

नत्वा महेशं शिवया समेत संसारदावानलमोक्षहेतुम्।
सङ्क्षेपतः श्रीशिवरामशर्मा कृन्मञ्जरी बालमुदे तनोति॥ इति।

१८—कृत्सूत्रेषु श्रीरघुनन्दनभट्टाचार्यशिरोमणिकृत कलापतत्त्वार्णवनामक व्याख्यानमुपलभ्यते, यस्य कृत्-शिरोमणिरिति नामान्तरं व्यवह्रियते। कृत्प्रकरणस्य षष्ठपादे इयमेव टीका मुद्रिता दृश्यते। सम्भवतः प्रकाशनसमये कविराजटीका सम्पादकेन नोपलब्धेति टीकेय तत्रोपयोजिता। ग्रन्थादौ स इत्थं प्रतिजानीते—

प्रणम्य परमं देवं गोपालं चित्तनन्दनम्।
करोमि शब्दशास्त्रस्य वृत्ति प्रस्फुटितां शुभाम्॥

---

1. Discriptive catalogue of the Sanskrit manuscripts in the collections of the Asiatic society of Bengal, Vol. VI, P 91.

सदर्थामृतलाभाय सूक्तिरत्नाय च द्रुतम् ।
कलापपूर्वतत्त्वात्मा समुद्रः सेव्यतामयम् ॥ इति ।

तत्र मन्ये स्पष्टार्थकानि सरलार्थकानि च कानिचित् सूत्राणि तेन न व्याख्यातानीति ।

१९—आख्यातभागे सप्तमाष्टमपादीयदुर्गवृत्तेरर्थप्रकाशिनी **मङ्गलानाम्नी** टीका श्रीरामकिशोरेण रचिता, सा च कतिपयेष्वेव सूत्रेषु दृश्यते। पादान्तरीयाऽपि टीकेयं सम्भाव्यते । अष्टमपादारम्भे उच्यते—

शिवं रामकिशोरेण प्रणम्यार्थः प्रकाश्यते ।
आख्याताष्टमपादीयदुर्गवृत्तेर्यथामति ॥ इति ।

**२०**—मुम्बईतः १९२७ तमे खिस्ताब्दे प्रकाशिते वादिपर्वतवज्रभावसेनप्रणीते **कातन्त्ररूपमालाख्ये** ग्रन्थे प्रकरणक्रमानुसारेण सूत्राणि व्याख्यातानि, परं तत्र वङ्गीय-कातन्त्रस्य मूलेऽनुपलब्धान्यपि कानिचित् सूत्राणि दृश्यन्ते। बालानामुत मन्दाना बोधाय ग्रन्थोऽयं प्रणीत इति भावसेनेनैव[1] निर्दिष्टम् । तत्रादावुच्यते—

वीरं प्रणम्य सर्वज्ञं विनष्टाशेषदोषकम् ।
कातन्त्ररूपमालेयं बालबोधाय कथ्यते ॥
नमस्तस्यै सरस्वत्यै विमलज्ञानमूर्तये ।
विचित्रा लोकयात्रेयं यत्प्रसादात् प्रवर्तते ॥ इति ।

ग्रन्थान्ते उपन्यस्तेषु कतिपयेषु श्लोकेषु **कौमार** इत्यभिधानस्य सम्बन्धो भगवत्या कुमार्या (सरस्वत्या) संस्थापित[2] ।

२१—आख्यातभागस्य प्राथमिके पादद्वितये कविराजकृता टीका साकल्येन दृश्यते, तदनन्तर षट्सु पादेषु श्रीबिल्वेश्वराचार्यस्य टीका प्रकाशिता वर्तते, तेनानुमीयते-ग्रन्थ-प्रकाशनावसरे कविराजकृतटीकाया अनुपलब्धिवशात्तथैवेष्टत्वाद् वैवं कृतं सम्पाद-केनेति कविराजस्य तत्र सूत्रेषु टीकाया अभावो नानुमन्तव्यः, तदग्रिमे कृद्भागे पञ्चपादेषु तट्टीकायाः समुपलब्धेः ।

---

१. मन्दबुद्धिप्रबोधार्थं भावसेनमुनीश्वरः ।
कातन्त्ररूपमालाख्या वृत्तिं व्यरचयत् सुधीः ॥ इति ।

२. आज्ञया कुमार्या प्रथमं सरस्वत्याऽप्यधिष्ठितम् ।
अर्हम्पदं सस्मरन्त्या तत्कौमारमधीयते ॥
कुमार्या अपि भारत्या अङ्कन्यासेऽप्ययं क्रम. ।
अकारादिहपर्यन्तस्तत. कौमारमित्यद. ॥ इत्यादि ।

२२—धातुसूत्रीय—पञ्जिकाकलापचन्द्रयो पत्रिकानाम्नी व्याख्या श्रीपीताम्बरविद्याभूषणविरचितोपलभ्यते ।

२३—आचार्येण पाणिनिना समासान्ता अच्-टजादय. प्रत्ययास्तत्तदनुबन्धनिर्देशपुरस्सर कार्यवशात् कृताः, पर कातन्त्रे केवलम् 'अत्' इत्येव प्रत्ययः कृतः । सूत्र च तदीयम्—

'समासान्तगतानां वा राजादीनामदन्तता'

( २।६।४१ ) इति ।

तत्र राजादिगणसूत्राणा रत्नेश्वरचक्रवर्तिनाऽपि वृत्तिः कृता । सा च कलिकातातः प्रकाशिते देवनागराक्षरमये कातन्त्रव्याकरणे मुद्रिता दृश्यते । आदौ मङ्गलमाचरताऽऽचार्येणोक्तम्—

प्रणम्य रुद्रस्य हरेर्भवान्या वाण्या गणेशस्य च पादपद्मम् ।
तनोति रत्नेश्वरचक्रवर्ती राजादिवृत्तिं पठतां हिताय ॥ इति ।

तत्रैकोनषष्टिसूत्रात्मके ( ५६ ) राजादिगणे दौर्गवृत्त्यादेरुपलम्भात् तानि सूत्राणि रत्नेश्वरप्रणीतानीति नाऽऽशङ्कनीयम् ।

२४—चर्करीतान्तशब्दाः ( यङ्लुगन्ताः ) प्रायेण भाषाया न प्रयुज्यन्ते इत्यस्ति विदुषामभिमतम् । तथापि भाष्यकारादयोऽनेके आचार्यास्तत्प्रयोगपक्ष समर्थयन्तीत्येतत् सर्वं हृदि कृत्वा श्रीकण्ठहारकविना चर्करीतरहस्याऽऽख्य विंशतिकारिकाबद्ध किमप्यास्वादनीय वस्तु वर्णितम् । तद्व्याख्यानमपि तेनैव कृतम् । ग्रन्थादौ स इत्थ परिचयमुपस्थापयन् प्रतिजानीते—

प्रणनम्य महादेवं चर्करीतरहस्यकम् ।
श्रीकविकण्ठहारोऽहं वावच्मि वदतां वरः ॥
भाषायामपि मंमनीति विदितो वक्तव्यवादी तत-
स्तत्सर्वं विवरीवरीमि रसवत्तन्त्रादिभिः सम्मतम् ॥ इत्यादि ।

२५—श्रीदुर्गसिंहेन विभक्तीनामर्थानुसारेण संयोजन चतुर्दशभिः कारिकाभिः षट्कारककारिकाऽऽख्ये ग्रन्थे निर्दिष्टम् । ग्रन्थादौ यद्यपि तेन सम्प्रदायविशेषादेरुल्लेखो न कृतस्तथापि व्याख्याकारेण रभसनन्दिना स्वीयव्याख्यानेऽनेकत्र कातन्त्रीयसूत्रवचनानि[1] स्मृतानि, तेन ग्रन्थोऽय कातन्त्रव्याकरणेन सहाऽऽत्मनः सम्बन्ध विज्ञापयतीति वक्तु शक्यते। वृत्तिटीकाकाराभ्या भिन्नोऽय दुर्गसिंह इत्यस्ति प्रायेण विदुषा सम्मतिः । मङ्गलवाक्ये भगवान् बुद्धः स्तूयते, तेन ग्रन्थकारो बौद्धमतानुयायीत्यवगम्यते । तथा हि—

१. कट करोति देवदत्त. कुरुते वा, इन्‌यजादेरुभयम् ( ३।२।४५ ) इति कर्तर्युभयपदम् । ' 'दीयते यस्मै स दानीयो ब्राह्मण, कृत्ययुटोऽन्यत्रापि च ( ४।५।९५ ) इति वचनात् सम्प्रदानेऽनीय' ।— दक्षिणा दीयते यस्मै स दक्षिणीयो ब्राह्मण, ईयस्तु हिते ( २।६।१० ) इति योगविभागात् सम्प्रदाने ईय' ( षट्कार०, कारि० १ ) इत्यादि ।

भग्नं मारबलं येन निर्जितं भवपञ्जरम्।
निर्वाणपदमारूढं तं बुद्धं प्रणमाम्यहम् ॥ क । इति ।

उपरि निर्दिष्टा वृत्ति-टीका-पञ्जी-कलापचन्द्रादयो ग्रन्थाः साम्प्रतमुपलभ्यन्ते। कलापचन्द्रादिग्रन्थेषु बहवो हि पूर्वे आचार्या ग्रन्थाश्च स्मृता अवलोक्यन्ते। तत्र सन्ति वै एतादृशोऽपि केचिदाचार्या येषां कातन्त्रसम्बन्धिनो व्याख्यानग्रन्थाः सम्भाव्यन्ते। यथा आचार्य उमापतिः श्लोकबद्ध किञ्चित् कातन्त्रव्याख्यानं चकारेति कविराज—हरिरामोद्धृतैर्वचनैर्विज्ञायते। तदुदाह्रियते निदर्शनाय किञ्चित्—

(१) तथा चोमापतिः—

दादेर्हस्य कृते घत्वे दत्वे ढत्वविधावपि।
कार्ये आदिचतुर्थत्वे हकारग्रहणेन किम्?

(कवि० २।३।५०)।

(२) तथा चोमापतिः—

अत्राज्ञसञ्ज्ञानपदेन लक्ष्यं तज्ज्ञानमेवेति वयं प्रतीमः।
हेतुत्वमस्येति यथा विवाहज्ञानं निमित्तं किल वृद्धिकार्ये ॥

(व्या० सा० मङ्गला०, पृ० ४) इत्यादि।

हरिरामाद्युद्धृतैर्हेमकराभिमतप्रदर्शकैर्वचनैर्हेमकरस्य कातन्त्रव्याख्यातृत्वमवगम्यते। तद् यथा—

"अनेनैवान्तग्रहणलाभे यत् पुनरिहान्तग्रहणं तत्सर्वथाऽन्तस्यैव लोपे लुप्तवद्भावार्थम्, अन्यथा साधुमगित्यत्र पूर्व एव दोषः स्यादिति हेमकरस्याऽऽशयः"

(कवि० २।३।५८)।

"यदि पुनरुत्वे कृते वत्वं भविष्यति तदा ह्यकारेण आकार-घोषवतोश्चेत्येकयोगं पूर्वेण सह कुर्यात्। यस्मादेवं न कृत्वा 'उमकारयोर्मध्ये' इति भिन्नयोगः कृतस्तस्मादुत्वे कृते वत्वं न भविष्यतीति हेमकरस्याभिप्रायः" (व्या० सा० १।५।७) इत्यादि।

एवं पञ्चविंशतिर्ग्रन्था ये हि मया प्रबन्धेऽस्मिन्नुपयोजितास्तेषां सङ्क्षेपेण कश्चित् परिचय इह प्रस्तुतः। सर्वेषां रचनाकालो निर्धारयितुं न शक्यते इत्यत्रापि नाऽऽश्रितः कालक्रमः। उमापति-हेमकराचार्ययोर्ग्रन्थावनुपलब्धावपि कविराज—हरिरामाभ्यां क्वचिदुद्धृतैस्तदीयाभिमतप्रदर्शकैर्वचनैः कदाचित् स्वीया रचना प्रमापयतः।

### कातन्त्रव्याकरणस्य खिलपाठे स्मृतानां धातु-गण-उणादि-लिङ्गानुशासनानां परिचयः

सूत्र-धातु-गण-उणादि-लिङ्गानुशासनानि पञ्च व्याकरणस्याङ्गान्युच्यन्ते। तत्र कातन्त्रसूत्रग्रन्थविषये यावन्तो ग्रन्था उपलभ्यन्ते, येषां चानुपलब्धावपि क्वचिदुल्लेखो दृश्यते तावता सर्वेषां ग्रन्थानां सामान्यतः परिचयः प्रदर्शितः। इदानीं कातन्त्रधातुपाठसम्बन्धे विचारः क्रियते—

"दिवादेर्यन्, नुः ष्वादेः, स्वराद् रुधादेः परो नशब्दः, तनादेरुः, ना क्र्यादेः" ( ३।२।३३, ३४, ३६, ३७, ३८ ) इत्यादौ गणनिर्देशादाचार्यशर्ववर्मणैव पूर्वं कातन्त्रधातुपाठः कृत इति विज्ञायते। तदीयो धातुपाठः श्रीदुर्गसिंहेन परिष्कृतः। एतन्नामनिर्देशेन सूत्रमेक क्षीरस्वामी स्मरति—"**तथा च क्लेश भाषणे इति चान्द्रं सूत्रम्, क्लेश बाधने इति दौर्गम्**" ( क्षीरत० १।६३७-३८, पृ० ५०, लिविश-स० ) इति, तेनास्य धातुपाठस्य प्रसिद्धि, प्रतीयते। रमानाथोऽपि दुर्गसिंहस्य धातुपाठकर्तृत्व[१] निर्दिशति। स्वीयधातुपाठस्य दुर्गसिंहेन व्याख्यानमपि कृतमित्येकेन वचनेनानुमीयते, यथा—दन्दशनमिह दन्त-(द)शूककर्तृका क्रियाऽभिधीयते इति दुर्गसिंहव्याख्यानाद् दन्दशन इति पाठोऽनुमीयते ( मनोरमा, धा० २० ) इति। "ह्रस्ववानयमुतोऽयुरु० इत्यत्रास्यापि ग्रहणमिति कात्यायनव्याख्यानात्" ( मनोरमा, णु स्तवने, धा० ९५२ ) इति वचनान्महर्षिकात्यायनेनापि कातन्त्रधातुपाठस्य किञ्चिद् व्याख्यान कृतमिति वक्तु शक्यते। त्रिलोचनदासेन धातुपारायणाख्यः कश्चिद् ग्रन्थः कातन्त्रधातुपाठस्य व्याख्यानरूपः प्रणीत इति कविराजवचनेन[२] विज्ञायते। रमानाथेनाप्येतत् सूचितम् ( द्र०—धातुपाठप्रकरणे )।

उपलब्धः कातन्त्रधातुपाठः **कातन्त्रगणमाला**नाम्ना वङ्गदेशे प्रसिद्धः, स न शार्ववर्मिको न चापि दुर्गसिंहपरिष्कृतः प्रतिभाति[३]। रमानाथशर्मणा कातन्त्रधातुपाठस्य **मनोरमा**नाम्नी व्याख्या धातूना यथायथ निर्धारणाय प्रणीता। ग्रन्थादौ स इत्थ प्रतिजानीते—

प्रायेण धातुवैषम्यात् सर्वेषां घूर्णते शिरः।
या तत्क्रियार्थे प्रभवेत् सैव वृत्तिर्मनोरमा॥
भूरि सूरिकृता वृत्तिर्भूयसी युक्तयुक्तिका।
निश्चेतुं धातवस्तस्यां न शक्यास्तेन मे श्रम ॥ इति।

एतेनेदमपि ज्ञातु शक्यते यदनेकैराचार्यैरस्य व्याख्यान कृतमासीदिति। रमानाथेन व्याख्याते कातन्त्रधातुपाठे प्रायेणाष्टादशशत ( १८०० ) धातवः पठिता दृश्यन्ते। क्वचित् पाठे 'दण्डकशैल्यपि'[४] समाश्रिता। जुहोत्यादेरदाद्यन्तर्गतत्वान्नवैव गणा इह मन्यन्ते—

( १ ) भ्वादिः। ( २ ) अदादिः। ( ३ ) दिवादिः। ( ४ ) स्वादिः।
( ५ ) तुदादिः। ( ६ ) रुधादिः। ( ७ ) तनादिः। ( ८ ) क्र्यादिः।
( ९ ) चुरादिः।

---

१. दुर्गसिंहस्त्वमूनेकयोग कृत्वा वैक्लव्ये पठति नाह्वानरोदनयो. ( मनोरमा, धा० ४९९ )।

२. धातुपारायणे तु त्रिलोचनेन खन्नातीति दर्शितम्, तत्तु लेखकप्रमाद एवेति ( कवि० ३।२।६९ )।

३ एतच्च मया कातन्त्रीयधातुपाठस्य प्रकरणे युक्त्या ससाधितम्।

४ कुथि पुथि युथि लुथि हिंसासंक्लेशयो. ( भ्वा०, धा० ७ )।

धातुषु कार्यविशेषविधानाय विंशतिरनुबन्धा योजिता :—
( १ ) आ । ( २ ) इ । ( ३ ) इर् । ( ४ ) ई । ( ५ ) उ । ( ६ ) ऊ । ( ७ ) ऋ । ( ८ ) लृ । ( ९ ) ए । ( १० ) ओ । ( ११ ) क् । ( १२ ) ङ् । ( १३ ) ञ् । ( १४ ) ञि । ( १५ ) ट् । ( १६ ) ट्ठ । ( १७ ) डु । ( १८ ) ण् । ( १९ ) प् । ( २० ) ष् ।
गणप्रदीपनाम्नाऽपि धातुपाठोऽयमुपलभ्यते ।

कातन्त्रगणपाठो यद्यपि साम्प्रतं पृथङ् नोपलभ्यते तथापि "मुहादीनां वा, बाह्वादेश्च विधीयते" ( २।३।४६, ६।७ ) इत्यादावादिपदोपादानादेतद् वक्तुं शक्यते-शर्ववर्माचार्येणावश्यं गणपाठस्य निर्वारणं कृतमासीदिति । गणे तत्तच्छब्दानामनिर्धारणान्निर्दिष्टं कार्यं कथमपि प्रवर्तितुं न शक्येत । वृत्तिकारेण दुर्गसिंहेन टीकाकारेण च ते शब्दा यथावसरं स्वीये व्याख्याने पठिता दृश्यन्ते । प्रतीयते—दुर्गसिंहेनापि शार्ववर्मिकगणपाठो न दृष्टः, तदभावपूरणार्थमेव तेन गणशब्दाः सङ्गृहीता इति । गुरुपदहालदारेणापि[1] एतदेवानुमतम् ।

कातन्त्रोणादिसूत्राणि दुर्गसिंहप्रणीतानि प्रतीयन्ते, अत्र तदीयं प्रतिज्ञावाक्यमेव प्रमाणरूपेणोद्धर्तुं शक्यते, यथा—

नमस्कृत्य गिरं ( शिवम् ) भूरि शब्दसन्तानकारणम् ।
उणादयोऽभिधास्यन्ते बालव्युत्पत्तिहेतवे ॥ इति ।

केचिद् आचार्य-इन्द्रगोमिप्रणीतान्येवोणादिसूत्राणि कातन्त्रसम्प्रदाये समादृतानीति वदन्ति । यद्यपि पूर्वाचार्याः स्वीयव्याकरणस्य सर्वाङ्गतोपपत्त्यर्थमुणादिप्रत्ययानपि प्रायेण प्रदर्शितवन्तस्तेन शर्ववर्मणाऽप्युणादिसूत्राणां प्रणयनं सम्भाव्यते, तथापि प्रतिपत्तिलाघवस्य सर्वत्र समादृतत्वादौणादिकशब्दानां लोकप्रयोगाधीनत्वाच्चोणादिसूत्राणि

---

१. कातन्त्रेर प्रातिपदिकपाठसम्बन्धे केहइ किछु बलेन नाइ । किन्तु "स्वस्रादीनां च" ( च० ६९ ), "मुहादीनां वा" ( च० १९१ ), "बाह्वादेश्च विधीयते" ( च० १९३ ), "स्मै सर्वनाम्न." ( नाम० २५ ), "त्यदादीनाम विभक्तौ" ( नाम० १७१ ) इत्यादि सूत्र देखिया मने हय, एकसमय सूत्रपाठेर सङ्गे शार्ववर्मिक धातुपाठेर न्याय शार्ववर्मिक प्रातिपदिक पाठ ओ अवश्यइ छिल । से ग्रन्थ बहुदिन लुप्त हओजाय, दुर्गसिंह ओ ताहा देखेन नाइ, देखिले नाम करितेन । तवे वृत्ति द्वारा तिनि एखन उहार अभाव पूरण करियाछेन । स्वस्रादिर पाठ देखाइबार जन्य तिनि लिखियाछेन—

स्वसा नप्ता च नेष्टा च त्वष्टा क्षत्ता तथैव च ।
होता पोता प्रशास्ता च अष्टौ स्वस्रादय स्मृता. ॥

श्लोकटी सम्भवत ४-५ खृष्टशताब्दीय चन्द्रकीर्तिर "समन्तभद्र" नामक श्लोकात्मक व्याकरण हइते उद्धृत हइयाछे ( व्या० द० इति०, पृ० ४१५ ) ।

न तेन प्रोक्तानीति वक्तु शक्यते। गुरुपद-हालादारेणाप्येतदेव[1] प्रदर्शितम्। तत्र ग्रन्थमध्ये वर्तते एष मङ्गलश्लोक :—

> शब्दात्मिका या त्रिजगद् बिभर्ति स्फुरद्विचित्रार्थसुधां स्रवन्ती।
> या ऋद्धिरीड्या हृदये सदैव मुखे च सा मे वशमस्तु नित्यम्॥ इति।

ग्रन्थान्ते स्वीयग्रन्थस्यापूर्णतामनेन वचनेन विज्ञापयति—

> शब्दानामानन्त्याद् व्युत्पत्तिर्दृश्यते येषाम्।
> तेषां विज्ञैः कार्या मृग्या धातोस्ततः प्रत्ययान्तात्॥ इति।

अत्र षट्सु पादेषु एकोनचतुःशतानि ( ३९९ ) सूत्राणि पञ्चपञ्चाशदुत्तरद्विशत-मिताः ( २५५ ) प्रत्ययाश्च प्रदर्शिताः। तत्र दुर्गसिंहप्रणीता वृत्तिः साम्प्रतमुपलभ्यते। तस्या वृत्तेष्टीकाकार उपाध्यायः सर्वधरो बभूव, तदीय चाभिमत सारनिर्णये श्रीरमानाथ-चक्रवर्तिनाऽनुसृतमित्येतत् सर्वं गुरुपदहालदारेण सूचितम्। तद् यथा—

"दुर्गसिंहेर दृष्टि लइया उपाध्याय सर्वस्वे सर्वधर उपाध्याय एइ सकल सूत्र व्याख्या करियाछेन। रमानाथ चक्रवर्तीर सारनिर्णये उपाध्याय सर्वस्व अनुसृत हइयाछे" ( व्या० द० इति०, पृ० ५७० ) इति। वङ्गाक्षरेषु प्रकाशितान्युणादिसूत्राणि पञ्चपादात्मकान्येव दृश्यन्ते।

कातन्त्रीय लिङ्गानुशासन दुर्गसिंहेन प्रणीतमिति त्रिलोचनदासेन[2] 'श्वशुर' शब्दस्य लिङ्गविचारप्रसङ्गे उपस्थापितेनैकेन वचनेन सङ्केतितम्। गुरुपदहालदारेणापि कातन्त्रीय-लिङ्गानुशासनस्य दुर्गसिंहकर्तृत्वमुक्तम्, तेन काश्मीरकग्रन्थेषु एतद्ग्रन्थस्योल्लेखो वर्तते इत्यपि निर्दिष्टम्[3]। मया तु बीकानेरस्थे अनूपसंस्कृतहस्तलेखसङ्ग्रहालये, अहमदाबादस्थे लालभाईदलपतभाईभारतीयसंस्कृतिविद्यामन्दिरे चास्य ग्रन्थस्य हस्तलेखयोः षडशीति (८६) कारिका एव दृष्टा न तु तत्र व्याख्यान किञ्चिद् वर्तते। पुण्यपत्तनस्थडेक्कनकालेजादय

---

१. कौमारदेर औणादिकसूत्र शर्ववर्मप्रणीत नहे। ताञ्जोरे प्रवाद आछे जे, ऐ सकल सूत्र वृत्तिकार दुर्गसिंह कर्तृक प्रणीत हय, केह केह बलेन, बौद्धदेर ऐन्द्र व्याकरण हइते ऐ सकल सूत्र कलापे प्रविष्ट हइयाछे एव दुर्गसिंह तदुपरि एकखानि वृत्ति करियाछेन ( व्या० द० इति०, पृ० ५८४ )।

२. ननु विशिष्टमपि श्वशुरत्व भवत् तदपत्योद्वहनसम्बन्धकृतमेव भवितुमर्हति, तच्च न केवल पुंसि स्थित किन्तर्हि स्त्रियामपि। यदाह तत्रभवान् दुर्गसिंह :—
एव श्वशुर इति तदपत्योद्वहनसम्बन्धनिबन्धनो व्यपदेशः श्वश्र्वामपि स्थित एव ( पञ्जी ३।६।५५ )।

३ **कातन्त्रवृत्तिकार दुर्गसिंहेर लिङ्गानुशासन**—इहाते सम्भवत ८८ टी कारिका छिल। ग्रन्थ-कार इहार उपर एकखानि वृत्ति ओ प्रणयन करियाछिलेन। काश्मीरग्रन्थे दुर्गात्मप्रणीत लिङ्गानुशासनेर उल्लेख पाओया जाय। आमादेर मते वृत्तिकार दुर्गसिंह शैव एव तिनिइ सवृत्ति लिङ्गानुशासन करियाछिलेन बलिया यथेष्ट प्रमाण पाओया जाय ( व्या० द० इति०, पृ० ४२६-२७ )।

ग्रन्थः १६५२ तमे खीस्ताब्दे प्रकाशितः, स च दुर्गवृत्तिसहितो वर्तते। तत्र प्रायेण सप्तदशशत (१७००) शब्दा व्याख्याता दृश्यन्ते। मङ्गलानन्तरमाचार्येण श्रीदुर्गसिंहेन ग्रन्थस्य प्रयोजन विषयश्च प्रोक्तस्तत्र लोकाद् येषा शब्दाना लिङ्गानि स्पष्टतो ज्ञायन्ते ते शब्दा नात्र व्याख्यास्यन्ते, किञ्च तदन्ये शब्दा आर्याच्छन्दोभिर्व्याख्यापथ नेष्यन्ते इत्युक्तम्। तथा हि—

स्त्री-पुं-नपुंसकानि स्वार्थे सिद्धानि लोकतो यानि।
तानि त्यक्त्वाऽऽर्याभिः क्रमशो वक्ष्येऽवशिष्टानि॥ इति।

स्थले स्थले व्याड्याद्याचार्याणामभिमतान्युपन्यस्तानि। त्र्यशीतिकारिकासु (८३) प्रायेण सप्तदशशतमितशब्दाना (१७००) लिङ्गानि निरूप्य शब्दानामनन्तत्वान्न साकल्येन कार्यमिद कर्तुं शक्यते इत्यत्र बालाना प्रबोधार्थं केचिच्छब्दा निदर्शनरूपेणोपन्यस्ता इत्यन्ते तेनोक्तम्—

आनन्त्यादिह शब्दाना लिङ्गानामप्यनन्तता।
सुवर्णैर्घटित किञ्चिद् बालानां मुखमण्डनम्॥ इति।

ग्रन्थकर्तुर्नामपरिचयोऽप्यन्ते प्रस्तुतो दृश्यते, यथा—

दुर्गसिंहोऽथ दुर्गात्मा दुर्गो दुर्गप इत्यपि।
यस्य नामानि तेनेदं चक्रे लिङ्गानुशासनम्॥ इति।

ग्रन्थस्यास्य नामान्तरं लिङ्गवृत्तिरित्यप्यभिधीयते।

**कातन्त्रीयपरिभाषा-शिक्षासूत्र-परिशिष्टच्छन्दःप्रक्रियाणां परिचयः**

**(परिभाषाः)—**

परिभाषासङ्ग्रहाख्ये ग्रन्थे कातन्त्रीया अपि पञ्चषष्टिः (६५) परिभाषा दुर्गसिंहेन, द्विषष्टिश्च (६२) भावमिश्रेण व्याख्याता दृश्यन्ते। तदतिरिक्ताः काश्चित् परिभाषाश्चतुरध्यायाना सूत्रपाठे वर्तन्ते, काश्चिच्च वृत्तिकारादिभिस्तत्तद्व्याख्यानेषूपन्यस्ताः। मन्ये· सर्वाणि परिभाषावचनानि यानि कातन्त्रेऽपेक्ष्यन्ते तानि दुर्गसिंहेन भावमिश्रेण च न व्याख्यातानीति। तत्र मूलग्रन्थस्याभाव· प्रथम कारण सम्भाव्यते, इतरच्च तद्व्याख्यानस्य विशेषावश्यकताऽभावोऽपि।

**(शिक्षासूत्राणि)—**

शिक्षासूत्राण्यपि पृथगस्य केनचित् सङ्कलितानि दृश्यन्ते। तत्र पाणिनीयशिक्षावद् न सर्वो विषयः प्रदर्शितः, सङ्क्षेपेणैव निदर्शनाय शिक्षा समादृता।

**(परिशिष्टम्)—**

व्याकरणस्यास्य पञ्चाङ्गाना परिचयप्रदानानन्तरं परिशिष्टरूपेण यत् किञ्चित् कातन्त्रे सयोज्यते तत्परिचय इहोपस्थाप्यते—

शर्ववर्माचार्येण लाघवोद्देश्येन येषां शब्दानां साधुत्वाख्यानाय कश्चिन्नियमो नोपन्यस्त, परं दुर्गसिंहेन वृत्तौ टीकायां च 'च–वा–तु–अपि' शब्दानां व्याख्यानबलेन ते शब्दाः कथमपि निष्पादितास्तेषां तदितरेषां चापि शब्दानां साधनाय श्रीश्रीपतिदत्तेन सवृत्तिकानि सूत्राण्युपस्थाप्य तत्पूर्तिः कृता। स च ग्रन्थादावित्थं प्रतिजानीते—

संसारतिमिरमिहिरं महेशमजमक्षरं हरिं नत्वा।
विविधमुनितन्त्रदृष्टं ब्रूमः कातन्त्रपरिशिष्टम्॥ इति।

अत्र परिशिष्टप्रबोधकारस्तर्काचार्यः श्रीगोपीनाथो व्याचष्टे—

"कातन्त्रस्य शर्ववर्मोक्तसूत्रस्य परिशिष्टं परिशिष्यते अवशिष्यते यद् वृद्ध्यागमादिलक्षणं कार्यं तत्परिशिष्टं शर्ववर्मणाऽनुक्तं वयं ब्रूम इत्यर्थः' इति। इह कातन्त्रपरिशिष्ट द्वन्द्वसमासान्तमेवेोलभ्यते। अग्रिमप्रकरणेष्वपि सूत्राणि प्रणीतानि न वेति प्रमाणाभावाद् वक्तु न शक्यते। केचिद् मन्यन्ते समासप्रकरणान्ते ग्रन्थे निर्मिते श्रीपति. पञ्चत्वमापन्नस्तेनाग्रिमो ग्रन्थो न प्रणीत इति। एतच्च विज्ञापितं सम्पादकेन श्रीगुरुनाथशर्मणा। ग्रन्थस्यास्य सन्धिप्रकरणे द्विचत्वारिंशदुत्तरैकशतम् ( १४२ ), नामप्रकरणे एकाधिकशतम् ( १०१ ), कारकप्रकरणे द्वादशाधिकैकशतम् ( ११२ ), षत्वप्रकरणे एकपञ्चाशत् ( ५१ ), णत्वप्रकरणे सप्तत्रिंशत् ( ३७ ), स्त्रीत्वप्रकरणे पञ्चाधिकैकशतम् ( १०५ ), समासप्रकरणे द्व्यशीत्युत्तरैकशतम् ( १८२ ) सूत्राणि वर्तन्ते। एवमत्र त्रिंशदुत्तरसप्तशत ( ७३० ) सूत्राण्युपन्यस्तानि।

एतत्सूत्रेषु श्रीपति-गुरुनाथाभ्यामितरैरपि कैश्चिदाचार्यैर्वृत्तिः कृताऽऽसीदिति कातन्त्रपरिशिष्टप्रबोधोद्धृतैराचार्यान्तराभिमतप्रदर्शकैर्वचनैर्विज्ञायते। तद् यथा—

"अत्र केचित् सस्वरनिर्देश एवायं प्रकृते यद्यपि तद्धितेऽकारो लुप्तस्तथापि भूतपूर्वगतिमाश्रित्य कर्तव्यमिति वदन्ति, तन्न। वचनस्य केवलघञन्ते ईरशब्दे चरितार्थत्वाद् भूतपूर्वगत्याश्रयणे बीजाभावात्" ( कात० प० प्र०, सन्धिप्र० २ ) इति।

श्रीरामचन्द्राचार्येण कलापतन्त्रतत्त्वबोधिनी नाम्नी टीका व्यरचीत्येकस्य विवरणेन ज्ञायते[1], टीकाया अस्याः सन्धिप्राकरणिकः कश्चिदंश उपलभ्यते। ग्रन्थादौ मङ्गलानन्तरं ग्रन्थप्रवृत्तेः प्रयोजनमाविष्कृतम्, तदित्थम्—

प्रणम्य श्रीनाथपदारविन्दमज्ञानसम्मोहतमोभिदापहम्।
कलापतन्त्रस्य च तत्त्वबोधिनीं कुर्वे कृती श्रीद्विजरामचन्द्रः॥
उपायाः सन्ति यद्यपि गोपीनाथादिनिर्मिताः।
विबुद्धिबोधनार्थाय तथाप्यत्र ममोद्यम.॥ इति।

---

1. Descriptive catalogue of the Sanskrit Manuscripts in the collections of the Asiatic Society of Bengal. Vol. 6, P 98.

श्रीशिवरामचक्रवर्तिना ( १८ शती ) परिशेषसिद्धान्तरत्नाङ्कुरनामक व्याख्यान परिशिष्टसूत्राणा कृतमासीत् । तस्य हस्तलेखो [1]नामप्रकरणान्तमुल्लिखितो दृश्यते ।

कातन्त्रपरिशिष्टकारस्य श्रीश्रीपतिदत्तस्य विषये श्रूयते—कलापतन्त्रविदुरस्य दुर्गसिंहस्य पार्श्वमुपेत्याध्ययनार्थं श्रीपतिना परमाग्रह कृतः, पर ब्राह्मणेतर विज्ञाय श्रीदुर्गसिंहेन स प्रत्याख्यात.। गुरुभक्त श्रीपतिर्दुर्गसिंहस्य मृण्मयीं प्रतिकृतिं विधाय रहसि प्रत्यह ता प्रपूजयन्नधीते स्म । अधिगतकलापतन्त्रार्थेन तेनैतद्विषये दुर्गसिंहो विज्ञापितः, परमप्रीतो दुर्गसिंहस्तमुक्तवान्—स्वीयग्रन्थे ममाभिमतस्य खण्डनं त्वया न कार्यम्, नो चेद् व्याघ्रस्त्वा भक्षयिष्यतीति । श्रीपतिदत्तेनैकत्र 'इति दुर्गमत निरस्तम्' इति लिखित तेन स व्याघ्र—भोजन जात इति । पर श्रीपतिदत्तो ब्राह्मण आसीदिति ये मन्वते तन्मते कश्मलैषा किंवदन्ती ( द्र०-कात० परि०, भूमिका, पृ० २ ) ।

श्रीविद्यासागरेणास्य परिशिष्टसूत्रस्य व्याख्यान कृत यस्य कारकप्रकरणमज्ञात उपलभ्यते । स एवाय विद्यासागर., येन कातन्त्रप्रदीपो रचित इति तदुद्धृतवचनेनैव विज्ञायते । यथा—

> कातन्त्रे बह्वो निबन्धनिवहाः सन्त्येव किन्तैर्यत ,
> मद्वाक्यामृतमन्तरेण विलसन्त्यस्मिन्न विद्वज्जनाः ।
> ताराः किं शतशो न सन्ति गगने दोषान्धकारावली-
> व्याकीर्णे तदपीन्दुनैव लभते मोदं चकोरावली ।।

"बहुविधविबुधवृन्दसन्दीपितासदर्थदहनज्वालावलीकवलीकृतं कारकशरीरं सिद्धान्तामृतशीकरेण सन्धुक्षयितुमुद्यमः । तत्र च यतोऽपैतीत्यादौ नातिव्याप्तिरिति कातन्त्रप्रदीपे प्रपञ्चितमस्माभिः, किन्त्वव्याप्तिपरिहारार्थोऽयमारम्भः" इति ।
"इहोत्तरत्र च सम्बद्धानामनिमित्तकानामादेशाभावाद्यर्थमसवर्ण इति वृत्तौ योज्यम्, अत एव श्रीपतिनाऽपि "तौ नामिनोऽसवर्णे" ( कात० प०, सन्धिप्र० २८ ) स्वरे वा प्रकृतिरित्यत्र समानानुवृत्त्या समानस्य नामिन इति किम् ? श्रिया इन्दुः, पाणावाद्यमिति प्रत्युदाहृतम् । प्रयोजनाभावान्नानुवृत्तिरिति चेन्निरपेक्षव्यावर्तनाय सफलत्वादिति" ( पञ्जी १।२।१२ ) इति ।

( छन्दःप्रक्रिया )—

वैदिकशब्दानामानन्त्यात् तत्प्रक्रियाया अधिकृतरूपेणाद्यावधि प्रवर्तमानत्वाच्च शर्ववर्माचार्येण तत्साधनार्थं प्रयासो न विहित इति टीकाकारेण ग्रन्थादौ प्रदर्शितम् । तथापि केचिच्छान्दसानपि काश्चित् प्रयोगान् भाषायामपि प्रयोज्यान् मन्यन्ते, तत्रोदाहरन्ति च—

> प्रप्रपूज्य महादेवं संसंयम्य मनः सदा ।
> उपोपहाय संसर्गमुदुद्गतः स तापसः ।। इति ।

---

१. द्र०- पूर्वोक्तग्रन्थसूचीपत्रम् ।

एतदेवाभिलक्ष्य श्रीचन्द्रकान्ततर्कालङ्कारेण **कातन्त्रच्छन्दःप्रक्रिया** सङ्कलिता, तत्र च तदीया वृत्तिरपि दृश्यते । श्रीचन्द्रकान्तस्य तद्ग्रन्थकर्तृत्वं नास्तीत्यभिज्ञाः ।

### उत्कलप्रदेशीयं कातन्त्रवाङ्मयम्

उत्कलप्रान्तेऽपि कातन्त्रव्याकरणस्याध्ययनमध्यापनं च पूर्वं प्रवर्तते स्म । अद्यापि तस्योत्तरभागेऽस्ति कातन्त्राध्ययने रुचिः केषाञ्चित् । तालपत्रेषूत्कलाक्षरैर्लिखिताः कातन्त्रस्य बहवो हस्तलेखा भुवनेश्वरस्थे उत्कलराज्यसङ्ग्रहालये सुरक्षिताः सन्ति । धातुपाठस्य परिभाषाग्रन्थस्य चापि हस्तलेखा उत्कलाक्षरेषु प्राप्यन्ते ।

१—तत्र वर्द्धमानमिश्रविरचितस्य कातन्त्रविस्तरस्योत्कर्षः परिलक्ष्यते । कातन्त्रविस्तरस्याध्यायचतुष्टयमुपलभ्यते । काव्यशास्त्रादावभियुक्तैर्ये शब्दाः प्रयुक्तास्तेषां सर्वेषां प्रायेण साधनाय कातन्त्रविस्तरे ( सन्धिनामाध्याययोः ) मया प्रयासः कृत इति ग्रन्थकर्तुः प्रतिज्ञावचनम् । तथा हि—

**महेश्वरं नमस्कृत्य कुमारं तदनन्तरम् ।**
**सुगमः क्रियतेऽस्माभिरयं कातन्त्रविस्तरः ॥**
**अभियोगपराः पूर्वे भाषाया यद् बभाषिरे ।**
**प्रायेण तदिहास्माभिः परित्यक्तं न किञ्चन** ॥ इति ॥

ग्रन्थान्ते स्वस्य ग्रन्थस्य च नाम निर्दिष्टम्—

**"इति श्रीमत्कर्णदेवोपाध्याय-श्रीवर्धमानमिश्रविरचिते कातन्त्रविस्तरे तद्धितपादः समाप्तः"** इति ।

कृद्भागस्य व्याख्याने शर्ववर्मकात्यायनाभ्यामुपेक्षितः शब्दराशिर्मया साधयिष्यते इति ग्रन्थकारः प्रतिजानीते । यद्यपि कातन्त्रव्याकरणस्य मया विचारयिष्यमाणा शब्दसाधनप्रक्रिया लोकेऽस्मिन् प्रचलति, तथापि पितुः श्रीमुखादाकर्ण्य सा प्रक्रिया मया लेखे निबद्ध्यते इति निर्देशो दृश्यते । तथा हि—

**उपेक्षितं सूत्रकृता सुदूरं कात्यायनेनापि न चिन्तितं यत् ।**
**संक्षिप्तभाषागतमत्र लक्ष्यसमस्तमस्माभिरुदाहृतं तत् ॥**
.. ... . ... . . .. ।
...... ...... ...... ॥
**सुप्रचारम् ·· शास्त्रं यद्यपि सुगुणैरिह ।**
**पितृवक्त्रात् तथाप्येतल्लिखितं विदुषा मया** ॥ इति ।

२—श्रीमता वामदेवेन कातन्त्रविस्तरे प्रतिपादितस्य तात्पर्यार्थस्य प्रकाशनाय तस्य **मनोरमानाम्नी** टीकैका प्रणीता । उच्यते च तेन—

वर्द्धमानवेगदीपप्रद्योतनशलाकया ।
टीकया द्योतयत्यर्थान् वामदेवसुधीः स्वयम् ।। इति ।

३—श्रीकृष्णनामकेन केनचिद् विदुषा वर्द्धमानसङ्ग्रहाख्यमेकं व्याख्यानं व्यरचि, यस्याऽऽख्यातप्रकरणमुत्कलाक्षरेपूपलभ्यते ।

४—वर्धमानानुसारी एक कातन्त्रप्रक्रियाग्रन्थ प्राप्यते, यस्याऽऽदावन्ते च ग्रन्थकारस्य नाम न दृश्यते, तस्यादावुच्यते—

प्रणम्य श्रीहयग्रीवं विघ्नराजं सुरसुतम् ।
प्रक्रिया क्रियतेऽस्माभिर्वर्धमानानुसारिणी ।। इति ।

५—श्रीगोविन्ददासेन वर्धमानप्रक्रियायाः सारं सगृह्य चमत्कारिण्या शैल्याऽऽस्वादनीयं किञ्चिद् वस्तु दर्शितम् । तत्रादावयं पाठो दृश्यते—

प्रणम्य श्रीहयग्रीवं वरदं श्रीगजाननम् ।
प्रक्रिया क्रियतेऽस्माभिर्वर्धमानानुसारिणी ।।इति ।

अन्ते च—

उद्धृत्य वर्धमानस्य प्रक्रियायाः प्रयत्नतः ।
रचितं प्रक्रियासारं सर्वशास्त्रप्रयोगवत् ।। इति ।

तद्धितभागस्यान्ते—"इति श्रीगोविन्ददासप्रणीतं वर्द्धमानसारव्याकरणं समाप्तम्" इति पाठस्यावलोकनेन ग्रन्थोऽयं तद्धितभागान्त एव विरचित इति प्रतीयते ।

६—कातन्त्रविस्तरे ये हि आक्षेपास्तट्टीकाकृद्भिस्तत्तत्स्थानेषु कृतास्तेषां निगूढार्थानां प्रकाशनेन समाधानाय श्रीरघुनाथदासेन वर्धमानप्रकाशाख्ये ग्रन्थे प्रयासः कृतः । ग्रन्थादौ स मङ्गलपुरस्सरं मातापित्रोर्नामनी निर्दिश्य ग्रन्थस्य सार्थकं नाम निर्दिशति । तथा हि—

प्रत्यूहाः प्रलयं प्रयान्ति नितरां यन्नामसंकीर्तनात्,
नाशं (नष्टम्) विश्वमभिप्रकाशयति यः सच्चित्तसिंहासनः ।
वीणापाणिनिपातदत्तसकलाभीष्टश्च दुष्टार्तिदः,
वाणीं स समलङ्करोतु नितरां श्रीमन्नृसिंहः सदा ।। १ ।।
कातन्त्रविस्तराक्षेपनिगूढार्थप्रकाशनम् ।
कुरुते रघुनाथः श्रीवासुदेवाम्बिकासुतः ।। २ ।। इति ।

अन्ते च निर्दिश्यते—

वासुदेवात्मजश्रीमद्रघुनाथेन निर्मिते ।
वर्धमानप्रकाशनाम्नि पादोऽगात् तृतीयकः ।।

यस्यानुग्रहतो भवेदतिजडः संख्यावतामग्रणी—
र्दीनोऽपीनसमश्चराचरपतेर्दासे दयादायिनः।
तच्छ्रीमन्नरसिंहपादभजनाच्छ्रीवर्द्धमानप्रकाशे ।
शाब्दे दातहृदयामोदेऽवदाते गतम् ॥ इति ।

एवमुत्कलाक्षरेषूपलब्धाः षड् ग्रन्था एव प्राधान्येन मया दृष्टाः । एतेषामनेके हस्तलेखा उपलभ्यन्ते । सर्वेषामेषामध्ययनेनावश्य कातन्त्रतन्त्रस्य किञ्चिद् वैशिष्ट्यमधिगन्तु शक्यते । उत्कलाक्षराणा पठने सामर्थ्याभावाद् मया तत्रत्याध्यापकप्रवरस्य श्रीमानगोविन्दमहोदयस्य विषयेऽस्मिन् साहाय्य सम्प्राप्य ग्रन्थपरिचय एव सामान्यतः सम्प्राप्तः । मन्ये—उत्कलाक्षराभिज्ञास्तत्र कश्चिन्मनोयोग कुर्वाणा वैशिष्ट्य किञ्चित् प्रकाशयिष्यन्तीति ।

**काश्मीरक कातन्त्रवाङ्मयम्**

काश्मीरेषु हस्तलिखिता ग्रन्था प्रायेण शारदाक्षरमया दृश्यन्ते । श्रूयते पूर्वमत्र प्रतिपाठशाल जगद्धरभट्ट-छुच्छुकभट्टप्रणीतौ कातन्त्रलघुवृत्त्यभिधानौ ( बालबोधिनी ) ग्रन्थावध्ययनाध्यापनविधौ प्रचुर प्रचलितावास्तामिति । श्रीनगरस्थे **'बुद्धगिरि'** नामके स्थाने पूर्वं श्रीभट्टाभिधानाया सस्कृतपाठशालायामनयोर्ग्रन्थयोरध्ययनमजायत ।

१—स्तुतिकुसुमाञ्जलिकर्त्रैव जगद्धरभट्टेन **बालबोधिनी** प्रणीतेति स्तुतिकुसुमाञ्जलेर्लघुपञ्चिकानाम्न्याष्टीकायाः प्रणेतू राजानकरत्नकण्ठस्य वचनेन विज्ञायते । यथा हि— "लवङ्गजातीफलपूगादिसुरभिवस्तुचर्वणेन मतिजाड्यापगम इत्यायुर्वेदे । तथा चोक्तमनेनैव कविना स्वकृताया बालबोधिन्या कातन्त्रवृत्तौ—

इह युक्त्यनुगानवद्यहृद्यक्रमदृब्धाः कृतिनां हरन्तु वाचः ।
मतिजाड्यलवं लवङ्गजातीफलपूगाः सविलासमासृजन्त्यः ॥ ( ५।६ )इति ।

अयमेव पाठो जम्मूनगरस्थे रणवीरसस्कृतानुसन्धानपुस्तकालये नागराक्षरेषु वर्तमाने ३६१ पत्रात्मके, श्रीनगरस्थानुसन्धानपुस्तकालये शारदाक्षरेषु च वर्तमाने बालबोधिन्या हस्तलेखे दृश्यते ।

ग्रन्थोऽयमाचार्येण जगद्धरभट्टेन स्वपुत्रस्य यशोधरस्य सारल्येन व्याकरणप्रक्रियाऽवबोधाय प्रणीत इति ग्रन्थादावुक्तप्रतिज्ञावचनेनासशयमुररीक्रियते । तथा हि तेनोक्तम्—

स्वसुतस्य शिशोर्यशोधरस्य स्मरणार्थं विहितो मया श्रमोऽयम् ।
उपयोगमियाद् यदि प्रसङ्गादपरत्रापि ततो भवेदबन्ध्यः ॥ इति ।

ग्रन्थस्य नाम्ना तत्रत्येनान्तिमलेखेन चेद वक्तु शक्यते—ग्रन्थकारेण प्रायः सूत्रार्थोदाहरण—प्रत्युदाहरणान्येव ग्रन्थे प्रदर्शितानि न तत्र शास्त्रीयानुपपत्तीनामुपस्थापन तत्समाधान चाऽऽरचितमिति । यथोक्तम्—

इति मितमतिबालबोधनार्थं परिहृतवक्रपथैर्मया वचोभिः।
लघुललितपदा व्यधायि वृत्तिर्मृदु सरला खलु बालबोधिनीयम्॥ इति।

अत्र 'तयप्, कल्पप' इत्यादौ पकारः, 'तृच्, अयच्' इत्यादौ चकारः, 'जातीयर्-देशीयर्' इत्यादौ रकारः, 'सुट्' इत्यादौ टकारश्चानुबन्धः पूर्वाचार्यवचनमनुसृत्य योजित इति निर्दिष्टम्।

२—लघुललितवृत्तिनामाऽपि एको हस्तलेखो जोधपुरस्थे राजस्थानप्राच्यविद्याप्रतिष्ठाने वर्तते, सोऽपि जगद्धरभट्टप्रणीतः। कातन्त्रबालबोधिन्यामुक्तानां वचनानां ललितैः शब्दैरत्र कृत उपन्यास इतीयानेव भेदो दृश्यते। यद्यपि ग्रन्थे एतादृशो नावलोक्यते क्वचिन्निर्देशो येनानयोर्ग्रन्थयोः पौर्वापर्यं ज्ञायेत, परं ललितेऽपि ग्रन्थे लालित्यस्याऽऽधिक्यं पश्चादेव समावेशयितुं शक्यते इति धियैव वक्तुं पार्यते। प्रायेणात्र विषयविवेचने साम्यमवलोक्यते।

वङ्गीये कातन्त्रव्याकरणे सन्धिप्रकरणे पञ्चैव पादा दृश्यन्ते, काश्मीरके तु निपाताख्यः षष्ठोऽप्येकः पादो वर्तते। अत्र केषाञ्चिदव्ययानामर्थः प्रयोगश्च निर्दिष्टः। एवं वङ्गीये कातन्त्रव्याकरणे नामचतुष्टयाध्याये षट् पादा वर्तन्ते, तत्र तुरीयकारकपादावसाने एव 'आ-ई' इत्येतौ स्त्रीप्रत्ययौ सूत्रद्वयेन[१] निर्दिष्टौ। परं काश्मीरके कातन्त्रव्याकरणे तदतिरिक्तोऽपि स्त्रीप्रत्ययात्मकः सप्तमपादः स्वतन्त्ररूपेण दृश्यते, तत्रैकषष्टिमितैः (६१) सूत्रैः स्त्रीप्रत्ययानां प्रपञ्चः प्रदर्शितः। तानि च सूत्राणि वररुचिकात्यायनेन विरचितानीति कर्त्रन्तरात् [२]पौनरुक्तिर्निवार्यते, यद्यपि कात्यायनप्रणीतेषु कृत्सूत्रेषूपलब्धायामपि दौर्गवृत्तौ ततः पूर्वं वर्तमानस्यास्य सप्तमपादस्य सूत्राणां दौर्गवृत्तेरनुपलम्भादत्र सन्दिह्यते, तथापि शार्ववर्मिकत्वाङ्गीकारेऽपि स दोषो वर्तते। एवं सूत्रद्वयेन स्त्रीप्रत्ययोर्विहितयोः पुनस्तेनैवाऽऽचार्येण तत्प्रपञ्चप्रदर्शनं कातन्त्रे न साधु मन्यते, तेन कात्यायनप्रणीतत्वमेवैषामङ्गीकरणीयम्। राजानकेन श्रीशितिकण्ठेन बालबोधिनीन्यासे केषाञ्चिन्मते एषां सूत्राणां शर्ववर्मप्रणीतत्वाऽऽख्यानाय कारकीयसूत्रद्वयस्यार्वाचीनत्वमुक्तम्[३], तत्तु प्रदर्शितरीत्या समीचीनं न प्रतिभाति।

---

१ स्त्रियामादा, नदाद्यञ्चिवाह्व्यन्स्यन्तृमन्त्रिनान्तेभ्य ई (२।४।४९, ५०) इति।

२. ननु स्त्रीप्रत्ययपादेऽपि 'आप्-ई' इत्येतौ प्रत्ययौ विहितौ, सत्यम्-सर्ववर्माचार्येण इयानेव स्त्रीप्रत्ययोपदेशः कृतोऽभूत्, पुनः कात्यायनेन स्त्रीप्रत्ययपादे विस्तरेण स्त्रीप्रत्यया उपदिष्टा इत्याचक्षते (बालबोधिनी—ह० लें०, नागरा०, पत्र सं० ९९, श्रीनगरं)।

(अत्र 'आप् इत्यत्र आ' इति पाठः समीचीनः प्रतिभाति, पाठान्तरे तु पकारः पूर्वाचार्यवचनमनुसृत्य कृत इति विज्ञेयम्)।

३. अथ स्त्रीप्रत्ययपादेऽपि आबादिभिः प्रत्ययैः सिद्धो सत्यामिदं सूत्रद्वयं स्त्रियामादाप्, नदाद्यञ्चीत्यादिकं पौनरुक्त्यावहमित्याशयेनाऽऽशङ्कते—ननु स्त्रीप्रत्ययपादेऽपीत्यादिना परिहरति-सत्यं शर्ववर्मणेत्यादिना। ——यदि स्त्रीप्रत्ययपादोऽपि सर्ववर्मकृतः स्यात् तदा दुर्गादिभिः सोऽपि व्याकृतः स्यादित्यर्थः। इयानेवेति सूत्रद्वयात्मक इत्यर्थः। कात्यायनेनेति, वररुचिना स्त्रीप्रत्ययपादस्योक्तत्वे सति कर्तृभेदान्न पौनरुक्त्यमित्यर्थः। केचित् सूत्रद्वयमिदमपुराणमित्याहुः (बालबोधिनीन्यासः—ह० लें०, पत्रसं० ५१९)।

३—जगद्धरभट्टप्रणीताया बालबोधिन्या व्याख्यानरूपो न्यासग्रन्थो हैदरशाहसूनौ हस्सने काश्मीराधिपतौ सति जगद्धरभट्टस्य नप्तृकन्यातनयातनूजेन श्रीशितिकण्ठेन प्रणीत इति तद्ग्रन्थस्याऽऽदावुपन्यस्तेन लेखेन प्रतीयते। तद् यथा—

यो बालबोधिन्यभिधां बुधेन्द्रो जगद्धरो यां विततान वृत्तिम्।
तन्नप्तृकन्यातनयातनूजो व्याख्यामि ता श्रीशितिकण्ठकोऽल्पम्॥ ८॥
भूजानौ हस्सनाख्ये भुवमवति मया तन्यते ग्रन्थ एषः॥१०॥
कश्मीराधिपति. कृपाजलनिधिर्विख्यातकीर्तिश्चिरम्,
जीयाद् हैदरशाहसूनुरनघः कन्दर्पदर्पापहः॥११॥ इत्यादि।

ग्रन्थे उद्धृतस्य गुर्जराधिपतेः श्रीमहम्मदशाहस्य राज्यकालः १४५८ मितखिस्ताब्दादारभ्य १५११ मितखिस्ताब्दपर्यन्तमासीदिति रासमालाग्रन्थाद् विज्ञायते। कश्मीराधिपतेर्हस्सनस्य राज्यकालः १४७२ मितखिस्ताब्दादारभ्य १४८४ मितखिस्ताब्दपर्यन्तमासीदिति श्रूयते, तदनुसारेण ग्रन्थोऽयमेतदन्तरे एव प्रणीत आसीत्। नामाध्यायस्य समाप्ताविद लिखितम्—

त्र्यङ्कविश्वमिते शाके वर्षे मुनियुगैर्मिते।
नभस्यसितसप्तम्यां समाप्तो नामनिर्णयः। इति।

तेन १३९३+७=१४००+७८=१४७८ मिते खिस्ताब्दे कृतेरस्या नामचतुष्टय व्याख्यातमित्यवगन्तव्यम्।

४—आचार्यान्तरप्रणीतायाः कातन्त्रलघुवृत्तेर्हस्तलेखः शारदाक्षरमयस्तत्र (काश्मीरेषु) दृश्यते, पर हन्त! आचार्यादिसङ्केतस्तत्र न कृत। ग्रन्थारम्भे निम्नाङ्कितः पाठो वर्तते—

यः कार्तिकेयमाराध्य शब्दशास्त्रमिदं महत्।
सञ्चिक्षेप नमस्तस्मै गुरवे शर्ववर्मणे॥
शर्ववर्मशशाङ्केन शशाङ्केनेव शर्वरी।
अयमुद्द्योतितो लोकः कलापकमरीचिभिः॥ इत्यादि।

अस्मिन् हस्तलेखे उपन्यस्तो धातुपाठः पाणिनीयः प्रतीयते।

५—उग्रभूतिप्रणीतस्य शिष्यहितान्यासस्य हस्तलेखः २४६ पत्रात्मकः शारदाक्षरेषु वर्तते। सम्पूर्णोऽयं ग्रन्थः, अस्यान्ते पठ्यते—

"इति भट्टोग्रभूतिकृते शिष्यहितान्यासे शिष्यालोकाभिधाने कृत्प्रकरणे षष्ठः पादः" इति। विश्वेश्वरानन्द-वैदिक-शोधसंस्थानेऽपि होशियारपुरस्थेऽस्यैको हस्तलेखो वर्तते। दिल्लीस्थे प्राचीनाभिलेखागारे ४०६ पत्रात्मकोऽस्य सम्पूर्णो हस्तलेखः शारदालिपिमयो दृश्यते। तत्र मङ्गलवाक्यस्य व्याख्यानवचनेनावगम्यते-शिष्यहितानाम्नी

वृत्तिरन्येन केनचिद् विदुषा प्रणीता, तस्या न्यासाभिधमेतद् व्याख्यानं श्रीउग्रभूतिनाऽकारीति। उक्त च तेन—

"अभिमतदेवतापूजासपूर्विका प्रवृत्तिरिति सतामाचारमनुपालयन् वृत्तिकृन्नमस्करोति —

ॐ श्रीकण्ठाय महामोहध्वान्तविध्वंसभानवे।
भुवनारम्भसंहारकारणाय नमो नम.॥ इति" इति।

६—आचार्यछुच्छुकभट्टप्रणीतायाः **कातन्त्रलघुवृत्तेः ३७८** पत्रात्मको हस्तलेखो नागराक्षरेषु साम्प्रत दिल्लीस्थे प्राचीनग्रन्थसङ्ग्रहालये वर्तते। ग्रन्थस्यास्याध्ययन १६०० खीस्ताब्दपर्यन्त कश्मीरेषु प्रतिपाठशालमासीदिति तद्विवरणाद् विज्ञायते। ग्रन्थस्यास्याऽऽदिमध्यावसानेषु क्वचिदपि ग्रन्थकर्तुर्नामाङ्कन नावलोक्यते, पर ग्रन्थसूचीपत्रे उपस्थापितेन तदीयपरिचयेनैतदवगम्यते[1]। आदौ श्रीगणेश कुमार च नमस्कृत्य ग्रन्थव्याख्यानमारभ्यते। अत्र सन्धिप्रकरणस्य षष्ठपादे निपाताः सङ्कलिता अवलोक्यन्ते। उपसर्गाणा मध्येऽन्वाद्या एकादश शब्दा कर्मप्रवचनीयसञ्ज्ञका अनुक्रममुक्ताः। **"वा नौ द्वित्वे" (२।३।२)** इतिसूत्रव्याख्याने **"शिवो वा स्वामी, शिवो युवयोः। शिवो नौ स्वामी, शिव आवयोः"** इत्याद्युदाहणैर्लेखक आत्मान शिवमतानुयायिनमभिव्यञ्जयति।

**विभक्तिसञ्ज्ञा विज्ञेया वक्ष्यन्तेऽतः परं तु ये।**
**अद्वयादेः सर्वनाम्नस्तु किंबहोश्च पराः स्मृताः॥** इति सूत्रे किंशब्दस्य पाठेन पाणिन्यभिमत सर्वनामशब्दाना पाठ ग्रन्थकर्ताऽङ्गीकरोतीति प्रतीयते। वङ्गीयपाठे तु बहोश्चेति पाठो दृश्यते। नामप्रकरणस्य सप्तमे पादे स्त्रीप्रत्ययसूत्राण्यपि व्याख्यातानि। कृत्प्रकरणे पञ्चम पादम् **"उणादयो भूतेऽपि"** इति सूत्रेणाऽऽरभ्य वङ्गीयपाठक्रमाद् व्यत्यासः प्रदर्शित•।

७—कृषाणुकोकिलगुरुणा **कातन्त्रकौमुदी**नामा ग्रन्थः प्रणीत, यस्य हस्तलेखः शारदाक्षरेष्वनुसन्धानपुस्तकालये श्रीनगरस्थे वर्तते। ग्रन्थारम्भे तेन ग्रन्थप्रयोजनादि एभिर्वचनैरुक्तम्—

---

1 The most notable manuscripts on grammar are (i) Katantra Laghuvritti and (ii) Balabodhini ··· the first work is a Commentary by Chhuchchhuka Bhatta on Sarvavarman's Kalap-Sutras ( A descriptive catalogue of Sanskrit manuscripts, in the private library of His Highness Shri Raja Rajeshwar Maharajadhiraj Maharaja Shri Hari Singh Bahadur, Jammu and Kashmir-Introduction, P 3 ). Ghhuchchhuk Bhatta Wrote a short commentary on them which came to be known as the Katanra Laghuvritti ( Summaries of important manuscripts, Grammar, P. 19 ).

पुष्णाति बुद्धिगाम्भीर्यं मुष्णाति मानस मलम् ।
लुनाति पापं भक्ताना यस्तस्मै शम्भवे नमः ॥
नौमि तं शर्ववर्माणं यः समाराध्य पावकिम् ।
सातवाहनभूपार्थं शब्दशास्त्रं शुभं व्यधात् ॥
उपलब्धेः सुमनसामवकाशो यतोऽभवत् ।
गिरा मधुरया जीयात् कृपालुः कोकिलो गुरुः ॥
श्रीभारतीपादयुगं निधाय हृदि कामदम् ।
शिशूनामुपकाराय कुर्वे कातन्त्रकौमुदीम् ॥ इति ।

एतेषा समग्रन्थाना कश्मीरेष्वनेके पूर्णा अपूर्णाश्च हस्तलेखा प्रायेण शारदाक्षरेषूपलभ्यन्ते, तेषामध्ययन तत्रत्या विद्वासो जिज्ञासवश्चाकुर्वन् । तत्रत्याना विदुषा कृते व्याकरणज्ञाने ते हस्तलेखा अत्यन्तमुपकार कृतवन्तः । पर शारदाक्षरेषु मुद्रणव्यवस्थाया अभावाद् देशान्तरस्था. शारदाक्षरानभिज्ञाश्च विद्वासस्तज्ज्ञानार्जने प्रभवो नाभूवन् । अस्तु शारदाक्षरेषु नागराक्षरेषु वा तेषा ग्रन्थाना मुद्रणव्यवस्थाया सत्यामवश्य धीरास्तत्तद्देशीय किञ्चिद् वैशिष्ट्य प्राप्नुयुरिति विश्वासः प्रदेशीयसर्वकारेण देशीयसर्वकारेण चात्रापेक्षिता व्यवस्था कर्तुं शक्यते । सम्प्रति बालाना हितवर्धनायाधिकारिभिरेतत्कर्तव्यमित्यनुरोधः ।

## राजस्थानीयं कातन्त्रवाङ्मयम

राजस्थानेषु सरलस्य सङ्क्षिप्तस्य चास्य कातन्त्रव्याकरणस्य जैनाचार्यैर्यथासम्भवमध्ययनाध्यापनाभ्या प्रचार. कृत इति प्रतीयते । तेष्वनेकैर्व्याख्यानग्रन्था अपि रचिताः । अद्यापि जैनभाण्डागारीयहस्तलेखेषु कातन्त्रव्याकरणस्य बहवो हस्तलेखा. सुरक्षिताः सन्ति । अत्र वैदिकपरम्पराया अनुयायिना प्रायेणाभावात् पाणिनीयव्याकरणस्य न तथा प्रचारः सजातो यथा वैदिकप्रक्रियारहितस्य कातन्त्रस्य सारस्वतस्य च । "कातन्त्रव्याकरणस्यावबोधाय पूर्वमेव बालकान् 'सीदो वरणा समामुनाया' इत्यादीन्यपभ्रशशब्दरूपाणि पाठयन्ति स्माऽऽचार्याः । यद्यपि परभाविन आचार्याश्छात्राश्च नेद रहस्य विदन्ति स्म, तथापि कातन्त्रसन्धिपादीयसूत्राणामपभ्रशरूपाणि प्रचलितान्यासन् । **हाड़ौती बोली और साहित्य** नामके ग्रन्थे डॉ॰ कन्हैयालालशर्मणैतत् सर्वं निर्दिशता प्रथमपादीयसूत्राणा हाड़ौती बोलीति भाषान्तरस्य रूपाणि दर्शितानि ( द्र॰—हाड़ौती बोली और साहित्य, पृ॰ ३६ ) । उज्जयिनीस्थे विक्रमविश्वविद्यालयीये सिन्धियाप्राच्यविद्याशोधप्रतिष्ठाने एकस्मिन् हस्तलेखे सन्धिपञ्चतयस्यापभ्रशरूपाणि दृश्यन्ते ( स॰ ६९८३ ) । अत्र मया राजस्थानीयेषु विविधशोधसस्थानेषु समधीताना कातन्त्रव्याकरणस्य केषाञ्चिद् हस्तलिखित—मुद्रितग्रन्थाना[1] विषये किञ्चिदुच्यते—

---

१. केषुचिद् हस्तलेखेषु त्रुटिवशाल्लेखक—ग्रन्थनामनिर्देशाभावेन तद्विषये वक्तुं न शक्यते ।

१—श्रीमेरुतुङ्गसूरिणा कलापव्याकरणस्य **बालावबोधनाम्नी** वृत्तिस्त्रयोदशे ईशवीय-शतके ( ई० १२०१–ई० १३०० ) विरचिता। तत्राऽऽदावुच्यते—

**प्रणम्य शारदां देवीं ज्ञाननेत्रप्रबोधिनीम्।**
**शार्ववर्मिकसूत्राणां प्रक्रियां च क्रमाद् ब्रुवे ॥** इति।

कृत्प्रकरणस्याऽऽदौ तेन निर्दिष्टम्—पूर्वं कात्यायनेन ये प्रत्यया विस्तरेणोक्तास्तेऽत्र सङ्क्षेपतो बालानामवबोधाय मयोच्यन्ते[1] इति।

२—१३३६ तमे ईशवीयाब्दे ठक्कुरेण श्रीसंग्रामसिंहेनैतद् व्याकरणमाधारीकृत्य सङ्क्षिप्त **बालशिक्षा**ख्य व्याकरण प्रणीतम्, यत्र प्रकरणविभागोऽपि कातन्त्रव्याकरणमेवानुसरति। ग्रन्थादौ प्रतिज्ञातमपि—

**श्रीमन्नत्वा पर ब्रह्म बालशिक्षां यथाक्रमम्।**
**सङ्क्षेपाद् रचयिष्यामि कातन्त्रात् शार्ववर्मिकात् ॥**
**आदौ सञ्ज्ञा तथा सन्धिः स्यादयः कारकाणि च।**
**समासाश्चोक्तिविज्ञान सस्कारस्त्यादयस्तथा ॥**
**इत्यष्टप्रक्रमोपेतामेतां कुर्वन्तु हृद्गृहे।**
**कातन्त्रभास्कराभावे यथा दीपश्रिय जनाः ॥** इति।

३—कातन्त्रवृत्ति पञ्जिका चाऽऽधारीकृत्य श्रीजिनेश्वरसूरिशिष्येण प्रबोधमूर्तिगणिना १४ तमे ईशवीयशतके सन्ध्यादिकृत्पर्यन्त **दुर्गपदप्रबोधा**ख्यो ग्रन्थः प्रणीतः। उक्त च तत्रादौ—

**ग्रन्थ सम्यगमुं विभाव्य निखिलां वृत्तिं प्रसङ्गात् तथा,**
**क्वापि क्वापि च पञ्जिकामपि सभावार्थं विदित्वा जनात्।**
**विज्ञाय क्रमशस्ततोऽखिलमतग्रन्थार्थसारं समा-**
**लोच्यासेव्य च मुक्तिमार्गमचिराज् ज्ञानं लभन्तां परम् ॥** इति।

४—१३५२ तमे विक्रमाब्दे श्रीजिनप्रभसूरिणा **कातन्त्रविभ्रम**नामा टीकाग्रन्थः प्रणीतः। उच्यते च तत्रादौ ग्रन्थनिर्माणकालादिविषये—

**पक्षेषु शक्तिशशिभून्मितविक्रमाब्दे,**
**धात्र्यङ्किते हरतिथौ पुरि योगिनीनाम्।**
**कातन्त्रविभ्रम इह व्यतनिष्ट टीकाम्,**
**अप्रौढधीरपि जिनप्रभसूरिरेताम् ॥** इति।

---

१. कात्यायनेन ये पूर्वं विस्तरेण कृता कृत।
ते सङ्क्षिप्याभिधीयन्ते बालानामवबुद्धये ॥ इति।

५,६—चारित्रसिंहेन गोपालाचार्येण च कातन्त्रविभ्रमस्य **व्याख्यानम**कारि। चारित्रसिंहस्य व्याख्यानमिन्दौरात् १९२७ तमे खिष्टाब्दे मुद्रितम्। प्रायेण सार्धशतमिताः ( १५० ) शब्दाः प्रश्नरूपेणात्रैकविंशतिश्लोकेषूपनिबद्धाः, तेषामेव साधन युक्तिभिर्व्याख्याने दर्शितम्। श्लोकेषु समागतेन चकारेणान्येऽपि सम्भाव्याः शब्दाः सङ्कलिताः। अवश्यमेवेह व्याख्यातान् शब्दानाकर्ण्य जायते कश्चिद् विभ्रमः, यथोदाह्रियते –

हस्तौ द्विवचनं नेदं शोभनेष्वित्यसप्तमी।
क्षीरस्येति न षष्ठीयं त्याद्यन्तं वायुरित्यपि ॥ ६ ॥
अद्यौर्न नञ्समासोऽयं सर्वेषामिति चैकता।
अन्येषामपरेषां च केषा कासां तथा दश ॥ १८ ॥ इत्यादि।

एतदीयः प्रबन्धविशेषः प्रकरणान्ते सयोजित इति तत्रैव द्रष्टव्यम्।

७—विक्रमस्य पञ्चदशे ( १४६५ ) शतके श्रीनन्दिपण्डितात्मजेन श्रीदेशलेन पितुरुपदेशमनुसृत्य श्रीशङ्करस्य बोधाय तदाग्रहेण त्रिलोचनकृतायाः कातन्त्रवृत्तिपञ्जिकायाः **प्रदीप**नाम्नी व्याख्या कृता। ग्रन्थान्ते तेन सर्वमेतन्निर्दिष्टम्—

कार्तिकेयं समाराध्य कृत शास्त्रमनाकुलम्।
तस्मै नमोऽस्तु गुरवे श्रीमते शर्ववर्मणे ॥
धातुपारायणकर्त्रे व्याकरणत्रितयवेदित्रे।
शब्दसरोजसवित्रे विद्यादात्रे नमः पित्रे ॥
उक्तं मया यथाबोधं शङ्कराय सुबोधिने।
युक्तायुक्तविचारस्तु कर्तव्यः खलु सूरिभिः ॥
याचितोऽहं पुरा तेन प्रतिपन्नं मयाऽपि तत्।
स्मृत्यर्थं क्रियते यस्मात् तस्मान्नो नात्र दूषणम् ॥
पितृभिर्यदुपन्यस्तं स्मरणाय कृतं मया ॥ इति।

कृत्प्रकरणस्य टीकायाः प्रारम्भात् पूर्वं पितुः श्रीनन्दिनः स्वर्गवासः समजायत, तद्दुःखस्याविच्छिन्नता मत्वाऽऽचार्येण कृद्भागस्य व्याख्यान कृतम्। उक्त च तेन—

"सिद्धि=वृक्षादिवदित्यादि। अत्र चान्तरे दिवगते पितरि तद्वियोगानलदग्धमानसानां कीदृशं हि ग्रन्थदूषणसमाधानबुद्धिकौशलमुपजायते इति जानद्भिरप्यस्माभिः प्रारब्धापरिसमाप्तिदुःखमवगम्य यथामति किञ्चिदुच्यते" इति।

८—श्रीनन्दिपण्डितेन सम्भवतः कातन्त्रव्याकरणसम्बन्धी **धातुपारायणाख्यो** ग्रन्थः प्रणीत आसीत्। **राजस्थान में संस्कृत-साहित्य की खोज** नामके ग्रन्थे श्रीधररामकृष्णभाण्डारकरेण नन्दिटीकाया दुर्गपदाना धनेश्वरशिष्य-चन्द्रसूरिकृता या व्याख्या तस्या हस्तलेखस्योल्लेखः कृतः। मन्ये–नन्दिटीकोक्ताना क्लेशबहुलाना शब्दाना तात्पर्यार्थस्य तत्र

स्पष्टाभिव्यक्तये चन्द्रसूरिणा प्रयासः कृत इति ( द्र०—पृ० ३१, जैसलमेरस्थे हस्तलिखितसङ्ग्रहालये दृष्टोऽय हस्तलेखः श्रीभाण्डारकरेण )। ग्रन्थस्य विवरणविशेषाभावाद् नन्दिटीकाया विषयेऽन्यत् किञ्चिद् वक्तु न शक्यते।

९—षोडशे ईशवीयशतके ( ई० १५०१ ई०–१६०० ) गोल्हणनामकेन पण्डितेन तद्धितप्रकरणान्त दौर्गवृत्तौ टिप्पण्यः समायोजिताः।

१०—१६०५ मिते विक्रमाब्दे क्षत्रियबालकानां बुद्धेर्विवृद्ध्यर्थं श्रीरामसिंहस्याऽऽज्ञया पण्डितेन श्रीबलदेवेन कालापप्रक्रिया रचिता। उक्त च ग्रन्थादौ—

वाणी नत्वा स्वभक्तानामज्ञानध्वान्तहारिणीम्।
कालापप्रक्रिया बालबोधनाय विधीयते ॥ इति।

ग्रन्थान्ते—

रामसिंहाज्ञया बुद्ध्या कालापोद्धारनिष्ठया।
बलदेवेन रचिता कालापप्रक्रिया शुभा ॥ इति।

आख्यातप्रकरणस्य विस्तर प्रदर्शयितुमात्मानमसमर्थं मन्यमानस्तत्र हेतुमुपन्यस्य तत्प्रकरण पूर्यते, यथोक्त च—

धातूनामप्यनन्तत्वान्नानार्थत्वाच्च सर्वथा।
अभिधातुमशक्यत्वादाख्यातख्यापनैरलम् ॥ इति।

कृत्प्रकरणे सम्भवतो विंशतिरेव ( २० ) सूत्राणि व्याख्यातानि।

११—श्रीकर्मधरेण विदुषा कातन्त्रमन्त्रप्रकाशाख्यो व्याख्यानग्रन्थः प्रणीतः, यस्य द्वन्द्वसमासान्त. खण्डचतुष्टयात्मको हस्तलेखः ( स० ३२०३ ) अलवरस्थे राजस्थानप्राच्यविद्याप्रतिष्ठाने सगृहीत.। ग्रन्थादौ चत्वारिंशद्भिः श्लोकैर्मङ्गलपुरस्सर ग्रन्थकारेण श्रीदेवनाथस्य स्वस्य च परिचयमुपस्थाप्य ग्रन्थस्य बालावबोधरूप प्रयोजनमुक्तम्। दौर्गवृत्तौ सत्या स्वीय व्याख्यान शिलोञ्छवृत्तिवन्निरूपितम्। यथोक्तम्—

शेषाशेषफणामणिव्यतिकरे कान्ताकृतिं बिम्बिताम्,
पश्यन्ती रहसि स्थिताऽपि परिषद्भ्रान्त्या ययासुर्मुहुः।
या प्रौढाऽपि नवं समागमरसं भावैः समातन्वती,
श्लिष्टा गाढमुरःस्थलेन हरिणा लक्ष्मीः श्रिये साऽस्तु वः ॥ १ ॥
त्रिलोचनख्यातमभिन्नदुर्गं सार्धं नमस्कृत्य विविक्तविद्यम्।
कातन्त्रमन्त्रार्थविनिश्चयार्थमयं प्रयत्नः क्रियते शिशूनाम् ॥२॥
दुर्गत्वमुन्नीय स पञ्जिकाया वृत्तेर्विवेके विजयः प्रवृत्तः।
विवेचयंस्तद्वचनानि वाग्मी स्वयं पुनर्दुर्गतमो बभूव ॥३॥

ततस्ततां युक्तिभिरुक्तिमुक्ताविविक्तपङ्क्ति क्वचिदप्यमुख्यम् ।
संयोजयिष्ये निजगीर्गुणेन सतां हृदि श्रीमति संश्रयाय ॥४॥
त्रिलोचनाचार्यवचःप्रसादाद्, दुर्गस्य वृत्तिः सुगमा यदीयम् ।
क्वचित् क्वचिन्मे वचसोऽवकाशः शिलोञ्छवृत्त्या घटते तथापि॥५॥
इति ।

कायस्थवशोद्भवस्य श्रीमेघस्य यो ह्यात्मजस्त्रिलोचनस्तस्यात्मजो गदाधरस्तत्पुत्रो भूधरस्तदात्मजो भवनाथः, यो हि हुसेनशाहस्य सचिवत्वमधिगम्य स्वीयैः प्रशसनीयैर्गुणबहुलैर्देवनाथत्व प्रापत्, तस्य समादेशेन कर्मधरेणाय ग्रन्थो रचित. । अत्र पृथ्वीधर-देवनन्दि-( जैनेन्द्र ) मैत्रेय-पुरुषोत्तम-गौतम-कुलचन्द्र-विजयानन्द-वर्धमान-वररुचि-दुर्ग-चन्द्रगोमि-शाकटायनाद्याचार्याणा तत्र तत्र वचनान्युद्धृतानि । एतेन विजयानन्द-पृथ्वीधराद्याचार्येभ्योऽनन्तरमेव ग्रन्थोऽय प्रणीत इति वक्तु शक्यते । अत्र प्रदर्शितैः कैश्चिद् गूढवचनैर्मन्त्रप्रकाश इति नामान्वर्थता भजते । यथा—

१—वृत्तिकारेण दुर्गसिंहेन 'देवदेवम्' इत्यादिश्लोकोऽलेखि न तु कृत. ।

२—'काम्पील्य-काम्पिल्य' इति पाठेऽर्थभेदाद् वैशिष्ट्य प्रदर्शितम्[१] ।

३—व्याकरणस्यास्य नामचतुष्टयम् । १—आचार्येण शर्ववर्मणा प्रणीतत्वाच्छार्ववर्मिकम् । २—कुमारप्रसादान् प्रवृत्तत्वात् कौमारम् । ३—सङ्क्षिप्तत्वात् कातन्त्रम् । ४—कुमारेण स्ववाहनकलापस्य नाम्ना सञ्ज्ञायाः कृतत्वात् कलापकमिति । तत्र गौडदेशीयाः 'कालाप' इत्येव नामाभिप्रयन्ति । इत्यादि ।

१२—श्रीधनप्रभसूरिणा चतुष्कव्यवहारढुण्ढिकाख्या व्याख्या रचिता, या तद्धितप्रकरणान्तैव हस्तलेखयोर्दृश्यते । ग्रन्थादावुक्तानि नमस्कारादिवचनान्युद्ध्रियन्ते—

नमः श्रीसरस्वत्यै भगवत्यै ।

प्रणम्य ता जगत्पूज्यां गुरूश्च देवी सरस्वतीम् ।
यस्याः प्रसादमात्रेण स्याद् रुद्रोऽपि कवीश्वरः ॥ १ ॥
सुप्रसादं चतुष्कस्य लिखितां ढुण्ढिकामिमाम् ।
करोतु मे महायोगिध्यायां गीः परमेश्वरी ॥ २ ॥ इति ।

---

१. यदाह पृथ्वीधर —क पीडयतीति कर्मण्यण् । कम्पीडो नाम राजा तेन निर्वृत्त नगरमिति सकाशादेर्ण्य. इति काम्पील्ये नगरे तपोऽध्ययनदानात कश्चित प्रसिद्ध इत्यर्थ । प्रबोधकारप्रक्रमभङ्गदोषमुद्भाव्य काम्पिल्य सिद्ध इति पाठं मन्यते, तदा काम्पिल्यनामा नागः प्रसिद्ध इत्यर्थो वाच्य । तथा च—

रूपैश्च वाक्यैश्च शुभैस्तरङ्गै प्रभातकाले नृपमन्दिरस्थ ।
श्रीविक्रमादित्यविबोधनाय काम्पिल्यनाग श्रवण करोति ॥ इति ।

( इ० स० ३२०३, प्र० ख०, प०—आ १५, रा० प्रा० वि० प्र०, अलवरस्थे ) ।

हस्तलेखान्तरे च पाठान्तरमवलोक्यते—

ॐ नमो विघ्नराजाय ।

नत्वा जिनं गुरोः सत्प्रसादाद् ग्रन्थ. प्रतन्यते ।
चतुष्को व्यवहाराख्यः श्रीधनप्रभसूरिणा ॥ इति ।

१३—मुनिश्रीहर्षेण कातन्त्रदीपकाख्यो ग्रन्थः प्रणीतः, यो ह्याख्यातान्तमुपलभ्यते, यस्याऽऽदौ ग्रन्थकार इत्थ प्रतिजानीते—

भूर्भुवःस्वस्त्रयीशानं वरिवस्यं जिनेश्वरम् ।
स्मृत्वा च भारती सम्यग् वक्ष्ये कातन्त्रदीपकम् ॥ इति ।

आख्यातान्ते स्वीय परिचयमुपस्थापयन्नित्थ स ब्रूते—

श्रीमुनीश्वरसूरीणां शिष्येण लिखितो मुदा ।
मुनिहर्षमुनीन्द्रेण नाम्ना कातन्त्रदीपकः ।
व्यलेखि मुनिहर्षाख्यैर्वाचकैर्बुद्धिवृद्धये ॥ इति ।

१४—श्रीहरिकलशोपाध्यायेन बालावबोधनाम्नी व्याख्या रचिता, पञ्चसन्धिपर्यन्तमिय व्याख्या श्रीगोल्हणटीकामाश्रित्य वर्तते इति तल्लेखेन प्रतीयते । बालावबोधार्थं कृतेय व्याख्याऽन्वर्थता भजते । यथा—

दृष्ट्वा गोल्हणटीकां सुगमां लिखति स्म राजगच्छीयः ।
हरिकलशोपाध्यायष्टिप्पनकं बालबोधार्थम् ॥ इति ।

१५—क्रियाकलापाख्य एको ग्रन्थ. श्रीविद्यानन्देन विजयानन्देन वा प्रणीतः, सोऽपि कातन्त्रसाम्प्रदायिकः प्रतीयते । विद्यानन्द-विजयानन्दयोर्लेख एकत्र दृश्यते । यथा—

पूर्वं पूर्वकविप्रणीतविविधग्रन्थेषु दृष्टास्ततः ।
निर्णीता हृदये निरूप्य निपुण ये धातुपारायणम् ॥
धातूनां तनुधीरपि व्यरचयत्तेषामिम सङ्ग्रहम् ।
विद्यानन्दकविर्विशुद्धहृदयः कायस्थवंशोद्भवः ॥
व्युत्पत्तिवर्त्मन्यकृतप्रवेशैः शास्त्रं जडैर्नेदमुदीरणीयम् ।
धात्वर्थतन्मात्रनिरूपणेन यतो मतिर्मोहमुपैति तेषाम् ॥

इति श्रीविजयानन्दविरचिते क्रियाकलापे चतुर्थोऽध्यायः समाप्तः । इत्यादि ।

दृश्यते क्वचित् पाठान्तरमपि—

"इति श्रीसारस्वतोद्गारावतारकायस्थकुलालङ्कारविजयानन्दकृते क्रियाकलापे चतुर्थोऽध्यायः" इति ।

१६—श्रीजिनदेवसूरिणाऽपि क्रियाकलापाख्यः कातन्त्रीयः कश्चिद् ग्रन्थो रचित ।

अत्र केषाञ्चिद् हस्तलिखित—मुद्रितग्रन्थाना परिचयेन राजस्थानेषु कातन्त्रव्याकरणस्य जातः प्रचारः परिलक्ष्यते। सर्वेषामेतेषा हस्तलिखिताना मुद्रिताना च ग्रन्थानामध्ययनाध्यापनविधावुपयोगो विद्वद्भिः कृतो न वेत्यैतिह्याभावान्न वक्तु शक्यते। कातन्त्रतन्त्रतत्त्वार्थावगमे परमोपयोगिता तु निश्चितैवैषा ग्रन्थानामिति नास्ति तत्र विमतिः। पृथग्ग्रन्थरचनया कातन्त्रस्य तत्र समादरविशेषः परिलक्ष्यते।

## दाक्षिणात्यं कातन्त्रवाङ्मयम्

दक्षिणभारते कातन्त्रस्याध्ययनमध्यापन च कीदृक् कियच्च जातमिति साम्प्रत न विद्मः, तत्रत्येषु शोधसस्थानेषु मया स्वयमुपस्थाय विषयेऽस्मिन् न किञ्चिद् विज्ञातम्। पर तत्रास्ति तमिलकन्नडाद्यक्षरेषु लिखितो विपुलग्रन्थराशिरिति तत्तद्हस्तलिखितग्रन्थसूचीतोऽवगम्यते। आङ्ग्लग्रन्थेषु डॉ० ए० सी० बर्नेलप्रभृतिमहोदयैर्दक्षिणदेशेषूपलब्धहस्तलेखानवलम्ब्य प्रायेण कातन्त्रव्याकरणविषये किञ्चिल्लिखितम्।

डॉ० [1]श्रीपादकृष्णबेलवल्करमहोदयैर्डेक्कनकालेजीयपुस्तकालये सुरक्षितो व्याख्यानप्रक्रियाख्यग्रन्थस्यैको हस्तलेखः स्मृत', तत्राल्पमतीनामाशु व्याकरणज्ञान स्यादिति धिया कातन्त्रव्याकरण प्रणीतमिति यथावसरमुक्तम्। वाराणसेयसस्कृतविश्वविद्यालयीयसरस्वतीभवनस्थे च तल्लेखे वर्तते किञ्चित् पाठान्तरम्। तथा हि—

छान्दसाः स्वल्पमतयः शास्त्रान्तररताश्च ये।
ईश्वरा वाच्यनिरतास्तथालस्ययुताश्च ये॥
वणिजस्तृष्णादिसंसक्ता लोकयात्रादिषु स्थिताः।
तेषां क्षिप्रं प्रबोधार्थमनेकार्थं कलापकम्॥ १५॥ इति।

अय भावः—व्याकरणज्ञानाभावाद् मन्दमतयो वेदानामेवाभ्यासे दत्तमनोयोगा वैदिकाः, ज्योतिषादिशास्त्रान्तरमननशीला मनीषिणः, द्रव्याद्यैश्वर्यपरिपूरितत्वात् पराक्षेपपरायणाः पण्डितम्मन्याः, आलस्यादिदोषैः स्फूर्तिविहीनाश्च समर्थाः पुरुषा., लोकयात्रायाः सम्पन्नतायै विविधव्यापारेषु व्यापृतचेतसो लोभाकृष्टमानसा वणिजश्चाल्पीयस्येव समये व्याकरण विदाङ्कुर्वन्त्विति बहूनामुद्देश्यपूरकमिद स्वामिकार्त्तिकेयेन रचितमिति। बेबरमहोदया[2] मन्यन्ते—प्राकृतभाषाऽभिज्ञाना सस्कृतज्ञान स्यादित्यासीदस्य व्याकरणस्य रचनाया. प्रयोजनमिति।

श्रीपादकृष्णबेलवल्करमहोदयैर्वनमालिप्रणीत· कलापव्याकरणोत्पत्तिप्रस्तावाख्य एको ग्रन्थ उद्धृतः यो हि हस्तलेखरूपेण सुरक्षितः। तत्रास्य व्याकरणस्य परम्परा विस्तरेणो-

1. Systems of Samskrit Grammar, P 82
2. History of Indian Literature, P 227

ल्लिखिता। स च हस्तलेखो मया न दृष्ट इति तदीयपरम्पराया स्वरूपमुद्धर्तुं न शक्यते। डॉ० बूलरमहोदयैरपि काचिदस्य परम्परा निर्दिष्टा[1]। सातवाहनतद्राज्ञ्योर्जलकेलिविषयक सवादमुद्धरता 'मोदकं देहि राजन्' इति वाक्य स्मर्यते। तत्र कथासरित्सागरीयपाठेऽस्ति किञ्चिदन्तरम्, पर तात्पर्यार्थमादाय तदपि वक्तु शक्यते। आशु व्याकरणज्ञान यथा स्यात् तथा करणाय सातवाहनेन प्रार्थितः पण्डित. शर्ववर्मा शिवमाराधितवान्। सन्तुष्टेन भगवता श्रीशङ्करेण शर्ववर्ममनोरथपूर्तये कुमार. कार्त्तिकेयः समादिष्टः। कुमारकार्त्तिकेयेन स्वीयव्याकरणस्य सूत्राणि शर्ववर्मणे प्रकाशितानि। कुमारस्य वाहन मयूर उभयोर्वार्तालापे मध्यस्थ आसीत्, एतस्मादेव हेतोस्तद्व्याकरणस्य **कलाप** इत्यभिधान जातम्। भगवत. कुमारस्यानुग्रहेण प्राप्तत्वात् कौमारमिति नाम्ना प्रसिद्धमिदम्। कुमारप्रदत्तानि शर्ववर्मप्रणीतानि वा सर्वाणि सूत्राणि परमार्थतो दुर्गसिंहेन नोपलब्धानीत्याशङ्कितम्। आशङ्काया अवसरोऽत्र काश्मीरककातन्त्रवाङ्मये विभिन्नताया अवलोकनेनोपस्थाप्यते। व्याकरणस्यास्योत्थानकालः क्रैस्तं प्रथमशतकमनुमन्यन्ते श्रीपादकृष्णमहोदया.। तै. **पादप्रकरणसङ्गतिनामको**[2] जोगराजविरचित एको ग्रन्थ उद्धृतः, तत्र कातन्त्रीय कृत्प्रकरण शाकटायनेन रचितमित्युक्तम्। तथा हि—

**कृतस्त्व्यादयः सोपपदानुपपदाश्च ये।**
**लिङ्गप्रकृतिसिद्ध्यर्थं ताञ्जगौ शाकटायनः॥ १४॥** इति।

तद्धितप्रकरणस्य रचनाया अपि विषये यत्तैरुद्भावित तदुचित प्रतिभाति। तैरुक्तम्—श्लोकबद्ध प्रकरणमेतद् ग्रन्थकारेण पूर्वमव्यवहिते एव काले प्रणीतमिति वक्तु न शक्यते, तस्मिन् प्रकरणे शैलीभेदस्योपन्याससत्त्वात्। पर किञ्चित्कालानन्तर तस्याऽऽवश्यकतामनुभवताऽऽचार्येण तदीयसूत्राणि शैलीभेदमाकलय्य ( छन्दोरूपः शैलीभेद. ) प्रणीतानीत्यत्र निष्ठा कश्चिन्निधातु शक्नोति। आचार्यान्तरस्यापि प्रकरणस्यास्य प्रणयने प्रयास सम्भाव्यते इति। कातन्त्रे समासप्रकरणमपि छन्दोबद्धम्, तस्मिन् विषये ग्रन्थकारेण न किञ्चिदुक्तम्, तत्र कारण सम्यङ् न विद्मः।

---

1. The tradition is mentioned in Dr. Buhler's report for 1875-76 and detailed in the कलापव्याकरणोत्पत्तिप्रस्ताव—by a Ms. of which is No. 50 of notices, second series, by Hara prasād Shāstrī ( See—Systems of Sanskrit Grammar, P 82, F. N. 11 ).

2. This work gives a topical analysis of the Kātantra Sutras It is printed in appendix 2 on the basis of the Deccon College Ms 292 of 1872-76 ( Systemt of Sanskrit grammar, P 84, F N. 11 )

श्रीपादकृष्णमहोदयैर्यदुक्तम्[1]—कृत्सूणादिपादोऽपि पश्चात् प्रक्षिप्तः प्रतीयते, दुर्गसिंहवृत्तौ तदीयसूत्राणामनुपस्थितत्वादिति । तत् तेषा वायुवशाद् वल्लीशाखाग्रैर्हन्यमानस्य दुन्दुभेः शब्दमाकर्ण्य कस्यचिद् भीतस्य जन्तो. पलायनमिव प्रतिभाति । तत्र केवलमिदमेवान्तरमस्ति—काश्मीरककातन्त्रव्याकरणस्य व्याख्यानग्रन्थेषु **"उणादयो भूतेऽपि"** ( ४।४।६७ ) इति सूत्रं पञ्चमपादस्याऽऽरम्भे पठ्यते, तत्पादस्योणादिपाद इति नाम निर्दिष्टमाचार्यै. । एतदेव सूत्र वङ्गीयकातन्त्रव्याकरणे चतुर्थपादस्योपान्ते वर्तते इति । एव वङ्गीयादिव्याख्यानेषु दुर्गसिंहव्याख्यातानि **"उणादयो भूतेऽपि"** ( ४।४।६७ ) इत्यादिसूत्राणि दृश्यन्ते इति वेदितव्यम् ।

येषा शब्दानामनुशासन महर्षिपाणिनिना प्रायेण चतुःसहस्रसूत्रै. कृत तेषा सर्वेषामाचार्येण शर्ववर्मणा ८५४ मितैः सूत्रैरनुशासन कृतमिति नो वेदितव्यम्, विविधप्रकरणाना तेनाविचारितत्वात् । यत् प्रकरण तेनाऽऽरब्ध तत्तु प्रायेण पूर्णतया विचारितम् ।

दक्षिणदेशाधिपतये व्याकरणमिदमाचार्येण शर्ववर्मणोपदिष्टम् । एप आचार्यस्तदाश्रित आसीत् । शासकश्च शक्तिविशेषसम्पन्नस्तेन कातन्त्रव्याकरणस्य प्रचार. सुदूरवर्तिष्वपि प्रदेशेषु किं च विदेशेष्वपि तदीयराज्यकाले एव सम्भाव्यते । अत्र बेलवल्करमहोदयैर्लङ्कादेशेऽपि व्याकरणस्यास्य प्रचारो जात इति निर्दिष्टम्[2] । पूर्वं प्रणीता व्याकरणग्रन्थाः पण्डिताना सन्न्यासिना च कृते उपयोगिन आसन्, तत्र शब्दसिद्धये कृतेऽनुशासने विविधशास्त्रीयप्रकरणविचाराणा समावेशस्य सत्त्वात् ।

कातन्त्रदुर्गे सिंह इवाऽऽचरणशीलः कातन्त्रव्याकरणस्यैकः प्रौढधीर्व्याख्याकार स्वव्याख्यानवचनैर्व्याकरणमिद प्रख्यापितवान् । ततः पूर्वमेवास्य व्याकरणस्य संस्करणद्वयमवश्यमेवाऽऽसीदिति सम्भाव्यते । एकमवलम्ब्योत्तरदेशवासिनोऽध्ययनाध्यापनकार्ययोः प्रवृत्ता अभूवन्, अपर चावलम्ब्य दक्षिणदेशवासिनो व्याकरणजिज्ञासवो व्याकरणज्ञानस्य पूर्तिं कुर्वन्ति स्म ।

उणादिप्रकरणस्याऽऽदौ **"नमस्कृत्य शिवं भूरि०"** इत्यादिपाठोऽङ्गीकृत, तेन तत्प्रणेता दुर्गसिंहः शैवमतानुयायीत्यभिमत बेलवल्करमहोदयानाम् । अत्र गिरमिति पाठान्तरमप्यवलोक्यते । बेलवल्करमहोदयेन दुर्गसिंहस्यानन्तर जाताना कतिपयाना कातन्त्रव्याख्याकाराणा नामानि निर्दिष्टानि । तत्र सर्वप्रथम वर्धमानविरचितः कातन्त्रविस्तर

1 Another clear case of later interpolations in the Katantrasutrapātha is furnished by the three sections in rectangular brackets—निपातपाद, स्त्रीप्रत्ययपाद, and उणादिपाद—which are absent in Durgasimha's commentary but which are regularly found included in the Kashmirian Sūtrapāṭha (systems of Sanskrit grammar, P, 85 ).

2. Systems of Sanskrit grammar, P 87.

उपन्यस्तः। यस्य रचना गुर्जराधिपतेर्महाराजस्य कर्णदेवस्य शासनकाले ( १०८८ ई० ) जाता। महामहोपाध्यायेन पृथ्वीधरेणैका व्याख्या कातन्त्रविस्तरस्य प्रणीता। कायस्थ-वंशोद्भवेन मेघस्याऽऽत्मजेन गदाधरस्य च जनकेन त्रिलोचनदासेन कातन्त्रवृत्तिपञ्जिका रचिता। जिनप्रबोधसूरि-कुशल-रामचन्द्रप्रभृतिभिर्व्याख्यातृभिः पञ्जिका स्वीयटीकाग्रन्थै-र्व्याख्याता। महादेवनामकेनाऽऽचार्येण शब्दसिद्धिनामको ग्रन्थश्चतुर्दशे वैक्रमशतके रचित.। कातन्त्रस्य सहायका लघुप्रबन्धा अप्यत्र केचिदुद्धृताः। तत्र दुर्गसिंहरचितमष्टाशीति-(८८) कारिकाबद्ध लिङ्गानुशासनम्, उणादिसूत्राणि, धातुसूत्राणि च स्मर्यन्ते। धातुपाठश्चन्द्र-गोमिप्रणीत धातुपाठमनुसरतीति निर्दिशता तेन कातन्त्रीयधातुसूत्राणा सरक्षण तिब्बती-भाषानुवादे वर्तते इति सूचितम्[1]।

इतिहासकारस्य तारानाथस्याभिमत कातन्त्रविषयक श्रीपादकृष्णमहोदयेन स्वीये ग्रन्थे उद्धृतम्। तच्चेत्थ विज्ञेयम्-स्वामिकार्तिकेयेन ऐन्द्रव्याकरणस्य सूत्राणि दैवीरीत्या श्रीसप्तवर्मणे विदुषे प्रकाशितानि। तमिलभाषाया एक तोलकाप्पियम् ( Tolkappiyam ) इत्याख्य व्याकरणमस्ति, डॉ० ए० सी० बर्नेलमतानुसार तद् व्याकरणमैन्द्रव्याकरणपद्धत्या पूर्णतया साम्य विदधाति। निर्दिष्ट व्याकरण पाण्ड्यदेशस्य महाराजस्य सभाया पठितमासीदिति। बर्नेलमहोदयानामेतद् विवरणमस्ति —

तमिलव्याकरणम्, कातन्त्रव्याकरणम्, कच्चायनस्य पालिव्याकरणम्, प्रातिशाख्यानि चैन्द्रव्याकरणेन सम्बद्धानि सन्ति। ऐन्द्रव्याकरण पाणिनीयव्याकरणमनुसरतीत्यस्य शिष्ट-वचनस्य सम्यगनुसन्धानाय मया भारतवर्षस्य दक्षिणभागेषु तदनुकूल. प्रयास. प्रारब्धः। सश्रममनवरत कृतेन चिरप्रयासेनेदं ज्ञातम्—भारतवर्षे ऐन्द्रव्याकरणस्य न कश्चिद् ग्रन्थ-राशिरुपलभ्यते येन तदीय वैशिष्ट्य वक्तु शक्नुयात् कश्चिज्जनः, पर तदीयास्तित्वस्य जन-श्रुतिः प्रचलतीति। एतादृश्या स्थितौ तदनुसन्धानकार्याद् विरतो भूत्वा द्रविडभाषाव्याकर-णेषु समावेश कृतवान्। प्रथमे एव पक्षपरिग्रहे मयाऽनुमितम्—सस्कृतव्याकरणानुसारिणो द्रविडभाषाया व्याकरणग्रन्था अवश्यमेव सस्कृतव्याकरणविषये कञ्चित् प्रकाश प्रसारयिष्य-न्तीति। अनुसन्धानेन च तथा ज्ञातमपि—तमिलकन्नडभाषयोर्व्याकरणेषु तेषामेव पारि-भाषिकशब्दाना प्रयोगो वर्तते ये शब्दाः प्रातिशाख्येषु, कातन्त्रे, केषुचिदन्येषु च ग्रन्थेषु पूर्वं प्रयुक्ताः सन्ति। दक्षिणभारते तोलकाप्पियम् इत्याख्य तमिलभाषायाः प्राचीनतमं व्याकरणमस्तीति धिया तन्मयाऽधीतम्। पनम्बरन् ( Panambaran ) महोदयानाम-भिमतमस्ति– सम्पूर्णं तोलकाप्पियम् मदुरामहाराजस्य सभाया पठितम्,(Adankottasan) महोदयैस्तत् स्वीकृत च। एतेन तोलकाप्पियमित्यभिधानस्य व्याकरणस्य रचना ईशवीयाष्ट-मशतकात् पश्चान्न सम्भाव्यते। यतो हि दशमशतके सम्पूर्णं पाण्ड्यराज्यं चोलशासनान्त-

1. See-Systems of Sansksıt Grammar, P. 89-91.

र्गतमभूत्। ( Nannul ) इत्याख्यमपरमपि तमिलव्याकरण कातन्त्रव्याकरणेन सह सम्बन्ध स्थापयतीति ।

तोलकाप्पियव्याकरणस्य, कच्चायनव्याकरणस्य, कातन्त्रव्याकरणस्य च परस्परं कियान् सम्बन्ध इति निदर्शयितु कानिचिद् वचनानि डॉ० ए० सी० बर्नेलमहोदयेन प्रस्तुतानि[1] । तमिलभाषाऽनभिज्ञोऽह तत् सर्वमालोचयितुमक्षम एव ।

त्रिविष्टपदेशेऽप्यस्यैन्द्रानुसारिण' कातन्त्रव्याकरणस्याऽऽसीत् कश्चित् प्रचारः[2] । तिब्बतीभाषायामुपनिबद्धाः कातन्त्रग्रन्था डॉ० ए० सी० बर्नेलमहोदयेन उल्लिखिताः । प्रथमस्तावत्—**कलापसूत्रम्** इति वर्तते । अत्र साधुशब्दसाधनाय किञ्चिदनुशासन दृश्यते । द्वितीयः—**कलापसूत्रवृत्तिः** इति । अत्र दुर्गसिंहकृत कातन्त्रसूत्राणा व्याख्यानं वर्तते । तृतीयः—**कलापलघुवृत्तिः** इति । शिष्यहितेत्यपर नामास्य निर्दिष्टम् । ग्रन्थोऽय मुक्तेश्वरेणानूदित· प्रतिभाति । चतुर्थः —**कलापधातुसूत्रम्** इति । अत्र कातन्त्राभिमता धातवः पठिताः सन्तीति[3] ।

### कातन्त्रव्याकरणस्य सम्प्रदायान्तरेषु समादरः

एव विविधसम्प्रदायेषु विविधस्थानेषु च सम्प्राप्ताना ( सुरक्षितानाम् ), मुद्रितानाममुद्रिताना च परिज्ञातग्रन्थाना समासतः परिचयमुपस्थाप्य सम्प्रदायान्तरेऽपि कातन्त्रस्य समादरः कियाञ्जात इति प्रदर्शयितु तत्तद्ग्रन्थेषूद्धृतानि कातन्त्रसम्बन्धीनि वचनानीहोपन्यस्यन्ते ।

भट्टिकाव्यस्य कातन्त्रव्याकरणानुसारिणी पुण्डरीकाक्षविद्यासागरकृता **कलापदीपिका**-नाम्नी टीका प्रथम स्मर्यते । तस्याष्टीकाया निर्देशः सौपद्मव्याकरणानुसारिण्याष्टीकायाः प्रणेत्रा श्रीकन्दर्पशर्मणा कृतः । तद् यथा—

**विद्यासागरटीकायां कातन्त्रप्रक्रिया यतः ।**
**सुपद्मप्रक्रिया तस्मात् तस्मादेव प्रणीयते ॥** इति ।

श्रीयुधिष्ठिरमीमासकेन **संस्कृतव्याकरण-शास्त्र का इतिहास** इत्याख्ये ग्रन्थे ( द्वि० भा०, पृ० ३६३ ) कलापदीपिकाया आदावन्ते च वर्तमानो लेख उद्धृतः, येनोक्तं सर्वं स्पष्टं विज्ञायते । आदौ यथा—

1 See—the Aindra School of Sanskrit Grammarians, P 8-10

2 Even out of India the Aindra grammar shows itself as an agent of literary culture. The tibetans have transferred to their larger collection —The Bstan—hygur-a considerable part of the Sanskrit grammatical literature which they have translated in their usual mechanical way 7 ) ( The Aindra school of Sanskrit grammarians, P. 58 ).

3, See— the Aindra School of Sanskrit grammarians, P. 59,

नत्वा शङ्करचरणं ज्ञात्वा सकलं कलापतत्त्वं च ।
दृष्ट्वा पाणिनितन्त्रं वदति श्रीपुण्डरीकाक्षः ॥
पाणिनीयप्रक्रियायां मे प्रसिद्धत्वान्न कौतुकम् ।
कलापप्रक्रिया तस्मादप्रसिद्धाऽत्र कथ्यते ॥ इति ।

अन्ते च—

इति महामहोपाध्यायश्रीमच्छ्रीकान्तपण्डितात्मजश्रीपुण्डरीकाक्षविद्यासागरभट्टाचार्यकृतायां भट्टिटीकायां कलापदीपिकायाम् —। इति ।

गुरुपदहालदारेणापि कातन्त्रप्रदीपे उक्तं कारकीयमेकं वचनं पुण्डरीकाक्षविद्यासागरेण कलापदीपिकायामपि स्मृतमित्यनेन वचनेन पुण्डरीकाक्षविद्यासागरस्य कलापदीपिकाकर्तृत्वं निर्दिष्टम्[१] ।

२—क्षीरस्वामिना क्षीरतरङ्गिण्यां 'दुर्ग-दौर्ग' इति नामनिर्देशेन बहुत्र तदीयमतानि स्मृतानि । यथा—"उर्द माने क्रीडायां च । मितिर्मानमिति मुख्योऽर्थः । चकारादास्वादनेऽपीति दुर्गः ( १।१६ ) । द्युत् जुत् भासने । द्योतते, अद्युद्योतत् । कौशिकस्तु ज्योतिःसिद्धये जुतिं ज्युतिं मन्यते । ज्योतिश्च "द्युतेरिसिन्नादेश्च जः" ( उ० २।११० ) इति सिद्धम् । जुतिरिति दुर्गः । अजुतत्, अजोतीत् इति ( १।२७ ) । मेट्ट इति दौर्गाः, अमिमेटत् ( १।१६६ ) । क्लेश बाधने इति दौर्गम्" ( १।३६६ ) इत्यादि ।

"क्रियाभावो धातुः, दादेर्वः" ( ३।१।६; ६।५७ ) इति सूत्रे अपि कातन्त्रीये स्मृते ( क्षीरत० १।२, ७१८ ) ।

३—माधवीयधातुवृत्तौ सायणाचार्येण कातन्त्रमतानि समादृतानि । तथा हि—"तथा च कातन्त्रसूत्राणि—जागर्तेः कारिते, यणाशिषोर्ये, परोक्षायामगुणे (३।६।१२-१४)" ( २।७६ ) । वेवीङ् वेतिना तुल्ये । 'वी गति' इत्यनेन तुल्येऽर्थे वर्तते इत्यर्थः । पूर्ववदुदाहरणानि । "सेटावात्मनेभाषाविमौ छान्दसौ" इति भाष्यवार्त्तिकयोः स्थितम् । दृष्टानुविधिश्छन्दसि । अस्माभिस्तु कालापमतानुसारेणोदाहरणप्रदर्शनं कृतम् ( २।८५ ) । अत्रायं धातुर्यद्यपि क्षीरस्वाम्यादिभिर्न पठ्यते, तथापि मैत्रेयचन्द्रदुर्गैः पठितत्वात्-शमीगर्भादग्निं मन्थति, ततो यथा प्राग्नु मन्थति, यदि मथ्यमानो न जायेत इत्यादिदर्शनाच्चास्त्येव" ( १।३७ ) इत्यादि ।[२]

---

१. जाहाइ हउक, श्रीपतिर ओ गोपीनाथेर उक्ति शुनिया कौमारदेर मध्ये पुण्डरीक विद्यासागर कातन्त्रप्रदीपे लिखियाछेन-आपिशलीयमते हृक्रोर्वा वचनं प्रपञ्चार्थमिति पुरुषोत्तमः। अत्राकर्मकत्वेऽभ्यवहारार्थे वा साफल्यमिति श्रीपतिप्रलापो निरस्तः ( कारकम् २१९ )। भट्टिर कलापदीपिकाते ओ तिनि इहाइ लिखियाछेन ( व्या० द० इति०, पृ० ५२५ ) इति ।

२. १।४०७, २।७०, ३।२४, ५।१७, ६।१४०, २०।७६ ।

४—पुरुषकारे[१] श्रीकृष्णलीलाशुकमुनिनोद्धृतानि कानिचिद् वचनानीह प्रस्तूयन्ते तद् यथा—

"प्रीङ् प्रीतौ। तथा धूञ्प्रीणात्योर्नुगिति कौमाराः ( पृ० ३० )। कौमारास्त्वाहुः- अन्ये जिह्वोन्मथने इति समाहारद्वन्द्वं व्याचक्षते। तदा लडयति शत्रुमित्यपि भवति ( पृ० ७२ )। चान्द्रभोजकौमारास्तु–शप शपथे इत्येवमाहु." ( पृ० ९४ ) इत्यादि[२]।

५—प्रौढमनोरमायां यथा—

"अत एव कातन्त्रपरिशिष्टे शुक्लयतेः क्विपि 'शुक्ल्' इत्युदाहृतम् ( पृ० १२३ )। तथा च कातन्त्रसूत्रम्—सौ च मघवान् मघवा[३] वेति ( पृ० ४७४ )। सीमेत्यादि। एतच्च दुर्गवाक्यप्रबोधे कुलचन्द्रेणोक्तम्" ( पृ० ७२६ ) इत्यादि[४]।

६—शब्दरूपकल्पद्रुमे यथा—

कलापमते "ङस् स्यः" इत्यादीना व्यतिक्रमनिर्देशात् क्वचिदकारान्तादन्यस्यापि "ङस् स्यः प्रवर्तते। तथा च—

नवं नवं परिक्षिप्य पुराणमपकर्षतः।
अतिजरस्य भिक्षुष्य कन्था वर्षशतं गता॥

उदधिष्योत्तरे तीरे ( पृ० २–टि० ) इत्यादि[५]।

७—रत्नबोधे यथा—

मृग्यनीति दुर्गत्रिलोचनयोरसम्मतम् ( पृ० ७ ) इति।

८—दुर्घटवृत्तौ यथा—

कथम्—"अतिजरसस्य भिक्षुष्य कन्था वर्षशतं गता" इति कलापवृत्तिः ( ७।१।१२ )। 'विसर्जनीयः' इति कालापाना बिन्दुद्वयस्य सञ्ज्ञा ( ८।३।१५ ) इति।

९—पदचन्द्रिकायां यथा—

यत्तु पुरुषोत्तमेन "स्वर्णदी, स्वर्नदी" इति भाषावृत्तावुदाहृतम्, तदमूलम्, कातन्त्ररसवत्–क्रमरादिव्याकरणेषु च 'स्वर्णदी' इति नित्यणत्वदर्शनात् (पृ० ६६)। 'फाल्गुनस्त्वर्जुने मासे नक्षत्रे फल्गुनी स्मृता' इति गोवर्द्धनानन्दः। कातन्त्रोणादौ ( कातन्त्रेणादौ ) तु पिशुनफल्गुनाविति वृद्धिं निपात्य फाल्गुनोऽर्जुन उक्तः ( पृ० १५० ) इति।

---

१ दैवमित्यभिधानस्य पाणिनीयधातूना व्याख्यानभूतस्य ग्रन्थस्य टीकाग्रन्थ. पुरुषकार.।

२ पृ० १८, पृ० ८०।

३ कात० २।३।२३।

४. पृ० १६१, पृ० ४४१, पृ० ५६५।

५. पृ० ७, टि० १७। पृ० ९, टि० १९। पृ० १२, टि० २७। पृ० १३, टि० २७, २८। पृ० २८, टि० १८। पृ० ३८, टि० ३ क। पृ० ६० टि० ४। पृ० ८२, टि० २६।

१०—**मुग्धबोधव्याकरणस्य टीकायां** श्रीरामतर्कवागीशेन केचिच्छब्देन कालापमतमशतः समादृतम्। उक्त च—

**परेऽत्र पाणिनीयज्ञाः केचित् कालापकोविदाः।**
**एके विद्यानिवासाः स्युरन्ये सङ्क्षिप्तसारकाः ॥** इति।

उक्तेष्वतेषु दशसु ग्रन्थेषु कातन्त्रवचनाना स्मृतत्वात्तदीयमभिमतमवश्य पण्डितसमाजे प्रतिष्ठामुपपन्नमिति वक्तु शक्यते। मन्ये—अन्यैरपि बहुभिर्ग्रन्थकर्तृभिर्व्याकरणमिदमुद्धृत स्यादिति। सम्प्रति परिज्ञानाभावात्तेषा नामानि समुद्धर्तुं न शक्यन्ते।

केचिदेतादृशोऽपि लघुग्रन्था कातन्त्रीया दृश्यन्ते, येषा विस्तरेण परिचयप्रस्ताव परमावश्यक मन्ये। ते हि ग्रन्था न प्रसिद्धाः सन्ति विदुषा समाजे, येनान्येऽपि वैयाकरणाः कवयश्च न तान् विदन्ति न च वेत्तु प्रयतन्ते। चर्करीतरहस्यम्, कातन्त्रविभ्रमः, कातन्त्रविकृतसूत्राणि, शिक्षासूत्राणि चैतादृश एव दृश्यन्ते। अतस्तेषा पूर्वं सङ्क्षेपेण परिचये प्रस्तुतेऽप्यत्र कश्चिद् विस्तर उपन्यस्यते।

## चर्करीतविचारः

'चेक्रीयित—चर्करीत' इत्येतौ शब्दौ शब्दशास्त्रायसञ्ज्ञार्थे पूर्वाचाय. प्रयुक्ताविति निरुक्तादिना[१] ज्ञायते, ययोर्व्यवहार. पाणिनीये 'यङ्-यङ्लुक्' इति शब्दाभ्या कृतः। एतच्च [२]न्यासकारादीनामपि सम्मतम्। तत्र चर्करीतान्तशब्दाना लोके प्रयोग. साधुर्न वेति विवदन्ते शाब्दिकाचार्या.। एतदुभयमपि मत कातन्त्रे समाद्रियते। शर्ववर्माचार्येण चर्करीतकार्यविधायक किमपि सूत्र न प्रणीतमिति तदाशय स्फुटीकुर्वन्नाह टीकाकारः—

**"प्रयोगानुसारेण कियन्त एव भाषाया दृष्टा न सर्वे। तथा च बोभवीतीति भट्टिकाव्ये निबद्धम्। अन्ये तु सर्वे एव छान्दसा इति प्रतिपद्यन्ते, तदिह प्रमाणम्"** (४।४।४५) इति। कृत्प्रकरणे कात्यायनेन **"पञ्चमोपधाया धुटि चागुणे"** (४।१।५५) इत्यत्र यदुपधाग्रहणेनेद विज्ञाप्यते—अन्यत्र प्रकृतिग्रहणे चेक्रीयितग्रहणे चेक्रीयितलुगन्तस्यापि ग्रहणं भवतीति। एतेन कथञ्चिद् वक्तु शक्यते—तत्सम्प्रदायेऽप्येतस्य प्रयोग. समाद्रियते इति। इदमवगन्तव्यम्—दीर्घस्य स्वरधर्मत्वात् 'प्रशान्' इत्यादावन्त्यस्य व्यञ्जनस्य तत्कार्यं कथमपि भवितु नार्हति, किञ्चाव्यवहितपूर्वोपधाया वर्तमानस्यैवेत्युक्तसूत्रे व्यर्थीभूयोपधाग्रहणमुक्त वचन विज्ञापयति, अत एव 'तन्तान्तः, शशान्तः' इत्यादौ चर्करीतधातोरुपधाया दीर्घः सम्पद्यते, अन्यथाऽभ्यासस्य प्रसज्येत। उक्तमपि चैतट्टीकाकारेण—

---

१ आपनोफणदिति फणतश्चर्करीतवृत्तम् (निरु० २।७), चोष्कूयतश्चर्करीतवृत्तम् (निरु० ६।२६) इति। यङ पूर्वाचार्यसञ्ज्ञा चेक्रीयितमिति (म० भा० प्र० ४।१।७८) इति।

२ चर्करीत य यङ्लुगन्तस्य पूर्वाचार्याणा सञ्ज्ञा (न्या० ७।३।२४), प्राचा तु चर्करीतमिति यङ्लुगन्त परस्मैपदमित्युक्तम् (त० बो०, चर्करीत चेति गणसूत्रम्, अदाद्यन्ते) इति।

"अत्रोपधाग्रहण किमर्थम् ? पञ्चमान्तस्य धातोर्दीर्घो भवन्नेकवर्णव्यवधान एव भविष्यति, सत्यम्, पञ्चमान्तस्येति स्थानित्वमपि सम्भाव्येत। केचिच्चेक्रीयितलुगन्त भाषायामपि मत्वा 'शशान्त, तनान्त., ददान्तः' इति क्तादावुदाहरन्ति" ( कात० वृ० टी० ४।१।५५ ) इति ।

कातन्त्रपरिशिष्टकारेण महामहोपाध्यायश्रीश्रीपतिदत्तेनाभ्यासस्य प्रकृतिभावविधानाय सूत्रमुक्तम्—"चर्करीताभ्यासस्य" ( स० प्र०, सू० ३३ ) इति। एतेन 'अरिअर्ति' इत्यादौ यकाराद्यादेशा न प्रवर्तन्ते । तत्र च महाभाष्यकारादोना नवानामाचार्याणा मतान्युपस्थापयन् स व्याचष्टे—भाषायामपि चर्करीतप्रयोगा साधवो भवन्तीति[१] । कातन्त्रव्याकरणस्य लोकप्रयोगसाधनफलकत्वादेतन्मतमङ्गीक्रियते, अन्यथा तद्विवादप्रसङ्गो नापद्येत। उच्यते चापि कातन्त्रपरिभाषावृत्तिकृता श्रीदुर्गसिंहेन—"अभिधानाद् भाषायामपि दृश्यते इत्यारम्भः, तथा च भट्टिकाव्ये-योभवीति न संमोहः" ( परि० १२ ) इत्यादि । कातन्त्रे श्रीपतिदत्तेन समादृतत्वाद् भाषाया चर्करीतप्रयोगाणा श्रीकविकण्ठहारेण तद्व्याख्यान विंशतिकारिकाभी रसवदादिव्याकरणसम्मत कृतम् । तेन ग्रन्थादौ नमस्कारात्मक मङ्गलमाचरता श्लोकत्रितयेन ग्रन्थारम्भस्य प्रयोजन स्वीय परिचयश्चोपस्थापितः। तथा हि उच्यते—

प्रणनम्य महादेवं चर्करीतरहस्यकम् ।
श्रीकविकण्ठहारोऽहं वावच्मि वदता वरः ॥ १ ॥
परिभाषाटीकायां माधवदासकविचन्द्रभिषजा यत् ।
गुरुगुरुणा चोत्तरपरिशिष्टे यदभिहितमविरुद्धम् ॥ २ ॥
रसवत्—पद्मशब्दानुशासनयुगले चाभिहितं वीक्ष्य ।
तत्सर्वं सङ्क्षेपात् पदानि वावच्मि चर्करीतानाम् ॥ ३ ॥
नो जाज्ञाति कलापतन्त्रविदुरो यद् वावदीति स्फुटम्,
भाषायामिह चर्करीतमखिलं नैवं दरीदृश्यते ।
भाषायामपि मंमनीति विदितो वक्तव्यवादी तत—
स्तत्सर्वं विवरीवरीमि रसवत्तन्त्रादिभिः सम्मतम् ॥ ४ ॥ इति ।

---

१. भाषायामपि केचिच्चर्करीतमिच्छन्ति, उक्त ।ह भाष्ये—भाषायामपि यङो लुगस्तीति । निलूर-वृत्तौ चोक्तम्—भाषायामपि यङो लुगस्तीति । लुगधिकारे "यङो बहुलम्" इति चान्द्रे पठ्यते । काशिकायामपि ( २।४।७४ ) छन्दोऽनुवृत्तिरिह नेष्टा इत्युक्तम् । जाघटीतीति +जाम्बवतीविजय-काव्ये । जाज्वलतीति नीतिमञ्जरे । शशमाचक्रुरिति —भट्टिकाव्ये च पठ्यते । भागवृत्तिकारस्तु बोभवीत्येव न छान्दसमिति मन्यते ( कात० परि० वृ०, सू० ३३ ) ) इति ।

+ कृष्णेन सह मे प्रीतिर्बोभवीति यदब्रवी० ।
न जाघटीति युक्तौ तत् सिंहद्विरदयोरिव ॥

— बोभवीति न संमोह कृच्छ्रेष्वपि भवादृशाम् ।
किं न पश्यसि सर्वोऽद्य जनस्त्वामवलम्बते ॥ ( भट्टि० १८।४१ )।

अथ भाव --महामहोपाध्यायश्रीत्रिलोचनकविचन्द्रेण कृतस्य कातन्त्रोत्तरपरिशिष्ट-स्याऽऽख्यातप्रकरणे "तस्य लुक्, चर्करीत च, बहुलम्" इत्यादीनि यानि सूत्राणि प्रणीतानि तत्रोपयोगीनि शार्ववर्मिकाणि च यानि सूत्राणि तानि व्याख्यातुकामस्त्रिलोचनकविचन्द्रा-त्मजः कविकण्ठहार. स्वीयोपाध्यायपुत्रस्य कविसार्वभौमस्य प्रार्थनया चर्करीतरहस्य प्रारभते। परिभाषा-टीकाकारो माधवदासकविचन्द्रः कः ? इति व्याख्याने तेन नोक्तम्। गुरुगुरुशब्देन पूजनीयः स्वीयो जनकस्त्रिलोचनकविचन्द्र. स्मृत । 'रसवत्—पद्म' इति व्याकरणद्वयमुक्तम्। तत्र पद्मव्याकरण पद्मनाभदत्तेन प्रणीतम्, रसवतीवृत्तिः सङ्क्षिप्त-सारव्याकरणस्य क्रमदीश्वरेण कृता। उक्तेषु ग्रन्थेषु चर्करीतव्याख्यानमालोच्यात्रोद्देशतस्त-त्पदाना साधनमुच्यते। कातन्त्रे पक्षद्वये भाषायामप्रयोगमङ्गीकुर्वता मत कातन्त्रवृत्तिकारः, प्रयोग चाङ्गीकुर्वता मत परिशिष्टकार. श्रीश्रीपतिदत्तः समर्थयति। शर्ववर्मणाऽनुक्तत्वाद् वृत्तिकारस्तत्प्रयोगाणा छन्दस्येव साधुत्वं मनुते। ये हि केचित् 'चेक्रीयितान्तात्' (३।२।४३) इत्यत्रान्तग्रहणेन चर्करीत व्यावर्त्यते, तेन शर्ववर्ममतेऽपि चर्करीत भाषा-यामस्तीति मन्यन्ते, तन्न समीचीनम्—अदादौ परस्मैपदिषु "चर्करीत चेत्येके" इति पाठादेव तत्र परस्मैपदमवतरतीति न तदर्थमन्तग्रहण किं च सुखार्थमेव क्रियते (द्र०—कात० वृ० टी०, पञ्जी ३।२।४३) इति।

अत्र वक्तव्यवादिना श्रीपतिदत्तादीनामभिमतम्—'लुग्लोपे न प्रत्ययकृतम्' (३।८।२९) इतिन्यायस्तु यत्र प्रत्यये परतः पूर्वस्य कार्यं भवति तत्रैव प्रवर्तते, यथा 'दुग्धे' इत्यादौ विकरणस्य लुकि पूर्वस्य गुणकार्यं न जायते। अदुरित्यादौ पूर्वस्य कार्याभावाद् अन उसादेशः प्रवर्तते एव। एव बोभवीतीत्यादौ चेक्रीयितस्य (यङ्प्रत्ययस्य) लुकि ततः परस्य प्राप्तमात्मनेपदकार्य मा भूदित्यन्तग्रहण क्रियते इति। सुपद्मव्याकरणे "यङो लुग् बहुलम्, प्रकृतिवत् परस्मैपदम्" इति, रसवद्व्याकरणे च "यण्लुग् वा ङिषु, लिचतुर्षु ईड् च वा" इति चर्करीतप्रकरणे सूत्रितम्। एवमुक्तवचनैर्भाषाया चर्करीत-प्रयोगस्य प्रसिद्धौ सत्यामिद व्याख्यानमारभ्यते इति। अत्र विंशतिकारिकासु वर्णितो विषयः सङ्क्षेपत उपस्थाप्यते---

१—चेक्रीयितलुग्धातुश्चर्करीतसञ्ज्ञक आचार्यैः परिभाषितः, सञ्ज्ञापूर्वकविधेः सुखावहत्वात्। सञ्ज्ञानिर्देशादेव चर्करीतशब्दे कृधातोः क्तप्रत्यये गुण इटो दीर्घश्च प्रवर्तते, असञ्ज्ञाया तु कृधातोः क्तप्रत्ययान्त चक्रित. इति रूप निष्पन्न स्यात्।

२—"चण्परीक्षाचेक्रीयितसनन्तेषु" (३।३।७) इत्यत्रान्तग्रहणेन बहुव्रीहिणा चेक्रीयितान्त-सनन्तधातूना द्विर्वचन स्यादित्यर्थ. सम्पद्येत, विषयसप्तम्याश्च तत्राङ्गीकाराच्च-र्करीतस्य (यङ्लुगन्तस्य) धातोर्द्वित्व प्रवर्तते। चेक्रीयितधातोरभ्यासे विधीयमान कार्यं चर्करीताभ्यासेऽपि जायते, इयांश्च विशेषः=यत्र चेक्रीयिताभ्यासे 'री' आगमस्तत्र चर्करीताभ्यासे "रि-र" इत्येतावागमौ जायेते। तदर्थं कातन्त्रोत्तरपरिशिष्टे कविचन्द्र-त्रिलोचनेन सूत्रितम्—"रिरौ च रीविषये" इति।

३—'पापचीति' इत्यादौ विकल्पेनेडागम स्यात्। गणोक्तकार्यं प्रति प्रकृतिवद्भावस्य प्रतिषेधात् **"प्रकृतिग्रहणे चेक्रीयितलुगन्तस्यापि ग्रहणम्"** ( दु० परि० वृ०, परि० १२ ) इति न्यायेन दिवादिप्रभृतिभ्यश्चर्करीतेभ्यो धातुभ्यो यनादयो विकरणा न जायन्ते किं चौत्सर्गिकोऽनेव विकरण प्रवर्तते।

४—**"अभ्यस्तस्य चोपधाया नामिनः स्वरे गुणिनि सार्वधातुके"** ( ३।५।८ ) इतिवचनेन 'बोबुधीति, चोक्रुशीति' इत्यादौ धातोरुपधाया गुणो न जायते। चर्करीतकार्याणा बाहुल्येन प्रवर्तनात् 'बेभिदिता, बेभिदाञ्चकार' इत्यादावसार्वधातुके गुणिनि स्वरादौ नाम्युपधाया गुणो न जायते।

५—**"चरफलोरुच्च परस्यास्य"** ( ३।३।३३ ) इत्यनेन चर-फलधात्वोश्चेक्रीयितेऽभ्यासस्थाकारान्तेऽनुस्वारागमः, परभागस्थधात्वकारस्योकारादेशश्च निर्दिश्यते, तदेव कार्यं चर्करीतेऽपि सम्पद्यते। यथा विषयसप्तमीमाकलय्य चर्करीतस्य द्विर्वचनमुपपद्यते, तथैव **"स्वपि-स्यमि-व्येञां चेक्रीयते"** ( ३।४।७ ) इत्यत्र 'चेक्रीयते' इति विषयसप्तम्या निर्देशेन चर्करीतेऽपि स्वपादीना सम्प्रसारण जायते, तेन सोषुप्ति सोषुपीतीत्यादयः प्रयोगाः सिध्यन्ति। केषाचिन्मते **"ग्रहि-ज्या०"** ( ३।४।२ ) इत्यादिसूत्रस्य धातूनामपि सम्प्रसारण क्रियते, तेन जरीगृहीति, जर्गर्ढि, जरिगृहीति इत्यादिरूपाणि जायन्ते। ग्रन्थकारमते तु 'जाग्राढि, जाग्रहीति' इत्यादीन्येव रूपाणि विज्ञेयानि।

६—**"द्वित्वबहुत्वयोश्च परस्मै"** ( ३।५।१६ ) इत्यनेन द्विवचनबहुवचनबोधकतसादिप्रत्ययानामगुणत्वाद् **"ग्रहि ज्या०"** ( ३।४।२ ) इत्यनेनागुणे परतः सम्प्रसारणस्य च विधानात् तसादिप्रत्ययेषु परतो गुणो जायते, तेन 'जागृढः, जागृहति' इत्यादिरूपाणि जायन्ते।

७—ब्रूधातोः कृताभ्यासविधेरभ्यासरहितस्यैव वचादेशो विज्ञेयो न तु चर्करीतमात्रस्येति, तेन बोवच्चिता, बोवचिष्यतीत्यादि रूपाणि साधुत्वमुपयान्ति।

८—प्रकृतिवद्भावे एकस्वरोक्तकार्यस्य प्रतिषेधात् पापच्चितेत्यादावनेकस्वरत्वादिट् प्रवर्तते एव, अन्यथा एकस्वरत्वात् **"पचिवचिसिचिरिचिमुचेश्चात्"** ( ३।७।१८ ) इत्यनेनेट् प्रतिषिध्येत। उच्यते चापि—"आचार्या यङ्लुकीच्छन्ति सेट्कत्वमनिटामपि[१]" इति।

९—**"चायः किश्चेक्रीयिते"** ( ३।४।१० ) इत्यत्र 'चेक्रीयिते' इति विषयसप्तमीनिर्देशात् चर्करीतेऽपि 'चेकेति, पेपेति' इत्यादौ चाय-प्यायोर्धात्वो 'कि-पी' इत्यादेशौ जायेते।

१०—अबोभूदित्यादौ प्रकृतिग्रहणे चेक्रीयितलुगन्तस्यापि ग्रहणात् सिज्लोपादीनि कार्याणि प्रवर्तन्ते।

---

१. वचनस्यास्य मूलग्रन्थो न ज्ञायते।

११—'भू' इतिव्यक्तेरनाश्रयणाद् "भुवो वोऽन्तः परोक्षाऽद्यतन्योः" ( ३।४।६२ ) इत्यनेन वकारागमे सति अबोभूवुरिति, व्यक्तेराश्रयणाद् वकारागमाभावे उवादेशे सति अबोभुवुरिति रूप निष्पद्यते। कातन्त्रे बहुलग्रहणेनोभयमपि स्वीक्रियते। व्यक्तेराश्रयणाद् 'बोभव' इत्यत्र परोक्षाया "भुवो वोऽन्तःपरोक्षाद्यतन्योः" ( ३।४।६२ ) इत्यनेन वकारागमाभाव ।

१२—तिपा निर्दिष्टस्य कार्यस्य चर्करीतेऽप्रवर्तनात् "सूतेः पञ्चम्याम्" (३।५।१४) इत्यनेन 'सोपवाणि' इत्यत्र न गुणप्रतिषेध. ।

१३—'चर्करीत चेत्येके' इत्यस्यादादौ परस्मैपदिषु पाठाच्चर्करीतधातो· ( यङ्लुगन्तस्य ) परस्मैपदमेव न्याय्यमिति केचिन्मन्यन्ते, पर परिभाषावृत्तिकारेण दुर्गेण प्रकृतिग्रहणे चेक्रीयितलुगन्तस्यापि ग्रहणमिति न्यायमाश्रित्य जगमिष्यतीत्यत्र यदिडागमो विधीयते तेनेदमवगम्यते–चर्करीताद् भावकर्मणोरात्मनेपदमपि भवतीति। यथा भावे–बोभूयते, तास्थीयते इत्यादि, कर्मणि च–जगम्यते, दरीदृश्यते इत्यादि। हेतुत्रयमुपस्थापयन्तः केचिदत्र परस्मैपदस्यैव विधान समर्थयन्ति। तत्र प्रथमः—"चेक्रीयितान्तात्" ( ३।२।४३ ) इत्यनेन साक्षात् चेक्रीयितान्ताद् ( यङ्प्रत्ययान्ताद् ) धातोरात्मनेपद विधीयते न तु चेक्रीयितलुगन्तात्। द्वितीय·–चेक्रीयितकार्यस्य शेषभूत चर्करीतविधानम्। तृतीयश्च—"चर्करीतं च" इत्यस्यादादौ परस्मैपदिषु पाठ इति।

१४—चर्करीतादिनि प्रत्यये यणवद्भावाद् गुणाभाव. सम्प्रसारण च दृश्यते, चेच्चायतीत्यादौ च वृद्धिरपि। क्रमदीश्वरमते हन्धातोरिनि प्रत्यये 'हतयति, घातयति, घतयति' इति त्रीणि रूपाणि सम्भवन्ति।

१५—कातन्त्रैकदेशिन· केचिद् व्यञ्जनादिचुरादिधातोरिन् प्रत्यय विधाय चेक्रीयितसञ्ज्ञक 'य' प्रत्यय कुर्वन्ति। केचित्तु इनन्ताद् 'य' प्रत्यय लोपयन्ति। अत्र ते हेतुमुपस्थापयन्तो वदन्ति–"क्षुभिवाहिस्वनिध्वनिफणिकषिघुषा क्ते नेड् मन्थभृशमनस्तमोऽनायासकृच्छ्राविशब्दनेषु" (४।६।६३) इत्यत्रानिनन्तघुषधातोर्निर्देशाद् विज्ञायते–विकल्पेनन्ताश्चुरादयो भवन्तीति। तेनैवोदाहरणेन व्यञ्जनादेरनेकस्वराच्चुरादेर्यप्रत्ययो विधीयते लोप्यते चापि। अन्ये आचार्यास्तु प्रयोगानुसारेणैव कतिपयानेव विकल्पेनन्तानङ्गीकुर्वन्ति न तु सर्वान्। एव चेक्रीयित तल्लोपश्च प्रयोगानुसारेणैव भवतीति समामनन्ति।

एव कण्ठहारेण कविना चर्करीतरहस्यस्य जिज्ञासूना हिताय पञ्चदशकार्यविशेषाणा सक्षेपेण कारिकासु विस्तरेण च तट्टीकाया विवरण प्रस्तुतम्। एतेन कविना व्याकरणे, लोके चर्करीतप्रयोगे च स्वीयप्रवृत्तिराविष्कृता।

**चर्करीतरहस्यस्य कारिकाः—**

चर्करीताभिधो धातुश्चेक्रीयितलुकीष्यते।
सप्तम्या वैषयिक्या च तस्य द्विर्वचनं भवेत्॥ १॥

चेक्रीयिते च योऽभ्यासस्तत्र यद् यद् विधीयते ।
तत्सर्वं चर्करीतस्याभ्यासे रीविषये रिरौ ॥ २ ॥
ईडुद्वृद्धिनिमित्ते च चर्करीताद् विभाषया ।
चर्करीतादनो लोपो विकरणाभिधस्य तु ॥ ३ ॥
स्वरे चास्य गुणो न स्यादुपधायाश्च नामिनः ।
चोक्रुशीति प्रयोगोऽयं गुणिनि सार्वधातुके ॥ ४ ॥
असार्वधातुके तद्वच्चकाराद् (बहुलात्) यङ्लुकीष्यते ।
बेभिदिता प्रयोगोऽयं स्याद् बेभिदाञ्चकार च ॥ ५ ॥
चेक्रीयिते च यत्कार्यमुक्तं चरफलोस्तथा ।
तत्सर्वं चर्करीतस्य वदन्त्यपि मनीषिणः ॥ ६ ॥
तद्वत् स्वपि स्यमि-व्येञां चचूर्ति चंचुरीति च ।
पंफुल्ति पंफुलीत्येव सोषुप्ति सोषुपीति च ॥ ७ ॥
सेसेन्ति सेसिमीत्येव वेवेति वेवयीति च ।
ग्रह्यादीना च सौत्राणां सम्प्रसारणमिष्यते ॥ ८ ॥
जरीगृहीति जर्गर्ढि जरिगृहीति कैश्चन ।
नास्माभिस्तेन तेषां तु जाग्राढि जाग्रहीति च ॥ ९ ॥
जागृढो जागृहत्यत्रागुणत्वात् सम्प्रसारणम् ।
कृताभ्यासविधेराद्यप्रकृतेश्च ब्रुवो वचिः ॥ १० ॥
समुदायाश्रितानेकस्वरत्वादनिटामपीट् ।
चायप्यायोस्तथा धात्वोर्यथासङ्ख्यं कि-पी स्मृतौ ॥ ११ ॥
प्रकृतिग्रहणेनैव चर्करीतग्रहो भवेत् ।
अद्यतन्या भुवो वस्तु परैश्चान्यैरुविष्यते ॥ १२ ॥
बोभवेति परोक्षायां भुवो वो न व्यवस्थया ।
तिब्गणैकस्वरैरुक्ते अनुबन्धे च नेष्यते ॥ १३ ॥
नाऽऽत्मनेपदमिच्छन्ति केचित्तु भावकर्मणोः ।
आत्मनेपदमिच्छन्ति परेऽत्र भावकर्मणोः ॥ १४ ॥
चेक्रीयितलुगन्ताच्च नात्मनेपदमन्ततः ।
शेषत्वाच्चर्करीताच्च परस्मैपदमेव च ॥ १५ ॥
चर्करीतादिनो यण्वद् वृद्धिर्वा तत्र केचन ।
हनेरिनि हतो घातो घतश्चेति प्रयोगतः ॥ १६ ॥
अन्ये तु व्यञ्जनादेरनेकस्वरचुरादितः ।
इनन्ताद् यङमिच्छन्ति तल्लोपमपि मेनिरे ॥ १७ ॥

क्षुभिवाहिस्वनीत्यत्रानिड्घुषिरविशब्दने ।
विशब्दन इनोऽभावाद् विकल्पेनश्रुरादितः ॥ १८ ॥
एतस्माद् व्यञ्जनादेरनेकस्वराद् यङिष्यते ।
तल्लोपमपि वाञ्छन्ति परे चान्ये प्रयोगतः ॥ १९ ॥
रामचन्द्रनृपद्वारि कलापाध्यापने रतः ।
कण्ठहारकविः सोऽहं विवृणोमि रहस्यकम् ॥ २० ॥

## कातन्त्रविभ्रमस्य परिचयः

व्याकरणस्य लोकव्यवहाराधीनत्वात् काव्यशास्त्रादौ प्रयुक्ताना कतिपयशब्दाना साधनार्थं केनचिदाचार्येण कातन्त्रसम्प्रदाये मूलादतिरिक्तानि कानिचित् सूत्राणि प्रणीतानि, यानि साम्प्रत नोपलभ्यन्ते । तेषा गौरवमप्रसिद्धिश्चैकेन गोपालाचार्योक्तवचनेन विज्ञातु शक्यते, तद् यथा—

कातन्त्रसूत्रविसरः किल साम्प्रतं यद्,
नातिप्रसिद्ध इह चातिखरो [1]गरीयान् ॥ इति ।

"लोपो व्योर्वस इति क्षेमेन्द्रकृतवृत्तिसूत्रेण वकारलोपः" इति कातन्त्रविभ्रम-सूत्राणा व्याख्याकारस्य चारित्रसिंहस्य वचनादेतद् वक्तु शक्यते—**क्षेमेन्द्रेण**[2] पूर्वं तेषा सूत्राणा किञ्चिद् व्याख्यानमारचितमिति । क्षेमेन्द्रकृतव्याख्यानस्य टीका **मण्डननामकेन** केनचिदाचार्येण कृतेत्येकेन वचसा विज्ञायते, तथा हि—

"आदृतः किर्द्विश्चेति चकारादुपधालोपिनामिति क्षेमेन्द्रोक्तेश्चकाराद् गमि-जनि-हनिभ्यः किरिति मण्डनव्याख्यानेन किप्रत्ययः" इति । एषा व्याख्यानद्वयी मुद्रिता नोपलभ्यते ।

कातन्त्रसम्प्रदायघटकेन केनचिदाचार्येण विभ्रम[3]सूत्रैर्मूलसूत्रैश्च प्रयत्नेन साधिताः प्रायेण सार्धशतमिताः ( १५० ) शब्दा प्रश्नरूपेणैकविंशतिश्लोकेषु ( २१ ) उपनिबद्धाः । तत्र **अवचूरिनामकस्य** तदीयव्याख्यानस्य प्रणेता कः ? इति न ज्ञायते । अवचूरिकृता प्रसङ्गादन्येऽपि कतिपये शब्दाः ससाधिता इति "**इद श्लोकद्वयमवचूरिकृता कृतमस्ति प्रसङ्गतः**" इति चारित्रसिहवचनादवगन्तु शक्यते ।

---

१. चारित्रसिंहकृतवृत्तियुते मुद्रितेऽपि कातन्त्रविभ्रमे उपन्यस्तोऽय श्लोक, हस्तलेखेषु मया तथा न दृष्ट ।

२. कातन्त्रविभ्रमस्य सम्बन्ध. सारस्वतव्याकरणेन सह प्रतीयते, सारस्वतव्याकरणस्य च क्षेमेन्द्रकृत-व्याख्यानं हस्तलेखेषु वर्तते, एतेनेदमपि सम्भाव्यते तत्रैव स्वीये व्याख्याने क्षेमेन्द्रेणापेक्षितं सर्वमुक्त-मासीद् यत् कातन्त्रे प्रकल्प्यते इति । "आदृत किर्द्विश्च भूते" इति सूत्र वर्तते सारस्वतव्याकरणे शीलार्थप्रक्रियान्ते ।

३ श्रीकातन्त्र—( सारस्वत ) विभ्रमसूत्र सवृत्तिक लिख्यते इति मुद्रितग्रन्थोक्तवचनादेतदपि प्रतीयते—प्रश्नरूपेणोक्ता. श्लोका एव कातन्त्रविभ्रमस्य सूत्राणि सन्तीति । आचारात् तदपि सम्भाव्यते ।

अवचूरिटीकामाश्रित्य **अवचूर्णि**नाम्नी टीका चारित्रसिंहेन ( वि० स० १६२५ ) नीलकण्ठतनयेन गोपालाचार्येण ( स० १६६३ ) च प्रणीता हस्तलेखेषु दृश्यते। चारित्रसिंहप्रणीता टीका इन्दौरात् १९८४ तमे वैक्रमसवत्सरे प्रकाशिताऽपि। चारित्रसिंहो जैनमतानुयायीति प्रतिभाति, यथोक्त तेन मङ्गलश्लोके—

**'नत्वा जिनेन्द्रं स्वगुरुं च भक्त्या'** इत्यादि। ग्रन्थान्ते उपस्थापितेन स्वीयपरिचयेनैतत् सम्पुष्टिं भजते, तथा हि—

**श्रीजिनमाणिक्याभिधसूरीणां सकलसार्वभौमानाम्।**
**पट्टे वरे विजयिषु श्रीमज्जिनचन्द्रसूरिराजेषु ॥ २ ॥**
**वाचकमतिभद्रगणेः शिष्यस्तदुपास्त्यवाप्तपरमार्थः।**
**चारित्रसिंहसाधुर्व्यदधादवचूर्णिमिह सुगमाम् ॥ ३ ॥** इति।

आचार्यद्वयेन कृतमिद व्याख्यान सारस्वतव्याकरणसूत्रमनुसरति, यथोक्तमादौ—

**'तत्सत्प्रसादादवचूर्णिमेतां लिखामि सारस्वतसूत्रयुक्त्या'**। इति।

मध्येऽपि सारस्वतचन्द्रिकाकारमतमादृतम्, तथा हि—

**'क्वचिदाख्यातस्य टेः प्रागकजिति सिद्धान्तचन्द्रिकायां तद्धितप्रकरणे, तेनात्राकच्'** इति। कातन्त्रविभ्रमसूत्रसाधितानां प्रयोगाणा दुर्ज्ञेयत्व व्याख्याकारैरुद्घोषितम्, तद यथा—

**प्रायः प्रयोगा दुर्ज्ञेयाः किल कातन्त्रविभ्रमे।**
**येषु मोमुह्यते श्रेष्ठः शाब्दिकोऽपि यथा जडः ॥** इति।

अत एवात्रोक्तशब्दसाधनानभिज्ञः शाब्दिकोऽवश्य सत्यवसरे यथोक्तप्रतिपादनाभावात् कुत्सामाप्नोतीत्यन्ते उच्यते—

**स्वेदं समुद्वहति जृम्भणमातनोति, आशा विलोकयति खं पुनरेव धात्रीम्।**
**निद्रायते किमपि जल्पति भावशून्य भूताभिभूत इव दुर्वदकः सभायाम् ॥** इति।

व्याख्याकारेण चारित्रसिंहेनापि स्वीये व्याख्याने प्रसङ्गतः कतिपये शब्दाः साधिताः, उक्तमपि तेन—

**"इति रूपमनुक्तमपि प्रसङ्गादिह लिखितम्"**। इत्यादि।

अग्रे टीकाकारैः प्रसङ्गत उपन्यस्ताः श्लोकाः (  ) एतत्प्रकोष्ठाभ्यन्तरे सङ्कलयिष्यन्ते।

शाब्दिककैर्नूनमेव भ्रमापनोदनाय लघुकायस्याप्यस्य कातन्त्रविभ्रमस्य समादरो विधेयः।

**कातन्त्रविभ्रमस्य कारिकाः**

**कस्य धातोस्तिबादीनामेकस्मिन् प्रत्यये स्फुटम्।**
**परस्परविरुद्धानि रूपाणि स्युस्त्रयोदश ? ॥ १ ॥**

अग्निभ्यः पार्थिवेभ्यश्च प्रथमान्तं पदद्वयम् ।
एषेति नैतदाबन्तं श्वानस्येति च साधुता ॥ २ ॥

भवेतामितिशब्दोऽय बहुत्वे वर्तते कथम् ?
यागः षष्ठीसमास स्यात पञ्चमी पर्वतान्न हि ॥ ३ ॥

पञ्चडूढलानि साधुत्वं कथं याति च लक्षणात् ?
मुनीनामिति नो षष्ठी त्याद्यन्तं चाश्व इत्यपि ॥ ४ ॥

( स्याद्यन्तप्रतिरूपकास्त्यादय ४ )

अष्टाविति कथं द्वित्व राजेभ्य इति साधुता ।
तेनेत्येतत्त्याद्यन्त स्वादत्याद्यन्त भवेदिति ॥ ५ ॥

हस्तौ द्विवचनं नेदं शोभनेष्वित्यसप्तमी ।
क्षीरस्येति न षष्ठीयं त्याद्यन्तं वायुरित्यपि ॥ ६ ॥

दधिष्येति कथं साधु मधुष्येति तथा परम् ।
केनेत्येतदटान्तं स्यादपापा इत्यसुप्तता ॥ ७ ॥

एतेषां कथमेकत्वं वनानि ब्राह्मणै रमी ।
वृक्षाः पचन्ति येषां यान् वायुभ्यः पार्थिवाः सुराः ॥ ८ ॥

शेषाणि पूर्वाणि समान्यजानां फलानि मूलानि हलान्यगूनाम् ।
अभ्राणि नीलानि दलान्यतस्यः शूलानि कूलानि तटान्यपापाः ॥९॥

सुखानि शीलानि नखान्यसास्नाः खलानि पापानि बलान्यचर्चाः ।
पुराणि वर्षाणि मठान्यमीना घनानि सर्वाणि बिलान्यपा च ॥१०॥

( बहुवचनप्रतिरूपकाणामेकवचनता ८-१० )

( समुच्चयाच्चकारस्य स्याद्यन्त भवतीत्यपि ।
तथा जग्लौ दधौ मम्लौ ररावित्यादयोऽपरे ॥ १ ॥

जग्ले, पपे, ददे, मम्ले, जज्ञे, सस्रे, मुखास्तथा ।
विना परोक्षामभ्यूह्याः स्याद्यन्ता बहवो बुधैः ॥ २ ॥ )

अधीये नोपसृष्टस्य शक्यतीत्यस्य साधुता ।
जागर्तीति न जागर्तेरुच्यतीत्यस्य साधुता ॥ ११ ॥

( त्यादौ विपरीतानि रूपाणि ११ )

अस्यन्निति न शत्रन्तं व्याघ्रा इत्यस्य चैकता ।
बहुत्वं च तथैतेषामसुर्मेषारुरेव च ॥ १२ ॥

( विभक्तिव्यत्ययवन्ति १२ )

एतानि न स्याद्यन्तानि यस्य तस्याश्वमस्य च ।
शेलुर्बिभीतको वेणु पञ्चैते स्म ऋणानि च ॥ १३ ॥
( स्याद्यन्ताभानि त्याद्यन्तानि १३ )

( ततः समुच्चयाच्चस्य शसन्त पर्वतस्थिति· ।
आगमोऽनुजगृहे राजसे हर हरेऽव्ययम् ॥ ३ ॥

समुच्चयात् पुनश्चस्य प्रयोगास्त्यादिजा अमी ।
अस्यास्तस्याश्च यस्याश्च कस्या इति चतुष्टयी ॥ ४ ॥ )

एकस्य कस्य धातोः स्यात् त्यादौ रूपचतुष्टयम् ।
पर्वाणि पर्वतं पर्व पर्वतोऽपूर्वमेव च ॥ १४ ॥

( जलानि वातो वातं च वातः प्रातस्तथैव हि ।
श्यामोऽभ्यायोऽनलश्चाप्यक्षरं च समुच्चयात् ॥ ५ ॥ )

अशोकोऽनौस्तथा वातादश्रीणामरुणोऽवनम् ।
वनानि स्वोऽखिलं यानि शुभानि च रणानि च ॥ १५ ॥

( उपलक्षणतो लोके इति रूपाणि विभ्रमे ।
कुण्डे पिण्डे तथा शुण्डे मुण्डे चण्डे च खण्डके ॥ ६ ॥ )

सास्नाया अकुशोऽताता अमर्मा अवटोऽनृणाम् ।
वेष रेफ रवेऽपेपेरदोधूर्तानिलः कुतः ॥ १६ ॥

अरये नभसे पयसे वयसे लोके नसे गवे वृक्षे ।
अह्योऽकवेऽयसे लेखे रेखे रजसि रेजेऽलिट् ॥ १७ ॥

अद्यौर्न नञ्समासोऽयं सर्वेषामिति चैकता ।
अन्येषामपरेषां च केषां कासा तथा दृश ॥ १८ ॥
( स्याद्यन्ताभानि त्याद्यन्ताभानि १६-१८ )

( समुच्चयाच्चकारस्य चक्रे सम्बोधनं विना ।
अवस्था इति शब्दोऽपि स्यादेकवचनः कथम् ॥ ७ ॥ )

अगारं द्वे पदे स्यातां प्रथमान्तं शुनस्तथा ।
कर्तृरूपे कथं स्यातां दीयते धीयते तथा ? ॥ १९ ॥
( समासाभ बहुवचनानि च १९ )

त्याद्यन्तमालयं प्रोक्तमसमस्तमजापयः ।
अन्यान्योऽनालयश्चैव ह्यश्वालयमशालयः ॥ २० ॥
( समासविभक्तिकर्तृरूपाभानि २० )

( अजिनान्यधिक्षताधुक्षतेत्याद्यपराण्यपि ।
शेषे च देवते देवतामित्यादि चकारत. ॥ ८ ॥ )
अव्याधयोऽसमस्तं स्याद् येयेषांचक्रिरे पदम् ।
अक्षेपयस्तथा चान्यदक्षेवयममी वयम् ॥ २१ ॥
( स्याद्यन्तसमासाभानि २१ )

( असतीति कथं साधु करतीति तथाऽपरम् ।
कथमेतानि साधूनि वोच्यते भवता सह ॥ ९ ॥
अप्रसिद्धत्याद्यन्तानि )

( मारिरेकाम मामिमीमाम मामीमिले तथा ।
असीदामादिका ज्ञेयाः प्रयोगा अनया दिशा ॥ १० ॥
दुर्लक्ष्ययङन्तानि )

मन्ये क्वचित् काव्यशास्त्रादौ निर्दिष्टार्थेषु शब्दानामेतेषा प्रयोगोऽवश्यमेव जातः, अतस्तत्साधनप्रकारस्य प्रदर्शनायैष प्रयास आचरितः। व्याकरणस्य लोकप्रयुक्तशब्दसाधनफलकत्वादेतदेव वक्तु शक्यते ।

## राजस्थानेषु प्रचलितानि कातन्त्रस्य विकृतसूत्राणि

प्रथमपादस्य विकृतरूपाणि युधिष्ठिरमीमासकेन **संस्कृतव्याकरण-शास्त्र का इतिहास** इत्याख्ये ग्रन्थे, डॉ० कन्हैयालालशर्मणा च **हाड़ौती बोली और साहित्य**नामके ग्रन्थे पाठान्तरपुरस्सरमुपस्थापितानि । मया चात्र विक्रमविश्वविद्यालयीये सिन्धिया-प्राच्य-विद्या-शोधप्रतिष्ठाने सङ्गृहीतस्य हस्तलेखस्य पाठः प्रस्तूयते ( अस्मिन् पाठे बहुत्र प्रमाद. परिलक्ष्यते )—

सिधो वरणा समामनाया, चत्रो चत्र दशा दउसवैराः, दसे समाना, तेषा दुदवा वरणा नशी सवरणा, पुर्वो हसवाः, पारो दिरधा, सारो वरणा विरच्यो नामा, इकरादीनि सधिक्षराणि, कादानय ववाणजयनामिः, ते विरघाः पञ्चा पञ्चः, विरगानाय प्रथमदुतीया शाषोसाहच्याघोषा, घोषावतोरणः, आणुनासिकाः निन्यणुनामाः, अशताजेरे लउवा, उषमणशखोसाहाः, आईता विसारजनीयाः, काईता जेहवामूलीयाः, पाईता पद्मानीया, आईद्वे अतनशवाराः, पूर्वो पालैरोघा पालपदपदः, विरयो नामी शरपरः वरणनानमुः, अननुक्र मया नमसलेकजेत्रुः, लोकोपचाईरा दुरगणाशीधिः ।

**एति शंधिः सूत्रता प्रथमा सन्धि समापता ॥ १ ॥**

समानसी वरणा दिरघी भवन्ती पराई च लोपः, आवरणा ईवरणा ईवरणेई, उवरणा उवरणे, ॠवरणे रौः, लृवरणे लौः, इकारः इईकारसौ, उकारौ उउकारसौः, इवरणो जवसिवरणाः निचप्रलोप्या, बभुवरणा, खिरी वरणा, लंबरावरणा, इयोइयाजुः, उवोउवाशुः,

अजादिनाय जहवालोपः पालपदतः नऊवालोपः इशपति करति, अदोत्पालपदत· लोपन-काराविजनः, नवा जनेलुसनासधिया ।

एताः सन्धीसूत्रताः दुरतासंधिस्समापता ॥ २ ॥

ऊदाता आईरउवानिपताः सरप्रकरताः, दुरवचनमनिः, बहुवचनमनिः, अप्रथमेशेमे उसाकाराः सवरिजवाः पमा मकाराः तिभवइहाकारा· पूर्वं चत्रथानवापारारूप तकारा ल च ट वर्णेषुः च्या णुल्वोः न्याणुनानुयादः षटा स्याः ।

इति सन्धिसूत्रता त्रीती सन्धि समाप्ता ॥ ३ ॥

विरगप्रथमा पदान्ता कारे घोषा वतिसु सत्रता पेसाणुः, पञ्चमस पञ्चमियायू शोरशताश्च वरणा, विरगा हहयो पढाया सारोधीका नेउतो, तेवता च छाए सुकार टगए, सुकार तथा उए सुकारः त्वे ल ज जन्या साकारो कार· शणचवोडढणाः पछामकारः, योनिसवार· विजनेवाणाः तादु, विरगा· पञ्चम बछणनी दुखा ।

इति संधिसूत्रता चतुर्ति संधि समापता ॥ ४ ॥

वीशारजनीया चे छे वा शः, टे ठे वा ष·, ते थे वा सः, कखयोरजहवामुला वा, पफायोरपदा अरणवाः, सदेशवासवा· पारारूपः, अमकारी स्मिरधीः, आया घोषवतो ईनः, अपरो लोप्याः निसरजरुहा घोसोबन्धोपायगाः द्वरकरोलगामः नारीसुचयामाणिजः दिनदसकराम् कामप्रपातकरानहाकाइयराये वारणैः भाः आभो आम्या आः मामाइए-मेसारे· घोषवता लोपः, हरे ज्ञानपरोपः एकयौ दूराः वीशारजनी लोपः ना वीशरजनी लोप· पुनामशधा रहुरे लोपः आ च पुर्वो दिर्घा दवरीभव· सवरेप्रबामकारः वा बहुता हषहोथकै सनै हकेकारणै जावपदैजजालसूणा रैसषीया परीहाहाजीका चानुटेने हलगेजब अबायाक्रम रकवलगायके' जीव मोलेगयोः रातेरमाने सयणत जीसुषहगयोः सहामेचो ढ अ पर पारके बरबा साराषाः परीहाहाजा आह षसहायो न जायसता ईमा कारिकाः ॥७॥

एती सन्धिः सुत्रताः पञ्चमी सन्धिस्समापता ॥ ५ ॥

**कातन्त्रीयशिक्षासूत्राणि**

कातन्त्रीयशिक्षा क्वचिद् हस्तलेखेषु दृश्यते, कस्यायं प्रयास इति न विद्मः। अत्र अवर्णस्य कण्ठ इत्येव स्थान नोक्तम्, किञ्च केषाचिन्मते तस्य मुखवर्तीनि सर्वाण्येव स्थानानि सम्भवन्तीति निर्दिष्टम्। अवर्णस्य सर्वमुखस्थानीयत्वादेव 'आपत्' इत्यादा-वकारस्याऽऽकारादेशविधानाय "अवर्णस्याऽऽकारः" (३।८।१८) इति सूत्रे वर्णग्रहणं क्रियते, अन्यथा सर्वमुखस्थानीयस्य आकारस्य सर्वमुखस्थानीय आकारः सम्पद्यते। उपलब्धानि कातन्त्रीयशिक्षासूत्राण्यत्र लिख्यन्ते—

**१—अवर्ण-कवर्ग-ह्-विसर्जनीयाः कण्ठ्याः। २—इवर्ण-चवर्ग-य-शास्ता-लव्याः। ३—ऋवर्ण-टवर्ग-र-षा मूर्धन्याः। ४—लृवर्ण-तवर्ग-ल-सा दन्त्याः।**

५—उवर्ण-पवर्गोपध्मानीया ओष्ठ्याः। ६—ए ऐ कण्ठताल्व्यौ। ७—ओ औ कण्ठ्योष्ठ्यौ। ८—वो दन्त्योष्ठ्यः। ९- अवर्णः सर्वमुखस्थानमित्येके।

१०—अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठञ्च तालुकम्॥ इति।

११—अनुस्वारोऽनुनासिकः।

प्रकाशिते कलापसूत्रे पञ्चम सूत्र तृतीयस्थाने पठितम्, तदेवोचित प्रतिभाति, इवर्णानन्तरमुवर्णस्यैव वर्णसमाम्नाये पठितत्वात्, लोके तस्यैव क्रमस्य समादरसत्त्वाच्च। एकादश सूत्र हस्तलेखे न दृश्यते। प्रकाशितग्रन्थे पाठो न समीचीनः केवलनासिकास्थानोच्चारणस्यानुस्वारस्यानुनासिकसञ्ज्ञया व्याख्याकारैः प्रतिषेधकरणात्।

इति कातन्त्रव्याकरणविमर्शाख्ये शोधप्रबन्धे प्रथमो वाङ्मयाध्यायः।



# द्वितीयोऽध्यायः=कातन्त्रसूत्राणां रचना क्रमश्च

## सूत्राणां भेदा लक्षणानि च

यद्यपि परिमितैरेव शब्दैराहोस्विद् वर्णैर्विवक्षितार्थप्रतिपादनाय महर्षयोऽनेके पूर्वाचार्याश्च वेदान्त-योग-न्याय-वैशेषिकादीन् विविधान् ग्रन्थान् सूत्रशैल्या प्रणीतवन्तः, तथापि व्याकरणशास्त्रे सूत्रशैलीमन्तरा नान्येन केनचिल्लघुभूतेनोपायान्तरेणाऽऽचार्यैः शब्दानामनुशासन कर्तुं शक्यते। एतच्च व्याकरणाध्ययनस्य लाघवरूपमेक प्रयोजनमुपन्यस्यता महाभाष्यकारेण महर्षिणा पतञ्जलिनाऽभिव्यञ्जितम् (पस्पशाह्निकस्य प्रारम्भे)। सूत्रशब्दस्त्रिभिर्धातुभिर्व्युत्पाद्यते, यथोक्तमपि—

"अर्थान् सूत्रयति सूते सूचयति वा सूत्रम्" (कात० वृ० टी० १।१।६) इति।

अयमर्थः—लोके तत्तदर्थेषु प्रयुक्ताञ्छब्दान् यदेतादृशेन नियमरूपाऽऽवेष्टनेन निबध्नाति, येन तेषु विकारो मा भूत् तत् सूत्रमुच्यते इति। किं बहुना—वृत्तिभाष्यादिग्रन्थेष्वपि तदेव व्याख्यायते यत् सूत्रेषु तत्तच्छब्दैः सङ्केतितम्। उक्त च कुमारिलभट्टेन—

सूत्रेष्वेव हि तत्सर्वं यद् वृत्तौ यच्च वार्त्तिके।
सूत्रं योनिरहार्थानां सूत्रे सर्वं प्रतिष्ठितम्॥

(त० वा० २।३।६।१६) इति।

महर्षिवररुचिना सूत्रस्य लक्षणमित्थं कृतम्—

अल्पाक्षरमसन्दिग्धं सारवद् गूढनिर्णयम्।
निर्दोषं हेतुमत्तथ्यं सूत्रमित्युच्यते बुधैः॥

(द्र०-कवि० १।१।१) इति।

पाणिनीयसूत्राणा सारवत्त्वादिक महाभाष्यकारेणानेन वचःप्रकर्षेणोद्घोषितम्—"**प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता यत्नेन सूत्रं प्रणयति स्म। तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुं किं पुनरियता सूत्रेण, सामर्थ्ययोगान्न हि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्**" ॥ (म० भा० १।१।१, ६।१।७७) इति।

येषा सूत्राणा प्रत्याख्यान महाभाष्यकारेण स्वीयप्रतिभाबलेन कृत तत्र स्पष्टप्रतिपत्तिरेव प्रयोजनमिति नागेशभट्टोक्तिः समादरणीया, तद्यथा—"**पदमात्रमपीति=यत्र तु प्रत्याख्यायते तत्र स्पष्टप्रतिपत्त्याद्येव प्रयोजनम्। प्रत्याख्यानं तु तत्सामर्थ्याद्याश्रयणेन शुष्कतर्कैर्विरुद्धकल्पनाकरणाभावायेति द्रष्टव्यम्**" (म० भा० प्र० उ० ६।१।७७) इति। एव "**न खलु बहुविदामस्ति निर्मूलवाक्यम्**" (अपाणिनीयप्रमाणता, उद्धृतम्—सर० क०, भा० ४, प्रस्ता०, पृ० १३) इति नारायणभट्टोक्तवचसा

षोढा सूत्राणि सम्मतानि विपश्चिताम्। तदुक्तम्—

अधिकारो विधि सञ्ज्ञा निषेधो नियमस्तथा।
परिभाषा च शास्त्रस्य लक्षणं षड्विधं विदुः॥

(कवि० १।१।१) इति।

१—तत्र वक्ष्यमाणार्थसङ्क्षेपाय कार्यिकार्यनिमित्ताना यदुदीरण सोऽधिकारः[1]। अय भावः—पूर्वसूत्रस्थपदस्य परसूत्रेषु योपस्थितिः सैवाधिकारशब्देन वक्तु शक्यते इति। स च त्रिविधः[2]। सिंहावलोकितः, मण्डूकप्लुतिः, गङ्गास्रोत-प्रवाहश्च। कस्यचिच्छब्दस्य कतिपयसूत्रपर्यन्तमनुवृत्ति सिंहावलोकिताख्या, तदपेक्षयाऽधिकसङ्ख्यकसूत्रानुवृत्तिर्गङ्गास्रोत-श्शब्दवाच्या। आकाङ्क्षावशात् क्वचिदक्रमेण मण्डूकानामुत्प्लवनमिव केषाचिच्छब्दानामनुवृत्तिर्मण्डूकप्लुतिरित्यभिधीयते। 'स्वस्मिन् सूत्रे फलशून्यत्वे सति परत्र सूत्रे फल-सम्बन्धत्वमधिकारत्वम्' इति यत् कैश्चिदुच्यते तत् सम्पूर्णसूत्रस्याधिकारत्वमुद्दिश्य विज्ञेयम्, परं यत्रैकदेशस्यैवानुवृत्तिरिष्यते तत्र स्वस्मिन् सूत्रेऽपि फलसत्त्वेनास्य लक्षणस्याप्रवर्तनाल्लक्षणसामान्य बिल्वेश्वराचार्येण निर्दिष्ट[1] यस्य भाव उपरिष्टादुक्त। पदमञ्जरीकारेण हरदत्तमिश्रेणाधिकारस्य शब्दान्तरेण नानात्वमुक्तम्। तद् यथा—

"अधिकारस्त्वनेकप्रकारो भवति-सञ्ज्ञा, विशेषणम्, स्थानी, प्रकृतिः, निमित्तम्, आदेश इति" (प० म० १।४।२३) इति।

२—साक्षात् साधुत्वसम्पादकत्व विधित्वम्। तच्चात्यन्तमप्राप्तौ निर्दिश्यते। ये हि निषेध विधावेवान्तर्भावयन्ति तेषा मते विधिर्द्विविधः—वर्णोत्पादनरूपोऽभावरूपश्च। अभावोऽपि द्विधा—नाशो निषेधश्चेति विज्ञेयम्।

३—साक्षाच्छक्तिग्राहकत्व सञ्ज्ञात्वम्, शक्तिग्रहण च कश्चिद् व्यवहारमेवोद्दिश्य सम्भवतीति व्यवहारार्थं शास्त्रे कृतो यः सङ्केतः स एव सञ्ज्ञापदेनोच्यते।

४—निषेधो विधेरभावरूपः।

५—विधीना नित्यप्रवृत्तौ सत्या क्वचिद् येन नियम्यते स नियमः।

६—विधीना पाक्षिकप्रवृत्तौ सत्या क्वचिद् येन नियम्यते सा परिभाषा। सा च द्विविधा—लिङ्गवती विध्यङ्गशेषभूता च। लिङ्गवती तु एकत्रैव स्थिता सती कृत्स्ने एव शास्त्रे प्रकाशते। विध्यङ्गशेषभूता च विधिविशेषविषये एव प्रवर्तितु शक्नोति। सोदाहरणमेतद्विषये उच्यते—

एकस्थः सविता देवो यथा विश्वप्रकाशकः।
तथा लिङ्गवती शास्त्रमेकस्थाऽपि प्रदीपयेत्॥

---

१. कार्यिकार्यनिमित्ताना पदाना यदुदीरणम्।
वक्ष्यमाणार्थसङ्क्षेपायाधिकार स उच्यते॥ (बि० ३।३।१) इति।

२ सिंहावलोकिताख्यश्च मण्डूकप्लुतिरेव च।
गङ्गास्रोत इव ख्याता अधिकारास्त्रयो मताः॥ (मु० बो०, भूमि०, पृ० २) इति।

एकाऽपि पुंश्चली पुंसां यथैकैकं प्रयाति हि ।
विध्यङ्गशेषभूता तद्विधिं प्रत्यनुगच्छति ।। इति ।

परिभाषायाः प्रवृत्तिः शास्त्र परितो भवतीत्युच्यते—

परितो व्यापृतां भाषां परिभाषां प्रचक्षते । इति ।

कविवरेण माघेन परिभाषाया गरीयस्त्वमुत व्यापकत्वमेकेन वचनेनेत्थं विज्ञापितम्—

परितः प्रमिताक्षरापि सर्वं विषयं प्राप्तवती गता प्रतिष्ठाम् ।
न खलु प्रतिहन्यते कदाचित् परिभाषेव गरीयसी यदाज्ञा ।।
( शि० व० १६।८० ) इति ।

क्वचिन्निषेधो विधावेव गण्यते । अतोऽतिदेशरूपो भेदः पृथगाम्नायते । अन्यधर्मस्यान्यत्राऽऽरोपणमतिदेशः । स च पञ्चविधः—१. शास्त्रातिदेशः । २. कार्यातिदेशः । ३. निमित्तातिदेशः । ४. व्यपदेशातिदेशः । ५. रूपातिदेशश्च । पाणिनीये तु तादात्म्यातिदेशोऽपि स्वीक्रियते । तेन पाणिनीयसम्प्रदाये षड् अतिदेशाः, कातन्त्रसम्प्रदाये च पञ्चैवाङ्गीक्रियन्ते । कातन्त्रे च तादात्म्यातिदेशस्य न किञ्चिदुदाहरणमुपलभ्यते ।

श्रूयते हि—पूर्वं सूत्रपाठः संहिताबद्ध आसीदिति, सा च सूत्राणां संहिताशैली महर्षिपाणिनिनाऽपि समादृता । परञ्च परवर्तिभिः कैश्चिद् व्याख्याकारैः प्रकरणक्रमानुसारेण सूत्राण्युपस्थापितानि । संहिताबद्धेषु सूत्रेषु यथा शेष-विप्रतिषेध-अनुवृत्त्यादिरूप कार्यं साधु संघटते न तथा प्रक्रियाक्रमेणानुस्यूतेषु सूत्रेषु । पर शर्ववर्माचार्येण सन्धि-नाम-आख्यातेषु अध्यायेषु एतादृश सूत्रसंघटनं विहित येन कृत्स्नो ग्रन्थः परस्पर सम्बद्धः प्रतीयते । सङ्क्षेपेणेह तदीयसूत्ररचनायास्तत्क्रमस्य च विषये किञ्चिदुच्यते—

### कातन्त्रव्याकरणाध्यायानां क्रमस्य सङ्गतिः

शर्ववर्माचार्यप्रणीतेऽस्मिन् कातन्त्रव्याकरणे सन्धि-नाम-आख्यातात्मकेऽध्यायत्रितयेऽर्थलाघवस्य समादृतत्वाद् बहुत्र स्पष्टप्रतिपत्त्यर्थं तिङन्तादिपदानि योजितानि दृश्यन्ते । तेषामध्यायाना क्रमेणोपस्थापनस्य मूल 'मोदक देहि' इति वाक्य मन्यते । किं वा सूचीकटाहन्यायेन पूर्वं सन्धौ वर्णकार्यं प्रदर्श्य पदकार्ये कर्तव्ये आख्यातात् प्राङ् नामचतुष्टयमुपस्थापितम्, यतो हि अर्थसमाप्तौ समर्थस्य वाक्यस्य क्रियाप्रधानत्वात् क्रियाया विशेष्यत्वम्, कारकाणा च विशेषणत्वम् । एव नागृहीतविशेषणा बुद्धिर्विशेष्ये चोपजायते । अर्थाद् विशेषणज्ञानमन्तरा विशेष्यज्ञानं न भवतीति विशेषणभूत कार्यं प्रदर्शयितुमादौ नामचतुष्टयमुपस्थापितम्, एतदनु विशेष्यभूतं क्रियापदमुद्दिश्याऽऽख्यातकार्यमुपदिष्टमिति सङ्गतिः ।

### सन्ध्यध्यायीयसूत्राणां रचना-क्रम-कार्याणि

सन्धिप्रकरणस्य प्रथमपादे आदौ व्याकरणेऽस्मिन् समादृताना द्विपञ्चाशद्[१]-( ५२ ) वर्णाना वर्णसमाम्नाय इति सञ्ज्ञा प्रोक्ता । साम्प्रत तदीयग्रन्थे वर्णसमाम्नायः पठितो न

१. अ आ, इ ई, उ ऊ, ऋ ॠ, ऌ ॡ, ए ऐ, ओ औ, ˉ ˇ ( अनुस्वार ), . ( विसर्जनीय· ), ✕ ( जिह्वामूलीय· ), ॐ ᑌ ω ( उपध्मानीय· ), क् ख् ग् घ् ङ्, च् छ् ज् झ् ञ्, ट् ठ् ड् ढ् ण्, त् थ् द् ध् न्, प् फ् ब् भ् म्, य् र् ल् व्, श् ष् स् ह्, क्ष् ।

दृश्यते, किन्तु व्याख्याकाराणां वचनैस्तत्समादरः पूर्वमासीदिति प्रतीयते। काश्मीरका व्याख्यातारो जिह्वामूलीयोपध्मानीयक्षकारवर्णान् न पठन्तीति तन्मते एकोनपञ्चाशदेव (४९) वर्णा अत्र विज्ञेयाः। अत्र केचिद् व्याख्याकाराः "सिद्धो वर्णसमाम्नायः" (१।१।१) इति सूत्रं नियमसूत्रं विधिसूत्रमुद्देश्यसूत्रं वेत्याचक्षते, सञ्ज्ञासूत्रमिदं नास्ति सञ्ज्ञिनामभावादिति च वितर्कयन्ति। तत्र विचार्यते–'सिद्धः लोकप्रसिद्धः, नित्यः, निष्पन्नो वा यो वर्णानां पाठक्रमः स वर्णसमाम्नायसञ्ज्ञक इह वेदितव्यः' इत्यर्थकरणेन द्विपञ्चाशद्वर्णानां (५२) तत्पाठक्रमस्य वा सञ्ज्ञितयोपस्थितत्वेन सञ्ज्ञासूत्रमिदमित्यङ्गीकारे नो काचिद् हानिः प्रतीयते। ननु सञ्ज्ञासूत्रस्य परार्थप्रवृत्तत्वात् वर्णसमाम्नायसञ्ज्ञया विध्यादिसूत्रं न दृश्यते इति चेद् न, "तत्र चतुर्दशादौ स्वराः' (१।१।२) इत्यत्र 'तत्र' शब्देन वर्णसमाम्नायस्यैव परामर्शसत्त्वात्। एकप्रयोजनेन जिह्वामूलीयसञ्ज्ञाया प्रयोगे दोषाभावादस्या अपि सञ्ज्ञाया एकप्रयोजनेन प्रयोगे न कश्चिद् दोष इति। काश्मीरकै[1]र्व्याख्यातृभिस्तथैवाङ्गीक्रियतेऽपि।

ततो विभागशः केषाञ्चिद् वर्णानां सञ्ज्ञा उक्ताः, तत्रादौ 'अ आ इ ई, उ ऊ, ऋ ॠ, ऌ ॡ, ए ऐ, ओ औ' इति चतुर्दशवर्णानां **स्वर**सञ्ज्ञा प्रतिज्ञाता। स्वरसञ्ज्ञका आद्या दश वर्णाः **समान**सञ्ज्ञका निर्दिष्टाः। एतेषु समानसञ्ज्ञकेषु वर्णेषु द्वौ द्वौ वर्णौ **सवर्ण**सञ्ज्ञकौ भवतः। सवर्णसञ्ज्ञकेषु वर्णेषु ये पूर्वे वर्णास्ते **ह्रस्व**सञ्ज्ञकाः, परे च ये वर्णास्ते **दीर्घ**सञ्ज्ञका विज्ञेया। ये हि चतुर्दश (१४) वर्णाः स्वरसञ्ज्ञका उक्तास्तत्र अवर्णं परित्यज्य द्वादश (१२) वर्णा **नामि**सञ्ज्ञकाः क्रियन्ते, तत्रापि च 'ए ऐ ओ औ' इति चत्वारो वर्णाः **सन्ध्यक्षर**सञ्ज्ञका विज्ञेयाः। एवं स्वराणां समान-सवर्ण-ह्रस्व-दीर्घ-नामि-सन्ध्यक्षर-सञ्ज्ञा विभागशो भवन्तीति सङ्क्षेपः।

उक्तेभ्यश्चतुर्दशस्वरवर्णेभ्योऽतिरिक्तानां 'क् ख् ग् घ् ङ्, च् छ् ज् झ् ञ्, ट् ठ् ड् ढ् ण्, त् थ् द् ध् न्, प् फ् ब् भ् म्, य् र् ल् व्, श् ष् स् ह्, क्ष्' इत्येतेषां चतुस्त्रिंशद्(३४)वर्णानां **व्यञ्जन**सञ्ज्ञा भवति। अत्र यद्यपि वृत्तिकारः क्षवर्णं नोद्धरति, तथापि कैश्चिद् व्याख्याकारैर्निर्दिश्यते—

क्षवर्णस्य 'क्-ष्' इति वर्णयोः संयोगरूपत्वं विज्ञापयितुं वर्णसमाम्नाये क्षकारः पठ्यते, मुख्यतस्तु 'ह' पर्यन्तमेव वर्णाः सन्ति। नन्दिकेश्वरेण हकारपर्यन्तमेव वर्णानां स्थितिर्विज्ञापिता। तद् यथा—

१. न केवलमिदं परिभाषासूत्रमपि तु सञ्ज्ञासूत्रमित्यपि शब्दार्थः। अक्षराणां वर्णसञ्ज्ञया प्रयोजनमत्रैव सूत्रे इति भावः (बालबो० न्या०-ह० लेo, पृ० २४)। सिद्धो वर्णसमाम्नायः। वर्णानामकारादीनां समाम्नायः क्रमेण पाठः प्रसिद्धः आविद्वदङ्गनागोपालबालपर्यन्तं प्रसिद्धो भवतीति किमुपदेशेन, अत एवाक्षराणां वर्णसञ्ज्ञाऽपि बोध्या। ते च वर्णाः ४९ (कात० कौ०-ह० लेo, पृ० १)।

अकार सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः ।
आद्यमन्त्येन संयोगादहमित्येव जायते ।
इकारादिहकारान्ता वर्णाः समभवंस्ततः ॥

( नन्दि० का०, श्लो० ४ ) इति ।

पर भगवत्पादैः श्रीशङ्कराचार्यैः क्षान्तो वर्णावधिरुदीरितः, यथा—

'आदिक्षान्तसमस्तवर्णनकरी शम्भोस्त्रिभावाकरी' ( अन्नपूर्णास्तोत्रम्, श्लो० ७ ) इति । तेन वर्णसमाम्नाये क्षकारस्य पाठः समादरणीय एव ।

अत्र व्यञ्जनसञ्ज्ञकाना चतुस्त्रिंशद्वर्णाना मध्ये पञ्च पञ्च वर्णा वर्गसञ्ज्ञका भवन्ति, ते च वर्गाः पञ्चैव विज्ञेया इति वर्गसञ्ज्ञा कादिमान्तेषु पञ्चविंशतिष्वेव वर्णेषु प्रवर्तते । तासा वर्गसञ्ज्ञाना वर्गीयाद्यवर्णस्यैवोच्चारणेन व्यवहारो न तु वर्णान्तरस्योच्चारणेन । यथा-क् ख् ग् घ् ङ् इति पञ्चवर्णाना **कवर्ग** इति सञ्ज्ञा भवति न तु खवर्गादि । एतच्च वाजसनेयि-प्रातिशाख्ये **"प्रथमग्रहणे वर्गम्"** ( वाज० प्रा० १।६४ ) इति सूत्रेण स्पष्टमुक्तम् । एषु कवर्गादिपञ्चवर्गेषु ये प्रथमद्वितीया 'क् ख्, च् छ्, ट् ठ्, त् थ्, प् फ् इति, 'श ष स' इत्येते च वर्णास्तेषाम**घोष**सञ्ज्ञा क्रियते । एभ्योऽतिरिक्ता ये 'ग् घ् ङ्, ज् झ् ञ्, ड् ढ् ण्, द् ध् न्, ब् भ् म्, य् र् ल् व्, ह्' इत्येते वर्णास्ते **घोषवन्तो** विज्ञेयाः । वर्गीया ये अन्तिमाः 'ङ् ञ् ण् न् म्' इत्येते पञ्च वर्णास्ते **अनुनासिक**सञ्ज्ञा लभन्ते । 'य् र् ल् व्' इति चत्वारो वर्णा **अन्तस्थ**सञ्ज्ञकाः, 'श् ष् स् ह्' इत्येते च चत्वारो वर्णा **ऊष्म**सञ्ज्ञका भवन्ति ।

एवं स्वरव्यञ्जनसञ्ज्ञयोः प्रपञ्च प्रदर्श्य तयोर्मध्ये पठितत्वात् स्वरव्यञ्जनोभयात्मक-वर्णाना सञ्ज्ञाः क्रियन्ते । तत्र स्वरात् परतो बिन्दुद्वयात्मकस्य ( : ) वर्णस्य **विसर्जनीय**-सञ्ज्ञा विज्ञेया । विसर्जनीयस्य व्यञ्जनत्वाद् 'अग्निः, पटुः' इत्यादाविकारादेर्यकाराद्यादेशो न जायते । उर×केण, उर∞पेणेत्यादौ स्वरत्वाद् विसर्जनीयस्याऽऽदेशभूताभ्या जिह्वा-मूलीयोपध्मानीयाभ्या व्यवहितस्यापि नस्य णत्व व्यञ्जनत्वात् परगमन चानयोर्जायते । विसर्जनीयानुस्वारयोर्व्यञ्जनत्वेऽपि **'अनुस्वारो विसर्गश्च द्वावेतौ पूर्वसङ्गतौ'** ( कवि० १।१।१६ उद्धृत ) इति वचनान्न कदाचित् परगमनम् । कखयोर्वर्णयोः परतो विसर्गस्य यो हि वज्राकृतिरादेशः ( × ) स जिह्वामूलीय उच्यते, पफयो परतो गज-कुम्भाकृतिश्चादेशः ( ∞ ) उपध्मानीय इति । स्वरात् पर एकबिन्दुरूपः ( ं ) अर्धचन्द्रा-कृतिश्च ( ँ ) वर्णोऽनुस्वारसञ्ज्ञा लभते । 'यशांसि' इत्यादावेकबिन्दुरूप ( तिलकाकृतिः ) अनुस्वारः, 'ॐ' इत्यादावर्धचन्द्ररूपश्च द्रष्टव्यः । अनुस्वारस्य स्वरत्वाद् 'बृंहणम्' इत्यादौ णत्वं प्रवर्तते, व्यञ्जनत्वाच्च 'पुंसु' इत्यादौ सकारस्य मूर्धन्यादेशो न प्रवर्तते ।

वर्णाना सञ्ज्ञाः सम्प्रदर्श्य वर्णसमुदायस्य पदसञ्ज्ञा ब्रूते आचार्यः। सा च पदसञ्ज्ञा प्रकृतिविभक्त्योर्द्वयोरर्थोपलब्धौ सत्या सम्पद्यते। व्याकरणस्य पदसस्कारकत्वात् पदान्त मुख्याः ( सन्धिकार्योपयोगिन्यः ) सञ्ज्ञा. सम्प्रदर्शिताः। तदनु कादिव्यञ्जनवर्णाना पूर्व-स्थितेन वा वर्णेन सह सम्बन्धो जायेतेति निर्धारणार्थं परिभाषावचनमुपस्थापितम्—

"**व्यञ्जनमस्वरं परं वर्णं नयेत्**" ( १।१।२१ ) इति। अर्थात् प्रयोक्ता व्यञ्जन-वर्णान् परवर्णै. सह सयोजयेदिति। यद्यपि कादीना व्यञ्जनत्वात् परगमन स्वभावत एव दृश्यते न तु एतादृशवचनबलेन तेषा परगमन भवति, तेन सूत्रमिद सुखार्थं प्रणीतमिति व्याख्याकारा व्याचक्षते। 'वैयाकरण' इत्यादीन् समिलितान् वर्णाननतिक्रमयन्नेव विश्लेष-येदध्येता इत्यर्थं परिभाषोपस्थाप्यते—"**अनतिक्रमयन् विश्लेषयेत्**" ( १।१।२२ ) इति। पदान्ते वैदिकशब्दानामितरेषा लोकप्रसिद्धशब्दाना च साधनार्थमत्र यत्नो नाऽऽस्थितस्तेषा परिज्ञान शास्त्रकारैरितरै शिष्टैश्च करणीयमिति विज्ञापनार्थं सूत्रं रचितम्—"**लोकोपचाराद् ग्रहणसिद्धिः**" ( १।१।२३ ) इति। अत्र च वृत्तिकारेण सूत्रस्यास्योपन्यासे हेतुमुपदर्शयतो-क्तम्—

**वैदिका लौकिकश्चैश्च ये यथोक्तास्तथैव ते।**
**निर्णीतार्थास्तु विज्ञेया लोकात्तेषामसङ्ग्रहः॥** इति।

व्याख्याकारो महर्षिवररुचिरपि व्याकरणस्यास्येषत्तन्त्रत्वाच्छब्दसिद्धे साधन निर्दिशति—

**वाशब्दैश्चापिशब्दैर्वा शब्दाना ( सूत्राणाम् ) चालनैस्तथा।**
**एभिर्येऽत्र न सिध्यन्ति ते साध्या लोकसम्मताः॥**
( उद्धृ०-कवि० १।१।२३ ) इति।

एव प्रथमपादे सन्ध्युपयोगि सञ्ज्ञापरिभाषमुपस्थाप्य स्वरसन्धिप्रकरण प्रारब्धम्। तत्रादौ समानसञ्ज्ञकाना वर्णाना सवर्णे परे दीर्घं विधाय परवर्णो लोप्यते, तेन 'दण्ड + अग्रम्' इत्यत्र डकारोत्तरवर्तिनोऽकारस्य दीर्घे, परस्थितस्याकारस्य लोपे च कृते 'दण्डाग्रम्' इति रूपं जायते। महर्षिपाणिनिना त्वेतद्विषये "**एकः पूर्वपरयो.**" ( अ० ६।१।७५ ) इत्यधिकारमुपस्थाप्योभयस्थाने सवर्णदीर्घविधिरुक्तः। ततः "**आद् गुणः**" (अ० ६।१।८७) इत्यादिना 'अवर्ण—तद्भिन्नाच्' इत्येतदुभयस्थाने गुणादेरपि विधानं कृतम्। कातन्त्रे तु पूर्वस्थितोऽवर्ण इवर्णे परे 'ए' रूप प्राप्नोति परश्च वर्णो लुप्यते। यथा 'सा + इयम्' इत्यत्र सकारोत्तरवर्तिन आकारस्य एकारे परभागस्थितस्य इकारस्य लोपे च कृते 'सेयम्' इति रूपनिष्पत्तिर्जायते। अत्र पूर्वसूत्रस्थचकारस्याधिकारात् क्वचित् पूर्वोऽपि वर्णो लुप्यते। यथा 'हल + ईषा' इत्यत्र लकाराकारस्य लोपे कृते 'हलीषा' इति रूप निष्पद्यते। उवर्णे परेऽकार ओकाररूपो भवति। यथा 'गङ्गा + उदकम्' इत्यत्राऽऽकारस्य ओकारे उकारस्य लोपे च कृते गङ्गोदकमिति सिध्यति। ऋवर्णे परेऽकारस्यारादेशो विधीयते। यथा 'तव + ऋकारः' इत्यत्र वकाराकारस्यारादेशे कृते ऋकारस्य लोपे च सति 'तवर्कारः'

इति रूपम् । चकाराधिकारात् 'शीतार्तः' इत्यादावपरोऽपि दीर्घता दृश्यते । लृवर्णे परेऽकारोऽल् भवति । यथा 'तव + लृकारः' इत्यत्राकारस्यालादेशे, लृकारस्य लोपे च कृते 'तवल्कारः' इति रूपम् । एकारे ऐकारे च परेऽकार ऐकारमाप्नोति । यथा 'सा + ऐन्द्री' इत्यत्राऽऽकारस्य ऐकारे, परस्थ—एकारस्य लोपे च कृते सैन्द्रीति साध्यते । ओकारे औकारे च परेऽकार औकाररूपो भवति । यथा 'सा + औपगवी' इत्यत्राऽऽकारस्य औकारे, परस्थ—औकारस्य लोपे च कृते 'सौपगवी' इति रूपम् । इवर्णस्य यकारः, उवर्णस्य वकारः, ऋवर्णस्य रकारः ( रेफः ), लृवर्णस्य च लकारो विधीयतेऽसवर्णे स्वरे परे । तद् यथा—'दध्यत्र, मध्वत्र, पित्रर्थः, लनुबन्ध' इति । एकारस्यायादेशेन नयतीत्यादीनि, ऐकारस्याऽऽयादेशेन नायक इत्यादीनि, ओकारस्यावादेशेन लवणमित्यादीनि, औकारस्याऽऽवादेशेन च 'गावः' इत्यादीनि शब्दरूपाणि साध्यन्ते । उक्तस्य कार्यचतुष्टयस्य निर्देशाय कातन्त्रे सूत्रचतुष्टयमुच्यते, पाणिनीये तु प्रत्याहारविधिना सूत्रमेकमेवोक्तम्—**"एचोऽयवायावः"** ( अ० ६।१।७८ ) इति । उपरि ये एकारादीनामयाद्यादेशा उक्तास्तत्र यकारवकारयोः पदान्ते विकल्पेन लोपो भवति, लोपाभावे तु प्रकृतिभावो निर्दिष्टः । यथा—त आहुः, तयाहुरित्यादि । स्वरसन्ध्यन्ते व्यञ्जने परे स्वरसन्धिर्मा भूदित्येतदर्थं **"न व्यञ्जने स्वराः सन्धेयाः"** ( १।२।४१ ) इत्यनेन तन्निषेधः कृतः । अत्र टीकाकारेणोक्तम्—असवर्णे इकारादेर्यकारादिक कार्यमुक्तम्, असवर्णं तु व्यञ्जनमपि सम्भाव्यते, तेन देवीगृहमित्यादौ सन्धिः कर्तव्यः । **"इवर्णो यमसवर्णे न च परो लोप्यः"** ( १।२।८ ) इति सूत्रे 'असवर्णे स्वरे' इति पठितेऽपि नञा निर्दिष्टस्यानित्यत्वाद् व्यञ्जने परे सन्धिर्मा भूदिति निषेधोऽयमुपस्थाप्यते इति ।

स्वरसन्धिनिरूपणानन्तर तदभावरूपः प्रकृतिभावाख्यः सन्धिस्तृतीये पादे चतुर्भिः सूत्रैर्निर्दिष्टः । तत्र महर्षिपाणिनिना वैदिकशब्दाना प्रकृतिभावार्थं कृता नियमाः परित्यक्ताः ।

चतुर्थपादे आदौ चतुर्दशभि सूत्रैर्व्यञ्जनसन्धि निरूप्य सूत्रद्वयेनान्तेऽनुस्वारसन्धिर्वर्णितः । तत्र व्यञ्जनसन्धौ वर्गीयप्रथमवर्णाना तृतीयपञ्चमवर्णरूपता, शकारस्य छकारः, हकारस्य पूर्वचतुर्थवर्णाः, लकारस्य पररूप चकारश्च, 'ङ-ण-न' इत्येतेषा वर्णाना द्वित्वम्, नकारस्य शकार-षकार-सकार-लकार-अकार-न्चि-णकारादेशाश्च निमित्तभेदेन प्रोक्ताः । अत्राऽऽचार्येण शकारस्य हकारादेशोपपादनाय **"वर्गप्रथमेभ्यः शकारः स्वरयवरपरश्छकारं न वा"** ( १।४।३ ) इति सूत्र प्रणीतम् । तत्र वृत्तिकारेण वररुचिमते लानुनासिकेष्वपि परतश्छत्वविधिर्निर्दिष्टः । एव 'तच्छ्लक्ष्णः, तच्छ्मशानम्' इत्यादौ लानुनासिकयोः परयोः शकारस्य छकारे **"अघोषे प्रथमः"** ( २।१।६१ ) इत्यनेन छकारस्य चकारे सति प्रयोगसिद्धिर्भविष्यतीति व्यर्थमेव शे परे तकारस्य चकारकरणाय **"चं शे"** ( १।४।६ ) इति सूत्रं शर्ववर्माचार्येण प्रणीतमित्याक्षेपे वृत्तिकारः समाधत्ते—"अच्छत्वपक्षे वचनमिदम्" इति । विषयेऽस्मिन् प्रसिद्धमेतद् वचनमुपन्यस्त त्रिलोचनदासेन—

चं शे सूत्रमिदं व्यर्थं यत्कृतं शर्ववर्मणा।
तस्योत्तरपदं ब्रूहि यदि वेत्सि कलापकम् ॥
( पञ्जी १।४।६ ) इति।

वर्णसमाम्नायस्थपाठक्रमेणानुस्वारसन्धिनिरूपणानन्तर पञ्चमे पादे पञ्चदशभिः सूत्रैर्विसर्गसन्धिः प्रदर्शितः। तत्रादौ विसर्जनीयस्य श-ष-स-जिह्वामूलीय-उपध्मानीया आदेशा निमित्तभेदेनोक्ताः। 'श-ष-स' इति त्रिषु वर्णेषु परेषु तस्य पररूपं भवति, किञ्च तस्योकारादेश क्वचिल्लोपो यकार-रकारादेशौ चापि विज्ञेयौ। देवा आहुरित्यादौ विसर्जनीयस्य लोपे सति आकारस्य दीर्घादिविधिवारणायोच्यते—

"न विसर्जनीयलोपे पुनः सन्धिः" ( १।५।१६ ) इति। अत्र 'पुनः' इति-शब्दोपादानेनेदं विज्ञाप्यते—विभक्त्यादिलोपे दण्डाग्रमित्यादौ सन्धिर्भवत्येवेति। विसर्जनीयाधिकारेऽपि पुनर्विसर्जनीयशब्दोपादानात् तदग्रिम सन्धिकार्यं छकारस्य द्वित्वादिकम् एषच्छत्रेणेत्यादौ प्रवर्तते एव। 'अग्नी रथेन'इत्यादौ रेफस्य रेफे परे लोपस्तस्य दीर्घता चानुशिष्टा। अन्ते च विसर्जनीयलोपे छकारस्य द्वित्वविधिरादिष्टस्तेन 'वृक्षच्छाया'इत्यादयः प्रयोगाः सिध्यन्ति। एवम्प्रकारेण स्वर-व्यञ्जन-प्रकृतिभाव-अनुस्वार-विसर्गाख्याः पञ्च[१] सन्धयश्चतुर्षु पादेषु वर्णिताः। केचित् सञ्ज्ञाप्रकरणमपि सन्धेरुपयोगित्वात् सन्धिमध्ये सङ्कलयन्ति, तन्मते पञ्च पादा अत्र यथाक्रम सञ्ज्ञा-स्वर-प्रकृतिभाव-व्यञ्जन-विसर्गाणा वर्णनेन तत्तन्नामभिर्विभक्ता इति विज्ञेयम्।

केचिदेतेभ्यो भिन्नमप्येकमतिरिक्ताख्य सन्धिमङ्गीकुर्वन्ति। तत्र च स्वरव्यञ्जनोभयस्यैकैकस्य चापि कार्यं प्रदश्यते, तेन 'पटत + इति' इत्यादौ 'अत्' शब्दादिलोपेन पटितीत्यादीनि रूपाणि जायन्ते। एतत्सर्वं श्रीपतिदत्तेन कातन्त्रपरिशिष्टे विस्तरशो वर्णितम्, इह तु तन्न प्रदश्यते।

## नामचतुष्टयाध्यायीयसूत्राणां रचना-क्रम-कार्याणि

सन्धिप्रकरणे वर्णकार्यं प्रदर्श्य वर्णसमुदायरूप-स्याद्यन्त-पदकार्यनिरूपणाय नाम-चतुष्टयस्य प्रथमपादे आदौ धातुविभक्तिरहितस्यार्थवत. शब्दस्य लिङ्गसञ्ज्ञा प्रोक्ता। 'लिगि' धातुश्चित्रीकरणे एकदेशज्ञाने वा वर्तते, तेनास्या. सञ्ज्ञाया अन्वर्थता विज्ञापयन् पञ्जीकारस्त्रिलोचनदास इत्थ ब्रूते—"लिङ्ग्यते चिह्नयतेऽनेनैकदेशेनार्थो गम्यते इति लिङ्गम्, अविस्पष्टार्थप्रतिपत्तिहेतुरुच्यते" ( २।१।१ ) इति। अत एव वाक्यस्य स्पष्टार्थप्रतिपत्तिहेतुत्वाल्लिङ्गसञ्ज्ञा नोपपद्यते। तस्माल्लिङ्गात् पराः स्यादयो विभक्तयो भवन्ति। सङ्ख्याकर्मादयोऽर्था याभिर्विभज्यन्ते ता विभक्तयोऽत्र कीर्त्यन्ते इति तदर्थं सूत्रं न प्रणीतम्। तासा स्यादिविभक्तीना मध्ये आद्यानि यानि 'सि औ जस् अम् औ' इति पञ्च वचनानि तेषा सामान्यरूपेण घुट्सञ्ज्ञा निर्दिश्य जश्शसोश्च नपुंसकलिङ्गे कृता, तेन नपुसकेऽन्यवचनाना प्राप्ताऽपि घुट्सञ्ज्ञा निवर्तते, अर्थान्नपुसके जस एव घुट्सञ्ज्ञा

१. स्वरसन्धिर्व्यञ्जनसन्धि प्रकृतिसन्धिरेतथैव च।
अनुस्वारो विसर्गश्च सन्धिः स्यात् पञ्चलक्षण ॥ ( उद्धृ०—टि० टि०, पृ० १५० )

भवतीति। अत एव वारिणीत्यादौ **"घुटि चासम्बुद्धौ"** ( २।२।१७ ) इत्यनेन दीर्घश्च न प्रवर्तते। आमन्त्रितार्थे नानन्तर तत्र जायमानस्याऽऽगमस्य निर्धारित चिह्नमेतद् व्याकरणे परिभाष्यते—**"आगम उदनुबन्धः स्वरादन्त्यात् पर"** ( २।१।६ ) इति। अर्थादुकारोऽनुबन्धो यस्य तादृग आगमोऽन्त्यात् स्वरात् परो भवतीति। स एवोदनुबन्ध आगमस्तृतीयादौ विभक्तौ तु परादिरुपपद्यते।

प्रकृति-विभक्ति-आगमप्रदर्शनानन्तर लिङ्गसञ्ज्ञकशब्दस्थयो· 'इ-उ' वर्णयोः **अग्नि-सञ्ज्ञा**, स्त्रीत्ववाचकयो· 'ई-ऊ' इति वर्णयो· **नदीसञ्ज्ञा**, स्त्रीत्ववाचकस्य 'आ' वर्णस्य च **श्रद्धासञ्ज्ञा** निर्दिष्टा। लिङ्गस्य धातोश्चान्त्याद् वर्णात् पूर्वस्य वर्णस्य **उपधासञ्ज्ञाम्**, लिङ्गधात्वोरन्त्याद् व्यञ्जनात् पूर्वस्य नकारस्य **अनुषङ्गसञ्ज्ञा** च निर्दिश्य प्रयोजनवशाद-नन्तस्थानुनासिकस्य व्यञ्जनस्य **घुट्सञ्ज्ञा** प्रकीर्तिता।

एव शब्दसाधनोपयोगि सञ्ज्ञापरिभाषमुपस्थाप्य दीर्घादिविधानमारब्धम्। तत्र लिङ्गान्तस्याकारस्य 'आभ्याम्, वृक्षाय' इत्यादौ दीर्घ, वृक्षानित्यादौ सकारस्य नकार, वृक्षमित्यादौ लिङ्गस्याकारस्य लोप, वृक्षैरित्यादौ भिस ऐसादेश, 'एषु' इत्यादौ लिङ्गान्ता-कारस्य 'ए' इत्यादेश, वृक्षादित्यादौ ङसेरादादेश, वृक्षस्येत्यादौ ङसः स्यादेश, वृक्षेणेत्यादौ टाविभक्तेरिनादेश·, वृक्षायेत्यादौ 'ङे' विभक्तेर्यादेश प्रदर्शितः।

**"ङस् स्य"** ( २।१।२२ ) इति सूत्रव्याख्याने—

**नवं नवं परिक्षिप्य पुराणमपकर्षतः।**
**अतिजरस्य भिक्षुष्य कन्था वर्षशतं गता** ॥ इतिश्लोके अतिजरस्य,

भिक्षुष्येति पदद्वये षष्ठ्येकवचनस्य ङस· स्यादेशस्य सिद्ध्यर्थं युक्तिमुपन्तस्यन्नाह कविराज·—

"**ऋषिप्रयोगादिति चिन्त्यम्। यद्वा–इन टा, भिसैस् वा, ङेर्यः, ङसिरात्, ङस् स्यः, इतिक्रमेणैव पाठो युक्तः, कथं व्यतिक्रमः? तद् बोधयति—क्वचिद् व्यञ्ज-नान्तादुकारान्ताच्च स्यादिति**" (२।१।२२) इति। एतेन व्यत्यस्तक्रमेण सूत्ररचनयाऽऽचार्यस्य विशेषाभिप्रायो लक्ष्यते। अत एव साधूक्त महाभाष्यकारेण–**"इहेङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रप्रबन्धेनाऽऽचार्याणामभिप्रायो गम्यते"** ( म॰ भा॰ ६।१।३७ ) इति। क्रमविपर्यासेनापि सूत्रप्रबन्धस्य महत्त्वं प्रतीयते, तेन चाभिप्रायविशेष आचार्यस्योक्तस्थले विज्ञायते। स चाभिप्रायविशेषो व्यञ्जनान्तादुकाराच्चापि शब्दात् स्यादेशविधाने पर्यवस्यतीति बुधैरवगन्तव्यम्।

ततः सर्वनामिक कार्यमुच्यते। तत्र पूर्वाचार्यसमादृतान् सर्वनामसञ्ज्ञकान् शब्दान् उद्दिश्य 'ङे' विभक्ते· 'स्मै' आदेश·, ङेः स्मिन्नादेशः, आमि विभक्तौ सुरागम·, जसः 'इ' इत्यादेशो विधीयते। द्वन्द्वादिस्थसर्वनाम्नो लिङ्गस्योक्त सार्वनामिक कार्यं न भवति। तत श्रद्धासञ्ज्ञाया विषयो वर्णित·। तत्र श्रद्धासञ्ज्ञकाद् वर्णात् परस्य सेर्लोपः, टौसो· परयो,

श्रद्धासञ्ज्ञकस्याऽऽकारस्य एकारादेशः, सम्बुद्धौ चाम्बार्थानां श्रद्धासञ्ज्ञकानां ह्रस्वः, औकारस्य इकारादेशश्च निर्दिष्टः। औकारस्य इकारादेशविधायके **"औरिम्"** (२।१।४१) इत्यत्र ह्रस्वेकारपाठस्य समादृतत्वाज्जरसीति प्रयोगो नोपपद्यते शर्ववर्माचार्यमते इत्याहुर्व्याख्याकाराः। अत्राय समाधिः—

इकारादेशात् प्रागेव परत्वादन्तरङ्गत्वाच्च जरसि कृते श्रद्धासञ्ज्ञाभावादौकारस्येकारादेशो न भविष्यतीति जरसाविति रूपम्, जरसादेशस्याभावे औकारस्येकारादेशे आकारस्यैकारादेशे च कृते 'जरे' इति रूपं निष्पद्यते। ये हि कातन्त्रैकदेशीया वररुचिप्रभृतय आचार्या अत्र दीर्घपाठमाकलय्य जरसीति रूपं साधयन्ति तन्न समीचीनम्। यतो हि दीर्घपाठबलादीकारादेशस्य प्रागेव कृते सन्निपातलक्षणपरिभाषया जरसादेशस्याभावे 'जरे' इत्येव रूपं निष्पद्यते न तु जरसीति।

एतदनु श्रद्धासञ्ज्ञाप्रकरणे एव 'ङे-ङसि-ङस्-ङि' इति चतसृणां विभक्तीनां यथासङ्ख्यं 'यै-यास्-यास्-याम्' इति चत्वार आदेशा निर्दिष्टाः। सर्वनामशब्देभ्यस्त्वेते आदेशाः सुरागमसहिता विज्ञेयाः। ङवता 'ङे' इत्यादिवचनानामादेशकरणप्रसङ्गे नदीसञ्ज्ञकशब्देभ्योऽपि तेषां क्रमेण 'ऐ-आस्-आस्-आम्' इत्यादेशचतुष्टयी निरुक्ता। प्रसङ्गतोऽन्यदपि नदीकार्यमुक्तम्। यथा—सम्बुद्धौ नदीसञ्ज्ञकवर्णानां ह्रस्वः, अम्-शसोरकारस्य ईकारान्तात् सेश्च लोपः, सेर्लोपो व्यञ्जनसञ्ज्ञकादपि वर्णात् प्रोक्तः। श्रद्धानदीसञ्ज्ञकयोः 'आ-ई' वर्णयोः कार्यं प्रदर्श्याग्निसञ्ज्ञकान् 'इ-उ' वर्णानुद्दिश्य कार्यनिर्देशः क्रियते। तत्रामोऽकारस्य लोपः, औकारस्य शसोऽकारस्य च पूर्वस्वरत्वापादनम्, 'टा' इत्यस्य नादेशः, अदशोऽमुरादेशः, जसादिषु विभक्तिषु परतोऽग्निसञ्ज्ञकस्य इकारस्य एकारः, उकारस्य च ओकारः, ङसिङसोरकारस्य लोपः, 'ङि' इत्यस्य पूर्वेण वर्णेन सह 'औ' इत्यादेशः, स च सखिपतिभ्यां परः सपूर्वो न विधीयते।

**"गते मृते प्रव्रजिते क्लीबे च पतिते पतौ[१]"** इत्यादौ ऋषिवचनादन्येषां च मतेन सूत्रस्य योगविभागाद् वा क्वचित् सपूर्वोऽपि 'औ' इत्यादेशो भवतीत्याह टीकाकारः ( द्र०—कात० वृ० टी० २।१।६१ )।

सखिपतिभ्यां परस्य ङसिङसोरकारस्योकारादेशः, ऋदन्ताच्च परस्य पूर्वस्वरसहितस्योकारादेशः, ऋकारस्याऽऽकारादेशः, सेर्लोपः ऋदन्तलिङ्गस्याग्निवत्त्वम्, ऋकारस्यारादेशश्च विहितः। अरादेशविधायके **"अर् ङौ"** ( **२।१।६६** ) इत्यत्र कार्यिकार्यनिमित्तक्रमेणैव शब्दोपन्यासे कृतेऽपि वररुचिमतानुसारम् 'अर्' इत्यस्य प्राङ् निर्देशादत्र योगविभागोऽनुमन्यते, तेन—

**उपोष्य रजनीमेकाममावस्यां तिलोदकैः ( विशेषतः )।**

---

१. पराशरस्मृतौ वचनमिदं पाठान्तरेणोपलभ्यते। यथा—
नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो न विद्यते ॥ ( ४।२६ ) इति।

**पितरस्तर्पयामास विधिदृष्टेन कर्मणा** ॥ (द्र०—कवि० २।१।६६) इत्यत्र 'पितरः' इति पदं द्वितीयाबहुवचनेऽप्युपपद्यते ।

एतदनन्तरं धातोस्तृशब्दस्य स्वस्रादिशब्दानां च य ऋकारस्तस्य 'आर्' इत्यादेशः, सम्बुद्धौ च तस्य निषेधः, ह्रस्वनदीश्रद्धाभ्यः परस्य सम्बुद्धिसेर्लोपः, आमि परे नुरागमः, त्रेस्त्रयादेशश्च कृतः । अत्र व्याख्याकारैः सङ्ख्यायतेऽनयेति व्युत्पत्तिबलादेकद्वित्रिप्रभृतिषु सङ्ख्यासञ्ज्ञाया लोकोपचारादेव सिद्धौ सत्यां तत्सञ्ज्ञासूत्रमनुपस्थाप्यैव तदुद्दिश्य कार्यं विहितमाचार्येणेत्युक्तम् । एवं सङ्ख्यासञ्ज्ञकशब्देभ्यो जश्शसोर्लुकं नियं परस्य ङेरामादेशं च विधाय पादः प्रपूरितः ।

द्वितीयपादे सखिशब्दस्य टादौ विभक्तौ, पतिशब्दस्य च टादावसमासेऽग्निवत्त्वं निषिध्य ह्रस्वादित्रिविधरूपसम्पादनाय स्त्रीशब्दस्य नदीवत्त्वमतिदिश्यते । 'स्त्री' शब्दस्य ईकारान्तत्वेन साक्षान्नदीवत्त्वे कथं पृथक्-सूत्रेण तस्यातिदेश इति प्रश्ने व्याख्याकारा आहुः–"**स्त्रीशब्दस्य स्त्री चेति धातुवद्भावादियादेशविषयत्वाद् वक्ष्यमाणवचनाभ्यामामि ङवति च विभाषा प्राप्ता, वद्व्यावृत्त्या च शेषवचने नदीत्वस्याप्राप्तिरेवेति वचनमिदमुच्यते**" (पञ्जी २।२।३) इति । अत्र निमित्तानपेक्षत्वादेव नदीवत्त्वस्य प्रवृत्तौ सत्यां पूर्वमेव नदीवत्त्वमुपपद्यते पश्चात् प्रत्ययः, तेन "**स्त्र्याख्यावियुवौ वामि, ह्रस्वश्च ङवति**" (२।२।४, ५) इति सूत्राभ्यां विकल्पोऽपि नोपपद्यते । अन्ययोरियुवुस्थानयोर्ह्रस्वेकारोकारयोश्चापि नदीवत्त्वम्, नपुंसकलिङ्गात् परयोः स्यमोर्लुक्, मुरागमस्तुरागमश्च कृतः । तत्र औकारस्य ईकारादेशः, जश्शसोः शिरादेशः, नुरागमः, अस्थ्यादिशब्दानामन्तस्य टादावनादेशः कृतः । अत्राहुर्व्याख्याकाराः—नकारमात्रेणैवाऽऽदेशेन 'अस्थ्ना' इत्यादेः सिद्धौ "**अस्थिदधिसक्थ्यक्ष्णामनन्तष्टादौ**" (२।२।१३) इत्यत्र यतोऽकार उच्चार्यते, तेनेदं विज्ञेयम्—"**ईङ्योर्वा**" (२।२।५४) इति विकल्पेनाकारलोपे 'दध्नि, दधनि' इत्यादि रूपद्वयं भवति, अन्यथा 'दध्नि' इत्याद्याकारकमेकमेव रूपं निष्पद्येतेति ।

ततो भाषितपुंस्कस्य पुंवद्भावः, नाम्यन्तलिङ्गस्योपधाया दीर्घत्वम्, उशनसादिशब्दानामनादेशः, सखिशब्दस्यान्तस्य 'ऐ' इत्यादेशः, दिवो वकारस्य उकार-औकार-आकारादेशा निर्दिश्यन्ते । नुरागमः, जक्षादिशब्देभ्यः परस्यान्तिविभक्तेर्नकाररहित्यम्, हन्तेर्हकारस्य घकारः, गोशब्दस्य औकाराऽऽकारौ, पथ्यादीनामन्तस्याऽऽकारादेशोऽनादेशो लोपश्च कृतः । तेषां पथ्यादीनामन्येषां च नकारस्यापि लोपो विज्ञेयः । 'पुमनस्' शब्दस्थान्भागस्य लोपं विधाय 'चत्वार्-अनड्वाह्' शब्दयोः 'वा' इत्यस्योत्वं निर्दिष्टम् । नुरागमः, ह्रस्वः, अदसो दकारस्य मकारः, वन्सेः 'व' शब्दस्य श्वन्नादिशब्दानां च वकारस्योकारः, वाहेः 'वा' शब्दस्यौकारः, अन्चेरकारस्य लोपः, तिर्यन्चशब्दस्य तिरश्चिरादेशः, उदन्चशब्दस्योदीचिरादेशः, पादशब्दस्य पदादेशः, अनोऽकारस्य लोपश्चानुशिष्टः । लोपस्य प्रसङ्गे धातोराकारस्यापि लोपो निर्दिष्टः । लिङ्गाख्यधातोरियुवावादेशावुक्त्वा 'सुधी' शब्दस्येया-

देशः, 'भू' शब्दस्योवादेश, असयुक्तस्य धातो. 'य-व' आदेशौ, 'भू-स्त्री' शब्दयोर्नदीवद्भावः, 'भवन्तु' शब्दस्य वादेरुत्वम्, अव्ययादीनामन्त्यात् स्वरात् पूर्वमक्प्रत्यय, स्त्रीकृताकारपरे के प्रत्यये पूर्वस्थाकारस्य इकारादेशो विहितः।

एव स्याद्यन्तशब्दसाधनात्मके पादत्रितये प्रथमपादे एतत्प्रकरणोपयोगिनी सञ्ज्ञाः समुपस्थाप्य प्रायेण प्रत्ययकार्यं निर्दिष्टम्। द्वितीयपादे स्वरकार्य प्रदर्श्य तृतीयपादे व्यञ्जनकार्यमुक्तम्। तत्रादावपादादिस्थाना युष्मदादिशब्दाना षष्ठ्यादिविभक्तिषु वस्-नसाद्यादेशा. प्रकीर्तिताः, चादियोगे च तन्निषेधः कृतः। "चादियोगे च" (२।३।५) इत्यत्राऽऽदिशब्दस्य व्यवस्थावाचित्वात् 'च, वा, ह, अह, एव' इत्येते पञ्चैव चादयो गृह्यन्ते। विभक्तौ परतस्तेषा युष्मदादीना युष्मभ्यमित्यादावन्तस्य लोपो भवति। युष्मदस्मच्छब्दयोः 'औ' इत्यादिविभक्तिषु परतो युवावादेशौ यथासङ्ख्य भवत। युष्मदादिभ्य. परयोः 'अम्-औ' इत्येतयोरमादेशः, शस आनादेश., सौ विभक्तौ सविभक्तिकस्य त्वदादेस्त्वमहमादेशौ, जसि च तेषा 'यूयम्, वयम्' इत्यादेशौ, 'ङे' विभक्तौ 'तुभ्यम्, मह्यम्' इत्यादेशौ, ङसि तव-ममादेशौ, द्विवचन विहाय पञ्चम्या विभक्तेरदादेशः, भ्यसोऽभ्यमादेशः, युष्मदस्मद्भ्या परस्य स्वागमसहितस्य आम आकमादेश. अनादेशिनि स्यादौ चैषामन्तस्यैत्वम्, अस्थानिनि व्यञ्जनादौ चैषामन्तस्याऽऽत्व विज्ञेयम्। प्रसङ्गतो 'रै' शब्दस्याष्टनोऽन्तस्य चाऽऽत्वम्, कृताकारादष्टनो जश्शसोः स्थाने 'औ' इत्यादेशः कृतः। 'अर्वन्' शब्दस्यार्वन्तिरादेशो 'मघवन्' शब्दस्य च मघवन्तुरादेशो भवति। विषयेऽत्र भाष्यकारवचनादनयोः (अर्वन्—मघवन्) शब्दयोर्वेदे एव प्रयोगो युज्यते, तथापि शर्ववर्गाचार्यप्रयोगाल्लोकेऽपि प्रयोगार्हाविमौ शब्दावित्याहुर्व्याख्याकारा.। उदाहरन्ति च मघवद्वृत्रलज्जानिदानस्येद वचनम्—

"**श्लथीकृतप्रग्रहमर्वता व्रज**" (द्र०—कात० वृ० टी० २।३।२३) इति।

एतदग्रे 'जरा' शब्दस्य जरसादेशः, त्रिचतुरोस्तिसृचतस्रादेशौ, तिसृ—चतसृशब्दयो रभावो दीर्घाभावश्च, नृशब्दस्य दीर्घ., त्यदादेरन्तस्याकारादेश, किमः कादेशः, त्यदादेर्दकारस्य मकार., दकारतकारयो सकार., इदमोऽयमियमदनादेशा., एतदिदमोरेनादेशः, ऐसादेशबाधनार्थमिदमदसोर्भिसो भिरादेशश्च कृत.। भिरादेशविधायके "**तस्माद् भिस् भिर्**" (२।३।३८) इति सूत्रे 'तस्माद्' ग्रहणस्य प्रयोजनमुपन्यस्यन्तो व्याख्यातारः प्राहु.—एनादेशविधानार्थम् "**एतस्य चान्वादेशे द्वितीयायां चैन**" (२।३।३७) इति सूत्रकरण नोपयुज्यते इति तत्सूत्राभावे प्रकरणादव्यवहितस्येदमोऽनुवृत्तौ सत्याम् "**अद् व्यञ्जनेऽनक्**" (२।३।३५) इत्यस्यानित्यत्व तस्मादिति ग्रहणाद् विज्ञायते। अत एव च—'इमैर्गुणै. सतर्प्य. स्वर्गं गता.' इत्यादाविदमोऽदादेशो नावलोक्यते।

अन्येषामत्राभिमतम्—एनादेशविधायकसूत्रस्य (२।३।३७) अनन्तरत्वादेतच्छब्दस्यैवानुवृत्तौ प्राप्तायां सत्यां तस्मादिति ग्रहणबलाद् इदमित्येतदेवानुवर्त्यते इति।

ननु इदमोऽकारे कृते सन्निपातपरिभाषया भिस ऐसादेशो न भविष्यतीति तद्बाधनार्थं भिसो भिरादेशविधानं व्यर्थमिति चेद् न, सन्निपातपरिभाषया वर्णग्रहणे निमित्तत्वादिहैसादेशापत्तेः सत्त्वात् ।

ततोऽदसोऽन्तस्य 'औ' इत्यादेशः, मात्परस्य तदकारस्योकारादेशः, तत्र बहुत्वे निष्पन्नस्य एकारस्य ईकारादेशः, आप्-शब्दस्य, अनड्वाहादिशब्दानाम्, स्रसि-ध्वस-शब्दयोश्चान्तस्य दकारादेशः, यजादिलिङ्गानामन्तस्य डादेशः, हकारादीनां गकारादेशः, धातोस्तृतीयवर्णस्य चतुर्थवर्णरूपादेशो विहितः। तत्र **"हचतुर्थान्तस्य धातोस्तृतीयादेरादिचतुर्थत्वमकृतवत्"** ( २।३।५० ) इत्यत्र हकारोपादानस्य व्यर्थतामुपपादयन्नुमापतिराह—

**दादेर्हस्य कृते घत्वे ढत्वे डत्वविधावपि ।**
**कार्ये आदिचतुर्थे च हकारकरणेन किम् ॥**

(द्र०–कवि० २।३।५०) इति ।

अय भावः—**"ह-श-ष-छ-इजन्तादीनां डः"** ( २।३।४६ ) इत्यत्र ड-स्थाने 'ढ' इति वर्णस्य, **"दादेर्हस्य गः"** ( २।३।४७ ) इत्यत्र ग-स्थाने 'घ' इति वर्णस्य करणेन प्रकृतसूत्रे चतुर्थान्तस्येत्येवरूपपाठस्योपयोगितया चतुर्थशब्दस्यैवोपादानं कार्यं न तु हकारस्येति । तत्रेदं विज्ञेयम्—

अत्र हकारग्रहणादादिचतुर्थत्वं पूर्वमेव प्रवर्तते इति । अकृतवदित्यस्य ग्रहणाद् गोधुगित्यादौ **"दादेर्हस्य गः"** ( २।३।४७ ) इति प्रवर्तते । अन्यथा पूर्वमादिचतुर्थत्वे कृते दादेरभावात् प्रयोगो नोपपद्येत ।

एतदनु सजुषाशिषोरन्तस्य रादेशम्, धातूनामिरुरोरीरूरावादेशौ, अहन्-शब्दस्यान्तस्य सादेशम्, संयोगान्तस्य संयोगादेर्धुटो लिङ्गान्तनकारस्य च लोपम्, सम्बुद्धौ च तन्निषेधमुक्त्वा पूर्वविधौ लिङ्गान्तदीर्घादिके कर्तव्ये लुप्तयोर्नकारसंयोगान्तयोरलुप्तवद्भावः, इसुसन्तस्य दोसूशब्दस्य च रादेशः, धुड्वर्णानां तृतीयवर्णापन्नता, अघोषे च परे तेषां प्रथमवर्णापन्नता, विरामे च तेषां विकल्पेन प्रथमतृतीयवर्णापन्नता निर्दिष्टा। विरामादौ रेफसकारयोर्विसर्जनीयादेशानन्तरमुक्तकार्यस्य स्यमोर्लोपेऽपि विधानं कृत्वा स्याद्यन्तपदसाधनविधिरुपसंहृतः। उपर्युक्तकार्यस्य निर्देशके **"विरामव्यञ्जनादावुक्तं नपुंसकात् स्यमोर्लोपेऽपि"** ( २।३।६४ ) इति सूत्रे अपिग्रहणं व्यभिचारं सूचयति, तेन **'इदम्'** शब्दस्य अत्वं न भवतीत्याह वृत्तिकारः ।

अर्थमाश्रित्य विभक्तयो विधीयन्ते, अर्थश्च कर्त्रादिकारकलक्षणो भवतीति सामान्यतः स्यादिविभक्त्यन्तशब्दसाधनानन्तरं नाम्नश्चतुर्थपादे क्रियानिमित्तं कारकमाख्यातुमादावकारान्तादव्ययीभावसमासात् पञ्चमीविभक्तिं विहाय उपकुम्भमित्यादौ प्रथमादिविभक्तीनाममादेशं तृतीयासप्तम्योश्च विभक्त्योर्विकल्पेन तदादेशं विधायाकारान्ताद्

भिन्नादव्ययीभावसमासादव्ययाच्च विभक्तीना लुग्विधिर्निर्दिष्ट.। प्रसङ्गतो जनपदसमान-शब्दादीना बहुत्वे विहितस्यापत्यप्रत्ययस्य चापि लुग्विहित॰। लोकोपचारवशादेव कारकस्य ग्रहणेनात्र तदीयसञ्ज्ञासूत्र न पृथगुपन्यस्तम्। किञ्च तदवान्तरा. सञ्ज्ञास्तु दर्शिता एव। यथा—**"यतोऽपैति भयमादत्ते वा तदपादानम्, ईप्सितं च रक्षार्थानाम्"** ( २।४।८, ६ ) इति सूत्रद्वयेनापादानसञ्ज्ञा प्रोक्ता। अपकृष्य बुद्ध्या पृथक्कृत्य वस्तु आदीयते = बुद्ध्या गृह्यते तदपादानमुच्यते। एतादृशव्युत्पत्तिबलादेव बाह्यबौद्ध-रूपमुभयविधमपादान गृह्यते। अतः **"पराजेरसोढः"** ( अ॰ १।४।२६ ) इत्यादिपाणिनिसूत्राणा व्याख्याकारैः प्रदर्शित वैयर्थ्यमपादानसञ्जाया विवेचनावसरे निर्वर्णयिष्यते। क्रियाया. परिज्ञान विभागादेव जायते इति स विभागो यत उपपद्यते तस्यापादानसञ्ज्ञा-मादावुक्त्वा सा क्रिया सर्वतोभावेन यदर्थं क्रियते तस्य **सम्प्रदान**सञ्ज्ञा प्रदर्शिता। तद् यथा—

**"यस्मै दित्सा रोचते धारयते वा तत् सम्प्रदानम्"** ( २।४।१० ) इति। सम्यक् प्रदीयते यस्मै तत् सम्प्रदानमुच्यते।

विभागसम्प्रदानरूपक्रिया प्रदर्श्य कर्तृकर्मस्थायास्तस्याः क्रियाया यो हि आधा-रस्तस्याधिकरणसञ्ज्ञा प्रोक्ता **"य आधारस्तदधिकरणम्"** ( २।४।११ ) इति। यद्यपि देवदत्तादिकर्तृसमवायिनीं क्रिया कर्ता, तण्डुलादिकर्मसमवायिनीं च क्रिया कर्म साक्षाद् धारयति तथापि तयोर्नाधिकरणसञ्ज्ञा सम्भाव्यते—कर्तृकर्मसञ्ज्ञाभ्या बाधितत्वात्। अर्थात् तयोर्व्यवधानेन क्रियासिद्धावुपकारक कारकमधिकरणमुच्यते। एव क्रियासिद्धावप्रधान-रूपेण यदुपकारक तदधिकरण भवति, यच्च प्रकृष्टरूपेणोपकारक तत्तु करणमभिधीयते। अधिकरणसञ्ज्ञासमनन्तर करणसञ्ज्ञाया उपस्थापने तदीयप्रकर्षस्यैव कारणता सलक्ष्यते कातन्त्रमते। महर्षिपाणिनिना त्वत्र व्यत्यासः समुपस्थापितः। करणसञ्ज्ञा व्युत्पादयन्नाहा-चार्यः—**"येन क्रियते तत् करणम्"** ( २।५।१२ ) इति। यद्यपि क्रियासिद्धौ नाना साधनानि वर्तन्ते तथापि तन्मध्ये अनेनैवेद कार्यं करोमीति कर्ता यदन्तरङ्ग विवक्षित तत् करण विज्ञेयमिति। अत एवोच्यते—

**कारकाऽव्यवधानेन क्रियानिष्पत्तिकारणम्।**
**यद्वै विवक्षितं तेषु करणं तत् प्रकीर्तितम्॥**
( द्र॰—कात॰ वृ॰ टी॰ २।४।१२ ) इति।

कर्तुः क्रियया यत् क्रियते तत्कर्मोच्यते—**"यत् क्रियते तत् कर्म"** ( २।४।१३ ) इति। अत्र कर्मणि विहितेनाऽऽत्मनेपदेन क्रियाजन्यफलभागित्व कर्मत्वमाख्यायते। तेन कर्त्रा या क्रिया निष्पाद्यते तस्या. क्रियाया अमूर्तत्वात् कर्मकार्यं नोपपद्यते, तेन क्रिया-विशिष्टस्यैव साधनस्य कर्मत्वमवगन्तव्यम्। येन साधनेन क्रिया निर्वर्त्यते तत्साधनं किमुच्यते इत्याह—

"यः करोति स कर्ता" ( २।४।१४ ) इति। अर्थाद् य क्रिया करोति स कर्तृसञ्ज्ञा लभते इति। तदुच्यते—

**यः क्रियां कर्तृकर्मस्था कुरुते मुख्यभावतः।**
**अप्रयुक्तः प्रयुक्तो वा स कर्ता नाम कारकम् ॥**

( द्र०—कात० वृ० टी० २।४।१५ ) इति।

सूत्रेऽत्र काललिङ्गवचनानामतन्त्रत्वाद् भूतभविष्यतो., स्त्रीनपुंसकयो., द्विवचन-बहुवचनयोश्चापि कर्तृसञ्ज्ञा विज्ञेया।

कर्तु प्रेरकस्य चेह हेतुसञ्ज्ञाऽपि कथ्यते—"**कारयति यः स हेतुश्च**" (२।४।१५) इति। स च हेतु. कर्तैव गीयते। तदुक्त च—

**प्रेषणाध्येषणे कुर्वस्तत्समर्थानि वाऽचरन्।**
**कर्तैव विहितः शास्त्रे हेतुसञ्ज्ञा प्रपद्यते ॥**

( वा० प० ३।७।१२५ ) इति।

अत्राशङ्क्यते—कारकस्य क्रियानिमित्तत्वाद् घट करोतीत्यादौ निर्वर्त्यकर्मणो घटस्य क्रियासिद्धौ पूर्ववर्तित्वाभावात् कथ कारकत्वम्? इति। तत्रावधेयम्—क्रियासिद्धौ घटान्तरज्ञानस्य पूर्वसिद्धत्वाद् निर्वर्त्यस्यापि घटस्य पूर्ववर्त्तित्वमुपचर्यते इति।

एतेषा कर्त्रादिषट्कारकाणा मध्ये उभयोरेकत्र प्राप्तौ सत्या किं स्यादिति नियम्यते—"**तेषां परमुभयप्राप्तौ**" ( २।४।१६ ) इति। तेन—'धनुषा शरान् क्षिपति' इत्यत्र शराणा विभागस्यावधिरूपत्वाद् धनुषोऽपादानत्व क्षेपणरूपक्रियायाः प्रकृष्टोपकारकत्वात् करणत्व च तस्य प्राप्तम्, परत्वात्तु करणसञ्ज्ञैवोपपद्यते इति। लोकोपचारादेव सिद्धावेतासा कर्त्रादिसञ्ज्ञानामत्र प्रदर्शन सुखार्थमेवेति विज्ञेयम्। उक्त च—

**सम्प्रदानादयः सञ्ज्ञा रुचिधारिविवर्जिताः।**
**लोकोपचारतः सिद्धाः सुखबोधाय दर्शिताः ॥**

( द्र०—कात० वृ० टी० २।४।१६ ) इति।

एतासामपादानादीना षण्णा सञ्ज्ञाना कारकत्व लोके प्रसिद्धम्। वार्ष्यायणि-प्रोक्ताना 'जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, नश्यति' इत्येतेषा षण्णा भावविकाराणामस्ति कश्चित् सम्बन्धः षड्भिरेतैः कारकैरित्यभियुक्ता वदन्ति। अपादान—सम्प्रदानादिक्रमोपन्यासेनैषा क्रियया सह क्रमेण दूरस्थः सम्बन्धः प्रतीयते। यथा अपादानस्य क्रियया सह दूरतमः सम्बन्धः, कर्तुश्च क्रियया सह सामीप्यमेव।

या हि कर्त्रादिसञ्ज्ञा उपर्युपस्थापितास्तत्र च या हि विभक्तयो जायन्ते, तास्तु "**तस्मात् परा विभक्तयः**" ( २।१।२ ) इत्यनेनोक्ता एव, तासामत्रार्थनिमित्तको विभाग उच्यते। आदौ प्रथमाविभक्तिमुपन्यस्यन्नाहाऽऽचार्यः—"**प्रथमाविभक्तिर्लिङ्गार्थवचने, आमन्त्रणे च**" ( २।४।१७, १८ ) इति। अय भाव.—वस्तुमात्रार्थवचने आमन्त्रणे चार्थे

प्रथमा विभक्तिर्भवति । अर्थात्—प्रथमाविभक्तेर्लिङ्गम् = वस्तुरूपोऽर्थ आमन्त्रणं चार्थौ भवति । एव "**शेषा. कर्मकरणसम्प्रदानापादानस्वाम्याद्यधिकरणेषु**" (२।४।१९) इत्यनेन द्वितीयाया. कर्मत्वम्, तृतीयाया करणत्वम्, चतुर्थ्याः सम्प्रदानत्वम्, पञ्चम्या अपादानत्वम्, षष्ठ्याः स्वाम्यादित्वम्, सप्तम्याश्चाधिकरणत्वमर्थौ भवतीति सङ्क्षेपेणोक्त्वा एतदतिरिक्तस्थलेष्वपि द्वितीयादिर्विभक्तयो विहिता. । यथा 'परि-अप-आङ् आदियोगे पञ्चमी, एनप्रत्ययान्तेन योगे कर्मप्रवचनीयैश्च योगे द्वितीया, गत्यर्थाना धातूना चेष्टाक्रियाणा कर्मण्यध्ववर्जिते द्वितीयाचतुर्थ्यौ, नम स्वस्त्यादियोगे चतुर्थी, सहार्थेन योगे हेत्वाद्यर्थेषु च तृतीया, विशेषणभूत-काल-भाववाचकशब्देभ्य सप्तमी, स्वामीश्वरादियोगे षष्ठी सप्तमी च, हेतुशब्दस्य प्रयोगे षष्ठी, कर्तृकर्मणोर्निष्ठादिषु तन्निषेधश्च दर्शितः ।

तदनु विभक्तिप्रकरणेऽस्मिन् विभक्तिमुद्दिश्य किञ्चित्कार्यं विधीयते । तद् यथा—षण्णामित्यादौ डकारस्थाने णकारः, 'शान्ति-स्वाम्पि' इत्यादौ धुटि परतो मकारनकारयोरनुस्वार., अनुस्वारस्य वर्गीयवर्णेषु परेषु वर्गान्तादश., मज्जति, राज्ञः' इत्यादौ तवर्गस्य च–टवर्गौ, 'अग्निषु' इत्यादौ सकारस्य षकार, पुरुषेणेत्यादौ नकारस्य णकारश्च द्रष्टव्य. । स्त्रीणा नपुसकाना चापि कारकत्वात् तदीय विशेष कार्यं कार न्ते निर्दिश्यते । तद्यथा - 'अजा' इत्यादावकारान्ताल्लिङ्गात् स्त्रीत्वविवक्षायाम् 'आ' प्रत्ययो नदादिभ्यश्च 'ई' प्रत्ययो भवति । स्त्रीत्वविवक्षायामीकारे कृते पूर्वस्थस्य जकाराद्युत्तरवर्तिनोऽकारस्य लोपः क्रियते । नपुसकत्वविवक्षाया लिङ्गान्तस्य दीर्घस्वरस्य ह्रस्वो जायते, यथा—'सोमपम्, सेनानी' इत्यादि । ह्रस्वविधायके "**स्वरो ह्रस्वो नपुसके**" (२।४।५२) इत्यत्र ह्रस्वादिधर्माः स्वराणामेव वर्तन्ते इति स्वरग्रहणमन्तरेणैव स्वराणा ह्रस्व. सिध्यतीति किमर्थ स्वरग्रहण क्रियते ? इत्याशङ्कायामुच्यते—स्वरग्रहणसामर्थ्याद् योगविभाग इहाभिप्रेतः । "**स्वरो ह्रस्वः**" इत्येक सूत्रम्, "**नपुंसके**" इति चापरमित्याशयः । पुनर्वचन पूर्वविधेर्लक्ष्यानुसारेण प्रवृत्त्यर्थमिति । तदुक्त वृत्तिकारेण—

"**स्वरो ह्रस्व इति योगविभागाद् गोरप्रधानस्यान्तस्य स्त्रियामादादीनां चेति ह्रस्वः । चित्रगुः, अतिखट्वः, निष्कौशाम्बिः, अतिकरभोरु.**" ।

( कात० वृ० २।४।५२ ) इति ।

लोकोपचारादेव पञ्चभिर्गोणीभि क्रीत पञ्चगोणिः पटः, पञ्चभिः सूचीभिः कृतः पञ्चसूचिरित्यत्राप्रधानलक्षणो ह्रस्वो जायते एव, तर्हि स्वरग्रहण तदन्तप्रतिपत्त्यर्थ विज्ञेयमिति टीकाकार. ।

स्याद्यन्तपदाना निष्पत्तिप्रकार स्यादिविभक्तीनामर्थं चोक्तपादचतुष्टये प्रदर्श्य स्याद्यन्तपदाना स्यादिप्रकृतीना चैकार्थीभावमाख्यातुकामः शर्ववर्माचार्यः समासप्रकरण प्रारभते । तत्रादौ "**नाम्नां समासो युक्तार्थः**" (२।५।१ ) इत्यनेन नाम्नाम् = वस्तुवाचिना शब्दाना यद् युक्तम् = एकत्र मिलनम् ( मिलितम् ), मिलितस्य तस्य यो वै अर्थः स समाससञ्ज्ञकः प्रकीर्तितः । नामपदेनात्र स्याद्यन्त पद स्यादिप्रकृतिश्चोभयं गृह्यते । तथा चाह कविराज —

**"स्याद्यन्त-स्यादिप्रकृत्योरन्यतरोपस्थाप्यार्थप्रतिपादकत्वं नामत्वमिति पर्यवसितम्"** (कवि० २।५।१) इति। अत्र समासो न वैकल्पिकः किञ्च नित्यः स्वीक्रियते, वाक्य तु रूढमात्र गृह्यते। वृत्तिकारेण यदुच्यते—**"सञ्ज्ञयैव वा विधिरन्वाख्यातः स पुनरभिधानात् क्वचिन्नित्यः क्वचिद् विकल्प क्वचिन्न स्यात्"** इति, तत्र 'वा' शब्दः समुच्चयार्थकः। तेन सञ्ज्ञयैव नित्यः समासः सम्पद्यते, तदितरैश्च विकल्पविधि. प्रवर्तते। अत एव 'महत् कष्ट श्रितः' इत्यादौ न नित्य समास, सामर्थ्याभावात्। वृत्त्यर्थं यद् वाक्यमुपादीयते प्रत्यासत्त्या तदर्थप्रतिपादने य शक्त' स समर्थ. कथ्यते। युक्तार्थे विभक्तीना लोपो भवति। 'कण्ठेकाल.' इत्यादावभिधानात् क्वचित्तदभावोऽपि द्रष्टव्य। विभक्तिलोपे सति प्रत्ययलक्षणमाश्रित्य सखा प्रियोऽस्येति 'सखिप्रियः' इत्यादावनाद्यादेशा मा भूवन्निति **"प्रकृतिश्च स्वरान्तस्य"** (२।५।३) इत्यनेन स्वरान्तस्य लिङ्गस्य युक्तार्थस्थस्य प्रकृतिभावो विधीयते। सन्धिकार्यं विभक्तिनिमित्त न भवतीति 'देवेन्द्र. इत्यादौ तु सन्धिरेव भवति न तु प्रकृतिभाव.। व्यञ्जनान्तेषु तु प्रत्ययलोपलक्षणस्य प्रवर्तनेन युवामावामतिक्रान्तैः 'अतियुवाभि' अत्या-वाभि' इत्यादौ युवावादेशौ जायेते। अन्यथा द्विवाचिप्रत्ययाभावात् तन्न स्यादिति।

सप्तमीबहुवचने सुपि भादिविभक्तिषु च युगपदुक्त कार्यं व्यञ्जनान्तस्य लिङ्गस्य विधीयते—**"व्यञ्जनान्तस्य यत्सुभोः"** (२।५।४) इति। तेन षडाकृतिरित्यादौ षकारस्य डकार. सम्पद्यते। एव समासे सामान्यतो विधेय कार्यमुक्त्वा समासस्यावान्तरसञ्ज्ञाः समुपस्थाप्यन्ते। तद् यथा—**"पदे तुल्याधिकरणे विज्ञेयः कर्मधारयः"** (२।५।५) इति। अर्थात् समासविधौ यत्र द्वे पदे तुल्याधिकरणे भवत., स समासः **कर्मधारयसञ्ज्ञको** मन्तव्य। तुल्यशब्दोऽत्राव्युत्पन्न एकपर्याय, अधिकरणश्चार्थवाचक। अधिक्रियते नियुज्यते शब्दोऽभिधानायास्मिन्नित्यधिकरणम्। तुल्यम्=एकम् अधिकरणमर्थो ययोस्तत् तुल्याधिकरणम्। नीलोत्पलमित्यादौ नील विशेषणम्, उत्पल विशेष्यम्। अनयोर्विशेषण-विशेष्ययोर्व्यवच्छेदकव्यवच्छेद्यभावेनैकस्मिन्नर्थे प्रयोक्तृभि प्रयुक्तत्वेन तुल्याधिकरणत्वात् कर्म-धारयोऽस्ति। स एव कर्मधारयश्चेत् सङ्ख्यापूर्वो भवति तर्हि तस्य द्विगुसञ्ज्ञोपपद्यते। द्विगुसमासश्च तद्धितार्थोत्तरपदसमाहारेषु भवति। तद्धितार्थे यथा 'पञ्चकपाल' इत्यादि, उत्तरपदे 'पञ्चगवधन.' इत्यादि, समाहारे 'पञ्चपूली' इत्यादि। उक्तयो. कर्मधारयद्विगु-समासयोरुभयोस्तत्पुरुषसञ्ज्ञा कृता—**"तत्पुरुषावुभौ"** (२।५।७) इति। स च तत्पुरुष कदा भवतीति ज्ञापनार्थमुच्यते—

> **विभक्तयो द्वितीयाद्या नाम्ना परपदेन तु।**
> **समस्यन्ते समासो हि ज्ञेयस्तत्पुरुषः स च॥**
>
> (२।५।८) इति।

द्वितीयाद्या विभक्तयो यदा परैर्नामपदै सह समस्यन्ते तदा तत्पुरुषसमासो भवतीत्यर्थ.। यथा—कष्ट श्रित=कष्टश्रित इत्यादि। विशेष्यविशेषणभावापन्ने द्वे पदे बहूनि वा पदानि यदाऽन्यपदार्थे वर्तन्ते तदा स समासो बहुव्रीहिसञ्ज्ञको विज्ञय.। तदुक्तम्—

स्यातां यदि पदे द्वे तु यदि वा स्युर्बहून्यपि ।
तान्यन्यस्य पदस्यार्थे बहुव्रीहिः ॥

( २।५।९ ) इति ।

'उत्तरपूर्वस्यै, उत्तरपूर्वायै' इत्यादौ विकल्पेन सार्वनामिककार्यस्य निषेधके "दिशा वा" ( २।१।३६ ) इति सूत्रे प्रतिपदोक्तबहुव्रीह्यर्थं सूत्रान्तरं क्रियते—"विदिक् तथा" ( २।५।१० ) इति । अर्थाद् दिग्वाचकयोः शब्दयोरन्यार्थवाचकः समासो बहुव्रीहिर्भवतीति । समासे नाम्नोर्नाम्नां वा य इतरेतरयोग-समाहाररूपः समुच्चयः स द्वन्द्वसञ्ज्ञां लभते । उक्तं च—"द्वन्द्वः समुच्चयो नाम्नोर्बहूनां वापि यो भवेत्" ( २।५।११ ) इति । एतस्य द्वन्द्वसमासस्योभयपदार्थप्रधानत्वात् कः पूर्वं प्रयोज्यः कश्चोत्तरमिति विधानार्थं सूत्रमुच्यते—"अल्पस्वरतरं तत्र पूर्वम्" (२।५।१२) इति । द्वन्द्वसमासे यदल्पस्वरतरं तत् पूर्वं प्रयुज्यते इत्यर्थः । यथा—प्लक्षन्यग्रोधावित्यादि । यच्च द्वन्द्वे द्वयोः पदयोर्मध्ये पूज्यार्थकं ( पूज्यः = विशिष्टः ) भवति तदपि पूर्वं प्रयुज्यते—"यच्चार्चितं द्वयोः" ( २।५।१३ ) इति सूत्रेण । यथा वासुदेवार्जुनावित्यादि । चकाराद् व्यभिचारोऽपि दृश्यते नरनारायणावित्यादौ ।

एवं यत्र विशेषणं पूर्वं प्रयुज्यते तानुत्तरान्यपदप्रधानान् कर्मधारयद्विगुतत्पुरुषबहुव्रीह्याख्याश्चतुरः समासानादौ प्रदर्श्याल्पस्वरतरमर्चितं च पदं यत्र पूर्वं प्रयुज्यते स द्वन्द्वसमासोऽप्युक्तः । साम्प्रतं यत्र विशेष्यभूतं पदं पूर्वं प्रयुज्यते तस्य समासस्य सञ्ज्ञां प्रवक्तुमाह—

"पूर्वं वाच्यं भवेद् यस्य सोऽव्ययीभाव इष्यते" ( २।५।१४ ) इति । यस्य समासस्य पूर्वपदार्थो वाचको भवति स समासोऽव्ययीभावो विज्ञेय इत्यर्थः । तत्र पूर्वपदमव्ययं भवति परपदं चानव्ययम्, तद्वशात् समुदायोऽनव्ययोऽपि अव्ययत्वं प्रतिपद्यते । यथा—उपकुम्भमित्यादि । स चाव्ययीभावसमासोऽव्ययप्रधानत्वान्नपुंसकत्वमाप्नोति, तदुक्तम्—"स नपुंसकलिङ्गं स्यात्" ( २।५।१५ ) इति । समाहारद्वन्द्वस्य द्विगोश्च समुदायप्रधानत्वाद् ( समुदायः = संहतिः ) एकत्वमुत्पद्यते, तस्यापि नपुंसकलिङ्गतैवोचिता प्रतिभातीति "द्वन्द्वैकत्वम्, तथा द्विगोः" ( २।५।१६, १७ ) इत्याभ्यां तत्र नपुंसकत्वं विधीयते । यथा—गङ्गाशोणम्, पञ्चगवमित्यादि । ततः स्त्रियां वर्तमाने तुल्याधिकरणे भाषितपुंस्कस्य पुंवद्भावो विहितः । अथ पुंवद्भावः समानायामाकृतौ भवतीति द्रोणीभार्या, कुटीभार्येत्यादौ सूत्रं न प्रवर्तते । सञ्ज्ञापूरणीकोपधानां तु शब्दानां तत्कार्यं न भवति । "पुंवद्भाषितपुंस्कानूङ्" ( २।५।१८ ) इति सूत्रोक्तकार्यस्य केनचित् प्राप्तस्य प्रतिषेधस्य बाधनार्थं कर्मधारयसमासे पुंवत्त्वविधानमुपपाद्यते—"कर्मधारयसञ्ज्ञे तु पुंवद्भावो विधीयते" ( २।५।२० ) इति ।

एतदनु 'महादेवः, महावक्त्रः' इत्यादौ तुल्याधिकरणे पदे 'महत्' शब्दस्याऽऽत्वं कृतम् । 'असवर्णः, अघोषाः' इत्यादौ नलोपविधानार्थमुक्ते—"नस्य तत्पुरुषे लोप्यः" ( २।५।२२ ) इति सूत्रे तत्पुरुषग्रहणमुपलक्षणं मन्यते, तेन न विद्यते घोषो ध्वनिर्येषां ते अघोषा इति बहुव्रीहावपि नकारो लुप्यते । अत्र असवर्ण इत्यादौ नकारस्यैव लोपः प्रवर्तते

१०

न त्वकारसहितस्य । ज्ञापकस्य वैकल्पिकत्वमपि[1] नेहादरणीयम्—सूत्रे द्विनकारपाठाङ्गीकरणाद् व्यञ्जनमात्रनकारलोपस्येष्टत्वात् । स्वरे च परे तत्पुरुषे नञो नकारे विद्यमानयोरकारनकारयोर्विपर्ययो भवति। यथा न अज इति अनज । तत्पुरुषे कुशब्दस्य कदादेशः, ईषदर्थे च वर्तमानस्य कुशब्दस्य कादेशो निगदित. । कादेशविधायके "**का त्वीषदर्थेऽक्षे**" ( २।५।**२५** ) इति सूत्रे केचिदाहु —"ईषदर्थे का त्वक्षे इति कर्तव्ये यदीषदर्थे इति वचन मध्ये ( वर्तते ) तद् बोधयति—योगोऽत्र विभक्तव्य इति । तेन ईषदर्थस्य पूर्वेण सिद्धत्वात् कुत्सितार्थस्य कादेशः सिद्धो भवति । कुत्सितमक्ष काक्ष तेन वीक्षते इत्यादि" ( द्र०— कात० वृ० टी० २।५।२५ ) इति । एतेन इन्द्रियभिन्नेऽप्यक्षशब्दे प्रवर्ततेऽयमादेशः— कुत्सितोऽक्ष. काक्षो घृतादि । अत्र 'तु' शब्द पुनरर्थे ग्राह्य । स च कादेश पुरुषशब्दे परे विकल्पेन भवति । रोहिणिमित्र.' इत्यादौ क्वचित् समासे स्त्रीत्वाभिधायकयोरीकाराकारयोर्ह्रस्वो विधीयते । 'द्विगुणाकर्ण' इत्यादौ ह्रस्वस्य दीर्घ , लक्ष्यानुरोधाद् अयस्पाशमित्यादावव्ययभिन्नस्य विसर्जनीयस्य सकारश्च द्रष्टव्य ।

तद्धितानामभिधानलक्षणत्वाल्लोकोपचारेणैव सिद्धौ सत्या तत्सञ्ज्ञामनुक्त्वैव तद्धितपादे पूर्वं षष्ठ्यन्तान्नाम्नोऽपत्यार्थकोऽण् प्रत्ययो विहित । यथा—पाण्डोरपत्य पाण्डव. इत्यादि । अपत्यशब्दस्य सम्बन्धिशब्दत्वाद् यस्य तदपत्य तत एवापत्यार्थक. प्रत्ययो भविष्यतीति कृत्वा "**वाऽणपत्ये**" ( **२।६।१** ) इत्यत्र 'तस्य' इति निर्देशो न कृत. । अत्र सूत्रे ह्रस्वादेरपत्यशब्दस्य साहचर्यवशाद् ह्रस्वादिरेवाण् प्रत्ययो भवति न तु दीर्घ इति कविराज. । 'गार्ग्य' इत्यादावपत्यार्थे ण्यप्रत्यय , 'कौञ्जायन्य.' इत्यादावनण्प्रत्यय , 'वैनतेय., आत्रेय.' इत्यादावेयण्प्रत्यय , दाक्षिरित्यादौ चेण्प्रत्ययो विहित. । तदनु अण्प्रत्ययो येष्वर्थेषु भवति तेऽर्था निर्दिश्यन्ते, यथा—

**रागान्नक्षत्रयोगाच्च समूहात् साऽस्य देवता ।**
**तद्वेत्त्यधीते तस्येदमेवमादेरणिष्यते ॥**

( **२।६।७** ) इति ।

अत्राऽऽदिपदेन तत्र भव., तत्र जात , तत आगतश्चेत्यादयोऽर्था. शिष्टप्रयोगानुसारेण ग्राह्या इति व्याख्यातारो भाषन्ते, तेन चक्षुषा चक्षुर्भ्यां वा गृह्यते चाक्षुष रूपमित्यादिप्रयोगा उपपद्यन्ते । इकण्प्रत्ययस्यार्थान् निर्दिशन्नाहाचार्य —

**तेन दीव्यति संसृष्टं तरतीकरण् चरत्यपि ।**
**पण्याच्छिल्पान्नियोगाच्च क्रीतादेरायुधादपि ॥**

( **२।६।८** ) इति ।

यथा—अक्षैर्दीव्यतीत्याक्षिकम् , दध्ना ससृष्ट दाधिकमित्यादि । तृतीयान्ताद् नावस्तार्येऽर्थे यप्रत्यय. सम्पद्यते, यथा—नावा तार्यं नाव्यम् , एवमन्यत्रापि । तद् यथा—

१. सविकल्पान्यपि ज्ञापकानि भवन्ति ( कात० वृ० टी० २।५।२२ ) ।

नावस्तार्यं विषाद् वध्ये, तुलया सम्मितेऽपि च ।
तत्र साधौ यः ॥

( २।६।९ ) इति ।

हितेऽर्थे ईयप्रत्ययो भवति—"ईयस्तु हिते" ( २।६।१० ) इत्यनेन । यथा—वत्सेभ्यो हितो वत्सीयो गोधुगित्यादि । तुशब्दोऽत्र योगविभागार्थमुपात्तस्तेन स्वराणा मध्ये य आदावाकारवान् वृद्धिमाश्च शब्दस्ततोऽपि ईयप्रत्यय शेषार्थे भवति । यथा—शालाया जातो भवो वा शालीय इत्यादि । उवर्णान्ताद् गवादिभ्यश्चापि हितेऽर्थे यत्प्रत्ययो भवति । यथा—वधूभ्यो हितो देगो वव्य इत्यादि । यत्प्रत्ययविधायके "यदुगवादितः" ( २।६।११ ) इति सूत्रे उवर्णश्च गवादिश्च उगवादी, मध्यमपदलोपी द्वन्द्वसमास. । सूत्रस्यास्य कृतिवैचित्र्य टीकाकारेणोक्तम्—"विचित्रा हि सूत्रस्य कृतिरित्याविर्भावनपर एवायं निर्देशः" इति ।

उपमानार्थे वतिप्रत्ययः, शब्दस्य प्रवृत्तिनिमित्तरूपार्थे ( भावार्थे ) त-त्वौ प्रत्ययौ यण् च प्रत्यय. प्रकीर्तित । प्रथमान्तादस्यास्मिन् वाऽस्तीत्यर्थे 'मन्तु-वन्तु-विन् इन्' इत्येते चत्वारः प्रत्यया उच्यन्ते । एतेषा मन्त्वादीना भूमानिन्दादय. प्रसिद्धा अर्था वृत्तिकारेणात्र प्रदर्शिता , यथा—

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षाया मन्त्वादयो भवन्त्यमी ॥ इति ।

एतेषा विषयविभागोऽपि विस्तरेण वर्णितः, येन मन्त्वादयो विभागश. क्व भवन्तीति ज्ञायते । तद् यथा—

तथा मोपधमान्ताच्च धुडन्ताद्शिडन्ततः ।
अवर्णोपधतश्चापि वन्तुरवर्णतस्तथा ॥ १ ॥
मायाशीर्षात् स्वरूपाच्च व्रीहेरर्थात् स्वरूपतः ।
यथा व्रीहीति शालीति इन्ननेकस्वरादतः ॥ २ ॥
मायामेधास्रजो विन् स्याद् वाऽधिकाराद् विभाषया ।
विहिताः सर्व एवैते शेषेभ्यो मन्तुरिष्यते ॥ ३ ॥
द्वन्द्वनिन्दितरोगेभ्यः प्राणिस्थेभ्य इनेव हि ।
कटकवलयी कुष्ठी स्यात् काकतालुकी यथा ॥ ४ ॥
स्यात् स्वाङ्गात् तु यथाप्राप्तं स्तनकेशवती यथा ।
कः स्वार्थे नित्यमेवैषां वातोऽस्यास्तीति वातकी ॥ ५ ॥
अतिसारक्यपीदृक् स्यात् पिशाचकी तथा स्मृतः ।
कश्मलसोन्मत्तत्वेऽपि पिशाचशब्दोऽभिधीयते ॥ ६ ॥
वयसि गम्यमाने च पूरणान्तादिनेव हि ।
पञ्च दिनानि मासा वा पञ्चमी बालको यथा ॥ ७ ॥

सुखादिभ्य इनेव स्याद् बाहूरुभ्यां बलादपि ।
सुखी दुःखी अलीकी च करुणी कृपणी हली ॥ ८ ॥
तृप्री कृच्छ्री प्रतीची च सोढ्यस्त्रयास्त्रीत्युदाहृतम् ।
बाहुबल्यूरुबली च सर्वादेर्नित्यमिस्तथा ॥ ९ ॥
विज्ञेयं सर्वबीजीति सर्वकेशीत्युदाहृतम् ।
स्याद् धर्मशीलवर्णान्तादिनेवेति विवक्षया ॥ १० ॥
ब्रह्मधर्मी सुशीली च ब्रह्मवर्णीत्युदाहृतम् ।
जातौ तु हस्तदन्ताभ्यां कराच्चैव इनेव हि ॥ ११ ॥
हस्ती, दन्ती, करी ज्ञेयो वर्णादिन् ब्रह्मचारिणि ।
स्युर्ब्रह्मचरणाद् हेतोर्वर्णिनो ब्राह्मणास्त्रयः ॥ १२ ॥
ब्रह्मचर्य विनापि स्युः सम्भवाद् ब्राह्मणा इति ।
पुष्करोत्पलपद्मेभ्यो नडविषतमालतः ॥ १३ ॥
कपित्थकुमुदाभ्यां च मृणालात् कर्दमात् पयस्-
शालूककरीषेभ्यश्च हिरण्याद् रूढदेशके ॥ १४ ॥
विवक्षायामिनेवेति यथा पुष्करिणीति च ।
मनन्तमान्तशब्देभ्यः सञ्ज्ञायामिनेवेष्यते ॥ १५ ॥
अप्राप्तनियमार्थं च दामिनी सोमिनी यथा ।
इन्विषये इको वाच्यः प्रागुक्तान्नियमार्थतः ॥ १६ ॥
स्वार्थे कः स्यान्न वाच्योऽयं दण्ड्येव दण्डिको यथा ।
सञ्ज्ञामालेष्टका वीणा मेखला वडवा शिखा ॥ १७ ॥
बलाकाभ्यः पताकाया इन् विभाषा विधीयते ।
वा कर्मचर्मवर्मभ्यश्चूलोत्साहबलोद्दाम ॥ १८ ॥
मूलदलकूलायामावरोहप्रयामोपयामव्यायामावरोहाणामिनन्तानां सदैतेषां स्वार्थे को नेष्यते बुधैः । इति

पूरणेऽर्थे सङ्ख्याया डमौ प्रत्ययौ, द्वित्रिशब्दाभ्या तीयप्रत्ययः, चतुर्थादौ थस्याऽऽगमः, कतिपयकतिशब्दाभ्या थप्रत्ययः, विंशत्यादे पूरणेऽर्थे विकल्पेन तमट्प्रत्ययः शतादेश्च नित्यो भवति । ये च प्रत्यया द्व्यादिवर्जितात् सर्वनाम्नो बहुशब्दाच्च विहितास्तेषा विभक्तिसञ्ज्ञा क्रियते । उक्तञ्च—

विभक्तिसञ्ज्ञा विज्ञेया वक्ष्यन्तेऽतः परं तु ये ।
अद्व्यादेः सर्वनाम्नस्तु बहोश्चैव पराः स्मृताः ॥

(२।६।२४) इति ।

तेषु विभक्तिसञ्ज्ञकेषु 'इदम्' शब्दस्य 'इ' इत्यादेशः, रथो परतस्तस्येदमः 'एत' इत्यादेशो भवति। अत इत्यादौ तकारादिविभक्तिसञ्ज्ञकेषु परत इदमोऽकारो जायते। पञ्चम्यास्तस्-प्रत्ययः, सप्तम्यास्त्रप्रत्ययः, इदमः किमश्च सप्तम्यन्ताद् हप्रत्ययः, किमोऽत्प्रत्ययश्च, तकार-हकारपरयोः किमः 'कु' इत्यादेश, काले वर्तमानेभ्यः किमादिशब्देभ्यो दाप्रत्ययो भवति। इदमः सप्तम्यन्ताद् 'र्हि,' अधुना, दानीम्' इत्येते प्रत्ययाः, 'तद्' शब्दाच्च 'दा-दानीमौ' प्रत्ययौ विज्ञेयौ। 'सद्यः' इत्यादयः शब्दा निपातनात् साधवो विज्ञाप्यन्ते। प्रकारवचने थाप्रत्ययः, 'इदम्-किम्' शब्दाभ्या थमुप्रत्ययः, आख्यातान्च तमादय प्रत्यया उक्ताः। तमादि-गणे पूर्वाह्णेतरा पूर्वाह्णेतमामित्यादौ तराम्—तमाम्प्रत्ययौ, गुणवाचकाच्छब्दाद् इष्ठेयन्सू प्रत्ययौ, प्रकर्षार्थे रूपप्रत्यय, ईषदसमाप्तौ कल्पदेश्यदेशीयप्रत्यया, कुत्सितवृत्तेर्नाम्नः पाश-प्रत्यय, भूतपूर्ववृत्तेश्चरट्-रूप्यप्रत्ययौ, बह्वल्पार्थात् कारकाच्छस्प्रत्ययो विहितः। किञ्चान्या-र्थेष्वपि तत्तच्छब्देभ्यः कृत्वसु, धा, सुच्, मयट्, च्वि, साति., त्रा, डाजादयो बहवः प्रत्यया विधीयन्ते। समासान्तगतेभ्यो राजादिशब्देभ्योऽत्प्रत्ययो भवति, तेन उपराजम्, अध्यात्ममित्यादयः प्रयोगाः सिध्यन्ति। अत्र राजादिगणेऽर्थभेदेन तत्तच्छब्देभ्योऽत्प्रत्ययो विहित। कुत्सितो राजा किंराजेत्यादावत्प्रत्ययस्य निषेधोऽपि द्रष्टव्य। सरसिजमित्यादौ डप्रत्ययेऽन्त्यस्वरादेर्लोपो भवति। तद्धिते स्वरे ये च प्रत्यये परे उकारस्य ओकारो विधीयते-'औपगवः' इत्यादौ। 'कामण्डलेयः' इत्यादौ तु एयप्रत्यये परे तस्य ( उकारस्य )लोपः क्रियते। गव्यमित्यादावोकारस्यावादेशः, नाव्यमित्यादावावादेशश्च भवति तद्धिते स्वरे ये च प्रत्यये परे। णकारानुबन्धमये तद्धितप्रत्यये परे स्वराणा मध्ये आदिस्वरस्य वृद्धिर्भवति। यथा वासिष्ठः, कार्पण्यमित्यादि। अन्ते च विधिप्रतिषेधोभयात्मक **"न य्वोः पदाद्योर्वृद्धि-रागमः"** ( २।६।५० ) इति सूत्रमुपस्थापितम्, तेन 'वैयाकरण, सौवश्वः' इत्यादौ पदाद्योर्य-कारवकारयोः समीपे वृद्धिर्न भवति, किञ्च तयोरादौ वृद्धिरागमो जायते इति।

## आख्याताध्यायीयसूत्राणां रचना-क्रम-कार्याणि

सर्ववर्णाना स्याद्यन्तपदाना च कार्यप्रदर्शनानन्तर क्रियापदमाख्यातुमाख्यातप्रकरणं प्रारभमाण आचार्यो वर्तमानादिकालबोधिकासु वर्तमानादिषु त्यादिविभक्तीना मध्ये पूर्व-स्थिताना नववचनाना **परस्मैपदसञ्ज्ञा** परस्थिताना च नववचनानाम**आत्मनेपदसञ्ज्ञा** प्रणिनाय। तत्र च क्रमेण त्रीणि त्रीणि वचनानि **प्रथममध्यमोत्तम**सञ्ज्ञकानि कृतवान्। यद्यपि **"त्रीणि त्रीणि प्रथममध्यमोत्तमाः"** ( ३।१।३ ) इत्यत्र पुरुषशब्दो नोपात्तस्तथा-प्येकक्रियाकालाभिधाने प्राप्तानामनेकेषा पुरुषाणां मध्ये परस्यैव पुरुषस्य नियमनाय प्रवर्तिते **"युगपद्वचने परः पुरुषाणाम्"** (३।१।४) इति सूत्रे पुरुषशब्दस्योपादानेनात्र प्रथमादयः पुरुषत्वेन प्रतीयन्ते इत्याहुर्व्याख्यातारः। अत एव च 'प्रथममध्यमोत्तमाः' इति पुंवत्त्व-निर्देशः। तदनु एतेषा प्रथमादिपुरुषाणा प्रयोगस्थलं निर्धारयन्नाह—**"नाम्नि प्रयुज्य-मानेऽपि प्रथमः"** ( ३।१।५ ) इति। नाम्नः प्रयुज्यमानेऽपिनाऽप्रयुज्यमाने च प्रथमः पुरुषः प्रयुज्यते। यथा—'सः पचति, पचति' इत्यादि। एव युष्मच्छब्दे प्रयुज्यमानेऽ-

प्रयुज्यमाने च मध्यमः पुरुषो विज्ञेयः-"युष्मदि मध्यमः" ( ३।१।३ ) इति। अत्रोच्यते—'अर्थपर एवाय निर्देश' इति। तत्राऽऽशङ्क्यते—निर्देशस्यार्थपरत्वेन युष्मदर्थकस्य 'भवान्' शब्दस्य प्रयोगेऽपि कथ न मध्यम. पुरुषः प्रवर्तते ? इति। सत्यम्, सूत्रे युष्मदीत्यस्य स्थाने त्वयीतिनिर्देशे प्राप्ते यद् युष्मदीति निर्दिष्टम्, तद् युष्मदर्थविशिष्टयुष्मच्छब्दप्रयोगे तदप्रयोगे च मध्यमः पुरुषः प्रयुज्यते इत्याचार्यस्य सङ्केत सूचयतीति। अस्मच्छब्दे प्रयुज्यमानेऽप्रयुज्यमाने च उत्तमः पुरुषः प्रवर्तते। वृत्तिकारेणात्र परिहासविषये 'एहि मन्ये रथेन यास्यसि यातस्ते पिता' इत्यादौ स्वविषये एव मध्यमोत्तमपुरुषौ निर्दिष्टौ। अत्र कश्चिद् विषयः परिलक्ष्यते, स चेत्थमवगन्तव्य.—

त्वमत्र मन्ये यदहं पयः पास्यसि सन्ततम् ॥
एहि मन्ये मृगाक्षीणामहं प्रेयान् भविष्यसि।
स्यात् प्रेमविषयस्तासामक्ष्णा काणो भवादृशः ॥

इत्यादौ मध्यमपुरुषस्थाने उत्तमपुरुषस्य, उत्तमपुरुषस्थाने च मध्यमपुरुषस्य यो हि प्रयोगो दृश्यते तस्योपपत्तिः "नाम्नि प्रयुज्यमानेऽपि प्रथमः" ( ३।१।५ ) इत्यतोऽनुवर्तमानस्य अपिशब्दस्य सम्बन्धेन करणीया। अन्यथा 'नामयुष्मदस्मत्सु' इत्येवरूपेणैकेनैव सूत्रेण कार्यसिद्धौ सत्या पृथक् सूत्रत्रयकरण व्यर्थमेव स्यात्।

ततो 'दा-धा' धात्वोर्दासञ्ज्ञा कृता। तत्र किन्नाम धातुत्वमिति जिज्ञासाया धातुसञ्ज्ञामुपस्थापयन्नाह—"क्रियाभावो धातुः" ( ३।१।९ ) इति। अय भावः—क्रियाप्रतिपादकाना शब्दाना धातुसञ्ज्ञा भवतीति। अत्र क्रियात्व च पूर्वापरीभूतावयवत्वेन प्रतीयमानत्वं गृह्यते। व्याकरणे क्रिया साधनायत्तोदया कीर्त्यते, सा च द्विविधा—साध्यरूपा सिद्धरूपा च। उक्त च भर्तृहरिणा—

यावत् सिद्धमसिद्धं वा साध्यत्वेन प्रतीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥

( वा०प० ३।८।१ ) इति।

अत एव सिद्धमपि वस्तु अस्ति—नश्यतीत्यादिप्रयोगैः क्वचित् साध्यतया प्रतीयते। क्रियाकारकव्यवहारो बुद्ध्यवस्थानिबन्धनो विज्ञेय.। क्रियाया भेदकः कालो गीयते इति क्रियासु भेदज्ञानाय "काले" ( ३।१।१० ) इत्यधिकार उपस्थापितः। तेन कालभेदे पृथक् पृथक् त्यादयः प्रत्यया जायन्ते। अत्र कालो नित्यो व्यापी सम्प्रति—भूतभविष्यत्-क्रियायोगादाकाशकल्प एको द्रव्यस्थो भिद्यते इति वृत्तिकारेणोच्यते। तत्र चाह टीकाकारः—सर्वगतत्वादेकत्वान्नित्यत्वान्निष्क्रियत्वाच्च कालस्याऽऽकाशकल्पत्वात् कथ वर्तमानादिभिस्तद्व्यपदेशः कर्तुं शक्यते ? सत्यम्, तस्य ये वर्तमानादयो व्यपदेशास्ते क्रियाद्वारा एव, क्रियासु वर्तमानादिकाला उपचर्यन्ते, तस्माद् वर्तमानभूतभविष्यत्क्रियासम्बन्धात् तद्वति पदार्थे वर्तमानादय. कालशब्दा सिद्धाः। भर्तृहरिणाऽत्रोक्तम्—

**क्रियाभेदाद् यथैकस्मिन् तक्षाद्याख्या प्रवर्तते।**
**क्रियाभेदात् तथैकस्मिन् ऋत्वाद्याख्या प्रवर्तते ॥**

(वा०प० ३।६।३२) इत्यादि।

तस्मिन् वर्तमानादिकाले विधीयमानानां त्यादिप्रत्ययानां याः पूर्वाचार्यप्रयुक्तवर्तमानादि-विभक्तिसञ्ज्ञास्तासां विधानं विभागशो निर्दिशन्नाहाचार्यः—"**सम्प्रति वर्तमाना, स्मेनातीते**" ( **३।१।११, १२** ) इति। अर्थात्—सम्प्रतिकाले स्मशब्दयोगेनातीते काले च **वर्तमाना** विभक्तिर्भवति। यथा पचति, यजते, दहति स्म त्रिपुरं हर इति। अतीते काले परोक्षा-ह्यस्तनी-अद्यतनी-क्रियातिपत्तयो विभक्तयः, भविष्यत्काले भविष्यन्ती–आशीः–श्वस्तन्यो विभक्तयो भवन्ति। एतासां वर्तमानादिविभक्तीनां स्वसञ्ज्ञाभिः प्रयोगैश्च कालभेदो विज्ञायते। अत्र वर्तमानं परिभाषयन्नुक्तवान् कश्चिदभियुक्तः[1]—

**प्रारम्भादासमाप्तेस्तु यावन्नो नश्यति क्रिया।**
**तावद् वर्तत इत्यस्माद् वर्तमान उदाहृतः ॥** इति।

स च चतुर्विधः कथितः, यथा —

**प्रवृत्तोपरतश्चैव वृत्ताविरत एव च।**
**नित्यप्रवृत्तिः सामीप्यो वर्तमानश्चतुर्विधः ॥** इति।

अतीतकालो न केवलं परोक्षविषये ( स्वसत्तायां दर्शनाभावे स्वासत्तायां च दर्शनाभावे ) प्रवर्तते, किं च कृतस्य कार्यस्य विस्मरणेऽपि प्रवर्तते इति विज्ञापयतोच्यते—

**कृतस्यास्मरणे कर्तुरत्यन्तापह्नवेऽपि च।**
**दर्शनादेरभावे च त्रिषु विद्यात् परोक्षताम् ॥** इति।

अद्यतनादिकालविभागस्य निर्धारणे लोकप्रामाण्यं समादृतम्। अनुमतौ समर्थनाशिषोश्च वर्तमानाद् धातोः पञ्चमीविभक्तिः, विध्यादिषु च सप्तमीविभक्तिर्निर्दिष्टा। क्रियायाः समभिहारे वर्तमानाद् धातोः सर्वक्रियाकालेषु पञ्चम्या मध्यमैकवचनं भवति। यथा 'लुनीहि लुनीहि' इत्येवायं लुनाति, इमौ लुनीतः, इमे लुनन्तीत्यादि। मायोगे अद्यतनी, मास्मयोगेऽद्यतनी, ह्यस्तनी च विभक्तिर्भवतीति केचिदाहुः। केषां प्रत्ययानां वर्तमानादिसंज्ञा भवन्तीति जिज्ञासायां वर्तमानादिदशविभक्तीनां त्यादिस्यामहिपर्यन्तमशीत्युत्तरशतमिताः ( १८० ) प्रत्ययास्तत्तत्सञ्ज्ञकाः प्रोक्ताः। तदेताः सञ्ज्ञाः पूर्वाचार्यप्रसिद्धा अन्वर्था इह ज्ञाप्यन्ते इत्याह वृत्तिकारः। सप्तमीपञ्चम्योर्निरन्वयत्वादन्वर्थशब्दो बाहुल्येन प्रयुक्त इति पञ्जीकारः। अत्र 'वर्तमाना-सप्तमी-पञ्चमी-ह्यस्तनी' 'इति चतसृणां विभक्तीनां सार्वधातुकसञ्ज्ञां निर्दिश्य पादः प्रपूरितः।

द्वितीयपादे पूर्वं नामचतुष्टये लिङ्गात् परा ये हि स्यादयः प्रत्ययाः, आख्यातस्य प्रथमपादे धातुभ्यो जायमानास्त्यादयश्च ये प्रत्ययास्ते नियमतः क्व प्रयुज्यन्ते इति नियम-

---

१. द्र०—व्या० द० इति०, पृ० ३३६।

नायोच्यते—"प्रत्यय परः" ( ३।२।१ ) इति। अर्थात् प्रत्यया लिङ्गधातुरूपप्रकृतेः परं प्रयोक्तव्या इत्यर्थः। येनार्थं प्रतीयते स इह प्रत्यय परिभाष्यते। ततो गुपादिधातुभ्यः सन्प्रत्ययो विहितः। आत्मेच्छायामर्थे नाम्नो 'यिन्-काम्य' प्रत्ययौ, आचारार्थे उपमानान्नाम्नो यिन्प्रत्ययः, कर्तुरुपमानाच्च आयिप्रत्ययः, धात्वर्थे ( क्रियायाम् ) नाम्न इन्प्रत्ययस्तस्य च कारितसञ्ज्ञा कथिता। हेतुकर्तृव्यापारे चुरादिभ्यश्च स्वार्थे इन्प्रत्ययः क्रियते, तस्यापि कारितसञ्ज्ञाऽवगन्तव्या। चुरादौ तु गणान्तरपठिता अपि धातव उपादीयन्ते "हन्त्यर्थाश्च" ( कात० धा० पा०, चु० ग०, धा० सू० १४३ ) इत्यत्र चकारग्रहणादिति केचिदाभणन्ति, तेन 'दशवर्षसहस्राणि रामो राज्यमकारयत्। दशास्य घातयित्वा तु रामो यास्यति मन्दिरम्' इत्यादिप्रयोगा उपपद्यन्ते। अतिहस्तयतीत्यादावनेकाक्षरस्य लिङ्गस्यान्त्यस्वरादिरवयवो लुप्यते। अत्र च कविराजोऽभिमन्यते—

"इन् कारितं धात्वर्थे" (३।२।९) इत्यत्र डिनि प्रत्यये निर्दिष्टे डित्वादन्त्यस्वरादिलोपे अतिहस्तयतीत्यादीना सिद्धौ सत्या व्यर्थमेवेद सूत्रमुपन्यस्यते इति। ननु डिनि कृते विंशतिशब्दे तिशब्दस्य लोपः, अनेकाक्षरग्रहणाभावाच्च वाचयतीत्यादावप्यन्त्यस्वरादेर्लोपो भविष्यतीति चेद् न। 'डानुबन्ध' इत्यस्यानन्तर 'न विंशत्येकस्वराभ्याम्' इत्यपरसूत्रस्योपस्थापनात्। तेन सूत्रमिदमिह सुखार्थमुपन्यस्तमिति विज्ञेयम्।

तदनु प्रथयतीत्यादौ रभावः क्रियते। क्रियासमभिहारे वर्तमानाद् धातोर्व्यञ्जनादेर्यशब्दो विहितस्तस्य चेक्रीयितसञ्ज्ञा निगद्यते। एव गुपूप्रभृतिभ्यो धातुभ्य आयप्रत्ययमुक्त्वा सनाद्यन्तानामपि शब्दाना धातुसञ्ज्ञा प्रकीर्तिता। चकासादिधातुभ्य आम्प्रत्ययो भवति, तदन्तस्य च धातोः पर 'कृ-भू-अस' इत्यनुप्रयुज्यन्ते। अद्यतन्या विभक्तौ 'अनैषीद्' इत्यादौ सिच्प्रत्ययः, अलिक्षदित्यादौ सण्प्रत्यय, अशिश्रियदित्यादौ चण्प्रत्ययः, अवोचदित्यादावण्प्रत्ययो भवति। अण्विधायके "अण् असुवचिख्यातिलिपिसिचिह्वः" (३।२।२७) इति सूत्रे ख्यातेस्तिपा निर्देशश्चेक्रीयितलुङ्निवृत्त्यर्थं उच्यते। पदधातोरात्मनेपदे प्रथमैकवचने, भावकर्मार्थे च सर्वस्माद् धातोः इच्, यण् च प्रत्ययो भवति। "इजात्मने पदेः प्रथमैकवचने" (३।२।२९) इत्यत्राऽऽह वृत्तिकारः—"इच् ते पदेरिति सिद्धे गुरुकरणं योगविभागार्थम्, तेन-अदीपीत्यादावपि सिध्यति" इति। तत्र च कविराजः—"व्यतिक्रमनिर्देशादपि योगविभागः सिध्यति, गुरुकरणं सुखार्थम्" इति। कर्तरि विहिते सार्वधातुके परे धातुभ्योऽन्प्रत्ययो भवति, स च विकरणसञ्ज्ञको विज्ञेयः। एवं दिवादिभ्यो विहितो यन्प्रत्ययः, स्वादिभ्यो विहितो नुप्रत्ययः, रुधादिभ्यो विहितो नप्रत्ययः, तनादिभ्यो विहित उप्रत्ययः, क्र्यादिभ्यो विहितो नाप्रत्ययः, हौ परतो व्यञ्जनान्तेभ्यः क्र्यादिभ्यो विहित आनप्रत्ययश्च विकरणसञ्ज्ञा लभते। भावकर्मार्थयोर्धातोरात्मनेपदम्, कर्मकर्तुरप्यात्मनेपदविधानाय कर्मवत्त्वमतिदिश्य रुचादिभ्यो ङानुबन्धेभ्यश्च धातुभ्य आत्मनेपद विधीयते। अत्र रुचादिगणस्य षट्षष्टि ( ६६ ) सूत्राणि व्याख्यातानि। तत्र चार्थभेदेन तत्तद्धातुभ्य

आत्मनेपदविधानाय तेषां रुचादित्वं क्रियते। तदन्ते कश्चिद् विशेषश्चोच्यते—"अनियमे चागतिहिंसाशब्दार्थहसः" (३।२।४२-६६ ग० सू०) इति। अय भावः—गत्यर्था हिंसार्थाः शब्दार्था हस् च सत्यप्यनियमे रुचादयो भवन्तीति। अनियमोऽत्र व्यतीहारः—अन्यस्य योग्या लवनादिक्रियामन्यः कश्चिन्निवर्तयतीति नियमभङ्गस्य सन्दर्शनात्। प्रसङ्गादत्र कर्मव्यतिहारो विचार्यते—

महर्षिपाणिनिना "कर्तरि कर्मव्यतिहारे" (अ० १।३।१४) इति सूत्रेणाऽऽत्मनेपदं विधीयते। कर्म = क्रिया, लोके कर्मशब्दस्य क्रियापरत्वात्, तस्य व्यतिहारो विनिमयः। यत्रान्यस्य कर्तुरभीष्टां क्रियामन्यः कश्चित् करोति, इतरस्याभीष्टां चेतरः स कर्मव्यतिहारः।

अत्रोच्यते—कर्मशब्दस्य लोके क्रियापरत्वेऽपि शास्त्रे कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणमिति न्यायेन[१] कृत्रिममेव कर्तुरीप्सिततमं कर्म कथं नाङ्गीक्रियते ? इति। तत्रेदमवगन्तव्यम्—क्रियाऽपि कृत्रिमं कर्म भवितुमर्हति। दृश्यते हि एकाऽपि क्रिया प्रार्थनादिक्रियान्तरैरीप्सिततमा भवति। यथा—विद्याऽवाप्तिरूपफलविषये पूर्वं कस्यचित् सङ्कल्पः, तदनु गुरुशुश्रूषादितत्साधनानुकूलोपायाना विचारस्ततः केषाञ्चिदुपायाना निश्चयः, निश्चये सति तत्करणाय मानसी प्रवृत्तिः, परमध्ययनक्रियाया निर्वृत्तिः, तन्निर्वृत्तौ सत्यां विद्याऽवाप्तिरूपफलमधिगम्यते इति। एवमध्ययनादिक्रियाया प्रार्थनादिक्रियाभिरीप्सिततमत्वात् क्रियाऽपि कृत्रिमं कर्मेति वक्तुं शक्यते। प्रार्थना सङ्कल्पजन्यः फलोपायविषयोऽभिलाषः। अनेन प्रकारेणोभयोः कृत्रिमत्वमवबुध्यते। साध्यत्वात् क्रियायाः प्राधान्यम्, क्रिययाऽऽप्तुमिष्टतमत्वात् किं च तादर्थ्येन क्रियाप्रवर्तनादपि कर्मणः प्राधान्यमित्युभयोर्व्यतिहारे प्राप्ते क्रियाया धातुवाच्यत्वादन्तरङ्गत्वात् कर्मशब्देनात्र क्रियैव गृह्यते। तस्मात् क्रियाया एव व्यतीहारे आत्मनेपदं विधीयते न तु देवदत्तस्य धान्यं व्यतिलुनन्तीत्यादौ साधनकर्मव्यतिहारे।

कर्मव्यतिहारस्य द्योतकौ प्रायेण 'वि-अति' इत्युपसर्गौ। क्वचित् समपि, यथा—'सम्प्रहरन्ते राजानः' इति। अत्र परस्परकरणमेव व्यतिहारः। एकधातुवाच्यत्वेन प्रहारक्रियाणामत्रैकत्वं विज्ञेयम्, जातिकृतं वा। अन्यथा साधनभेदात् क्रियाभेदावश्यम्भावेन प्रहाराणां भिन्नभिन्नत्वादेकक्रियानिरूपितकारकशक्तिव्यत्यासो नोपपद्यते। अन्योऽन्ययोग्यलवनादिक्रियाकरणादनेककर्तृकत्वं व्यतिहारस्य सम्पद्यते, तेन तत्र बहुवचनं प्रयुज्यते 'अन्यो व्यतिस्ते तु ममापि धर्मः' (२।३५) इति भट्टिप्रयोगादेकवचनमपि क्वचिद् दृश्यते।

'सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम्' (रघु० १।२६) इत्यत्र विनिमयशब्देनैव क्रियाविनिमयस्योक्तत्वान्नात्मनेपदम्। अन्येन केनचित् करणीया या क्रिया कश्चित् पुरुषः क्रियाफलमहं प्राप्नोमीति धियैव करोति तेन कर्तृगामिनि क्रियाफले युज्यते आत्मनेपदमेव

१. व्या० परि० वृ०, परि० ६।
अमुमेव न्यायं नागेशभट्टः शब्दान्तरैर्वक्ति—
लोकप्रसिद्ध्यपेक्षया शास्त्रप्रसिद्धिरेव बलवती, प्रकरणादिति भावः।
(म० भा० प्र० उ० १।३।१४) इति।

विधातुम् । मन्ये—महर्षिपाणिनिना कर्मव्यतिहारे आत्मनेपदं विधाय सर्वेभ्यो धातुभ्यः कर्तृगामिनि क्रियाफले आत्मनेपदप्रयोगस्य समीचीनता द्योतितेति । अयमेव भावः कातन्त्रेऽपि समाद्रियते इत्यवगन्तव्यम् ।

अग्रेऽस्मिन्नेव प्रकरणे चेक्रीयितान्ताद् धातो आयिप्रत्ययान्ताच्च कर्त्रर्थे मुख्यमात्मनेपदमुक्तम् । इनन्त-ञनुबन्ध-यजादिभ्यो धातुभ्य उभयपदं विधीयते—आत्मनेपदं परस्मैपदं च । अनुदात्तानुबन्धत्वाद् रुचधातुरत्र[1] व्याकरणेऽनुदात्तानुबन्धोपलक्षणार्थम्, समाहारानुबन्धत्वाच्च यजधातुः[2] समाहारानुबन्धोपलक्षणार्थमुपादीयते ।

अत्र विषये महर्षिपाणिनिना उक्तम्—कर्त्रभिप्राये क्रियाफले[3] आत्मनेपदम्, अन्याभिप्राये च क्रियाफले परस्मैपदं भवतीति । परं 'वृक्षं परिवारयन्ते कण्टकाः' इत्यादावफलवति कर्तरि आत्मनेपदम् 'स्वं कटं कारयति' इत्यादौ फलवति च कर्तरि परस्मैपदं दृश्यते इति तन्नियमे व्यभिचारसत्त्वात् तदभिप्रायकं सूत्रं न प्रणीतं शर्ववर्माचार्येणेति विवदन्ते व्याख्याकाराः । कुलचन्द्रेणोक्तम्—पाणिनिरत्र विषये विशेषं नियममाद्रियते । शर्ववर्माचार्यस्तु सामान्यस्यौचित्यं द्योतयन्न तथा करोतीति ।
तद् यथा—

विशेषः पाणिनेरिष्टः सामान्यं शर्ववर्मणः ।
सामान्यमनुगृह्णन्ति तत्राचार्यपरम्परा ॥ इति ।

कातन्त्रसम्प्रदायस्य ये महान्तो विद्वांसस्ते एतन्नाद्रियन्ते । तत्र हेतुमुपस्थापयन्तस्ते प्राहुः—

वर्णयामास यत्नेन यतो वररुचिः स्वयम् ।
पाणिनेरनुसारेण तात्पर्यं शर्ववर्मणः ॥ इति ।

कविराजो विषयेऽस्मिन् स्वीयं मतमुदीरयंस्तथ्यं प्रकाशयति, यथा—

कर्त्रभिप्राय इत्येतत् सूत्रं न विहितं यतः ।
तस्मात् सामान्यमेवास्य सम्मतं शर्ववर्मणः ॥ इति ।

इतरेऽपि केचन परस्मैपदात्मनेपदयोरर्थं विवृण्वन्तः कविराजस्यैव मतं परिपोषयन्ति । तदित्थम्—

परस्मै पद्यते यस्मात् तत् परस्मैपदं स्मृतम् ।
आत्मने पद्यते यस्मात् तदेवात्रात्मनेपदम् ॥

---

१. कर्तरि रुचादिङानुबन्धेभ्यः ( ३।२।४२ ) ।
२. इन्ञ्यजादेरुभयम् ( ३।२।४५ ) ।
३. स्वरितञितः कर्त्रभिप्राये क्रियाफले ( अ० १।३।७२ ) ।

इत्थमन्वर्थसञ्ज्ञाया विधानेनैव लक्ष्यते ।
मतं हि पाणिनेरेव सम्मतं शर्ववर्मणः ।।
नैवमन्वर्थसञ्ज्ञायाः प्रायोवृत्तिर्न दृश्यते ।
अतो न पाणिनेः सूत्रं सम्मतं शर्ववर्मणः ।।

( द्र०—कवि० ३।२।४५ ) इति ।

सञ्ज्ञयोरनयोः ( परस्मैपदात्मनेपदयोः ) अन्वर्थता विवेचयष्टीकाकारो 'ब्रवीति, अभिदधाति' इत्यादावात्मार्थमुद्दिश्य कृते प्रयोगे परस्मैपदं कथं घटते इत्यत्र किञ्चिद् युक्तमाचष्टे—

**"उच्चारणव्यवच्छेदेनाभिधानं यदा विवक्षितं न परावबोधस्तदा परस्मैपदम्, ब्रवीति=वचनमुच्चारयतीति"** ( कात० वृ० टी० ३।२।४५ ) इति ।

यजादेरुभयपदविधानं सामान्यत एकसवादनिबन्धनं गणकारवचनस्य प्रामाण्यं यथा स्यात्तदर्थं वेदितव्यमिति वृत्तिकारमतम् । सनन्तेभ्यस्तु धातुभ्यस्तदेव पदं प्रयुज्यते यत् सनःपूर्वं तत्तद्धातुना भवति । एवमुक्तेभ्यो येभ्यो धातुभ्य आत्मनेपदविधानमुक्तं ततोऽवशिष्टेभ्यो धातुभ्यः परस्मैपदं प्रयुज्यते । कुलचन्द्रमते परस्मैपदं शुद्धकर्तरि सम्पद्यते इति तदर्थं सूत्रं क्रियते—**"शेषात् कर्तरि परस्मैपदम्"** ( ३।२।४७ ) इति । असिश्छिनत्तीत्यादौ करणत्वस्य त्यागेन शुद्धकर्तृताया उपपत्तेः सत्त्वात् प्रयोगसिद्धिः । अत एव कर्मकर्तुरनेन सूत्रेण प्राप्ते परस्मैपदे आत्मनेपदविधानाय कर्मवत्त्वमुपचर्यते इति । **"कर्तरि रुचादिङानुबन्धेभ्यः"** ( ३।२।४२ ) इति सूत्रात् कर्तृपदस्यानुवृत्त्यैव कर्त्रर्थे लब्धे पुनः **"शेषात् कर्तरि परस्मैपदम्'** ( ३।२।४७ ) इति सूत्रे कर्तृपदोपादानेन शुद्धकर्तृरूपोऽर्थो निष्पद्यते इति कुलचन्द्रमतं समीचीनमेव ।

एवं प्रथमपादे आख्यातोपयोगिनीः सञ्ज्ञाः परिभाष्य द्वितीये पादे विकरणनिर्देशपुरस्सरं परस्मैपदात्मनेपदोभयपदानामर्थभेदेन प्रयोगस्थलमुक्तम् । तृतीये पादे पूर्वं धातूनां द्विर्वचनकार्यमुपस्थापयितुमाचार्यस्तदीयाधिकारसूत्रं प्रस्तौति—**"द्विर्वचनमनभ्यासस्यैकस्वरस्याऽऽद्यस्य"** ( ३।३।१ ) इति । धातोरवयवस्यानभ्यासस्यैकस्वरस्याऽऽद्यस्य द्विर्वचनं भवतीत्यधिकृतं वेदितव्यम् इत्यर्थः । तत्र स्वरादिर्यो धातुस्तस्य द्वितीयावयवस्यैकस्वरस्यानभ्यासस्य द्विर्वचनार्थं **"स्वरादेर्द्वितीयस्य"** ( ३।३।२ ) इत्यधिकारसूत्रान्तरमुक्तम् । उन्दिदिषति, उब्जिजिषति, अड्डिडिषति, अर्चिचिषतीत्यादौ स्वरादिधातोर्द्वितीयावयवानां 'न्-ब्-द्-र्' इति चतुर्णां वर्णानां द्विर्वचनं निषिध्यते । अत्र **"न नबदराः संयोगादयोऽये"** ( ३।३।३ ) इति सूत्रे **'बकारस्याप्यप्रतिषेधो वक्तव्यः, यकारपरस्य रेफस्य प्रतिषेधो न भवतीति वक्तव्यम्'** इति कात्यायनवार्त्तिकवचनयोरपि समावेशो दृश्यते ।

द्विरुक्तधातोः पूर्वभागस्य अभ्याससञ्ज्ञा, धातोरभ्यासतदितरयोश्च अभ्यस्तसञ्ज्ञा प्रोक्ता—**"पूर्वोऽभ्यासः, द्वयमभ्यस्तम्"** ( ३।३।४, ५ ) इति । अभ्यस्तसञ्ज्ञाकार्यविधानाय लोके प्रसिद्धानां 'जक्ष-जागृ-दरिद्रा-चकास-शास' इत्येतेषां पञ्चानां धातूनामभ्यस्तसंज्ञा

विधीयते। केचिद् 'आदीध्यते, आवेव्यते' इत्यत्रान्तस्य नकारलोप विधातु दीधीङ्वेवीङो-रपि अभ्यस्तसञ्ज्ञा वाञ्छन्ति। तत्राहुष्टीकाकारादयः— अत्र नकारलोपस्तु "आत्मने चानकारात्" ( ३।५।३९ ) इत्यनेनैव भविष्यतीति व्यर्थमेव तदर्थमभ्यस्तसञ्ज्ञाया विधानम्। आदीधयु, आवेवयुरिति परस्मैपदप्रयोगौ तु छान्दसौ विज्ञेयाविति। एतत्कथनेनेदं प्रतीयते-दीधीङ्वेवीङ्धात्वोरात्मनेपदप्रयोगस्तु भाषायामप्यस्ति, परस्मैपदप्रयोगस्तु वेदे एवेति।

अपीपचदित्यादौ चणाद्यन्तेषु परेषु, 'हु' इत्यादिधातूना सार्वधातुके परे द्विर्वचन विधीयते। द्वित्वे सति यस्य पूर्वस्य रूपस्य अभ्याससञ्ज्ञा कृता, तत्राऽऽदिव्यञ्जनस्य रक्षार्थं सूत्रमुच्यते—"अभ्यासस्याऽऽदिर्व्यञ्जनमवशेष्यम्" ( ३।३।६ ) इति। तत्रापि 'चस्कन्द' इत्यादौ शिट परोऽघोषवर्णो रक्ष्यते। पफाल, बभारेत्यादावभ्यासस्य द्वितीय-चतुर्थवर्णयो· प्रथमतृतीयवर्णौ, अभ्यासस्थहकारस्य जकारः, कवर्गस्य च चवर्गः क्रियते। 'कोकूयते' इत्यादौ चेक्रीयिते परे चवर्गस्य निषेधो विज्ञेय। तस्थावित्यादौ स्वरान्तस्याभ्यासस्य ह्रस्व, अभ्यास—ऋवर्णस्याकार, ईयतुरित्यादावभ्यासस्थस्य इण्धातोरिकारस्य दीर्घ·, परोक्षायामभ्यासस्थाकारस्य दीर्घ, 'आनर्च, आनृधे, व्यानशे' इत्यादौ तस्माद् दीर्घीभूताद-भ्यासान्नकारागम, बभूवेत्यादौ भूधातोरभ्यासस्थस्वरस्याकारादेशः, नेनेक्तीत्यादौ सार्वधातुके परे इकारस्य गुण, बिभर्तीत्यादौ सार्वधातुके परेऽभ्यासस्येदादेशो विज्ञेयः। इयर्तीत्यादावि-दादेशविधानार्थं सूत्रान्तरकरण वैचित्र्यार्थं मन्यते। पिपक्षतीत्यादौ सनि परतोऽभ्यासस्था-वर्णस्येदादेश·, जिजावयिषतीत्यादावपि इदादेश·, 'चेचीयते' इत्यादौ चेक्रीयिते परेऽभ्यासस्य नामिनो वर्णस्य गुण, 'पापच्यते' इत्यादावकारस्य दीर्घ, 'वनीवच्यते' इत्यादौ 'नी' इत्यागमः, 'बम्भण्यते, जञ्जप्यते' इत्यादावनुस्वार, अपीपचदित्यादावभ्यासस्य दीर्घ, अतत्वरदित्यादावदादेशो विहितः। एवमभ्यासस्य दीर्घादिकार्यनिर्देशानन्तर समस्ता-भ्यासस्य लोपकरणार्थमधिकारमुपन्यस्य मित्सतीत्यादौ 'मि' इत्यादिधातूनामिदादेशेन सह सनि परतः, ईप्सतीत्यादावीकारादेशेन सह, धिप्सतीत्यादाविकारादेश-ईकारादेशाभ्या सह, 'दिग्ये' इत्यादौ परोक्षाया देङो दिग्यादेशेन च सहाभ्यासलोपो निर्दिष्ट·।

एव तृतीयपादे धातूना द्वित्वाभ्यासादिकार्यं प्रदर्श्य चतुर्थपादस्यादौ यकारादिवर्णाना सम्प्रसारणविधिमुपस्थापयितु तदधिकारपुरस्सर 'गृह्यते, गृह्णाति' इत्यादावगुणे परतः जग्राहेत्यादौ परोक्षाया च यकारादीना सम्प्रसारणम्, ववावित्यादौ तन्निषेधश्च क्रियते। 'सोषुप्यते' इत्यादौ चेक्रीयिते परे, असूषुपदित्यादाविनन्त–स्वपधातोश्चणि परे, जिघृक्ष-तीत्यादौ सनि परे सम्प्रसारण प्रदर्श्य चाय्धातोः किरादेशः, प्याय्धातोश्च पिरादेशः कृतः। परोक्षाया चेक्रीयिते च परे श्विधातोः 'शोशूयते' इत्यादौ विकल्पेन, जुहावयिषती-त्यादौ सश्चणोर्यत् कारित तस्मिन् परे ह्वेञ्धातोर्नित्य सम्प्रसारण भवति। 'विध्यते' इत्यादावेकदा यकारस्य सम्प्रसारणे कृते पुनर्वर्णान्तरस्य प्राप्त सम्प्रसारण न भवति— "न सम्प्रसारणे" ( ३।४।१७ ) इत्यनेन निषेधस्य विहितत्वात्। 'वावश्यते' इत्यादौ चेक्रीयिते, पप्रच्छतुरित्यादौ च परोक्षाया सम्प्रसारणनिषेधो विज्ञेयः। एवं सम्प्रसारण-

विधिमुपसंहृत्य सन्ध्यक्षरान्ताना धातूना विकरणाभावे धातेत्यादावाकार, सविव्यायेत्यादौ च तदभाव., प्रमातेत्यादौ गुणवृद्धिप्रसङ्गे आकारादेशः, 'उपदिदासते' इत्यादौ दीङः सनि परे आकारादेश । 'विस्मापयते' इत्यादौ स्मीत्यादिधातूनामिनि परत आकारादेशः कृत । स्रष्टेत्यादावकारागम., 'उपदिदीये' इत्यादौ यकारागमः, पपुरित्यादौ धातोराकारस्य लोप., 'दीयते'इत्यादावीकारादेश , देयादित्यादावेकारादेशः, अकार्षुरित्यादावन उसादेशः, अपादीत्यादौ तलोपः, पचेत्यादौ हेर्लोपः, 'सुन्व.' इत्यादौ विकल्पेनोकारस्य लोप., 'कुर्वः' इत्यादौ च नित्य तस्य लोप., 'कुरुतः' इत्यादावकारस्य उकारः, 'रुन्धः' इत्यादौ नकाराकारस्य लोपः, 'स्त ' इत्यादावकारलोपः, 'मिमते' इत्यादावभ्यस्ताऽऽकारस्य लोपः । 'मिमीते' इत्यादावाकारस्य ईकारादेशः, 'दरिद्रितः' इत्यादावाकारस्य इकारादेशः, जह्यादित्यादावाकारस्य लोपः, 'हतः' इत्यादौ धातोर्नकारस्य लोपः, 'शिष्यते' इत्यादाविदादेशः, 'जहि' इत्यत्र हन्तेर्जादेशः, 'देहि' इत्यादावाकारस्य एकारोऽभ्यासलोपश्च भवति । "दास्त्योरेऽभ्यासलोपश्च" ( ३।४।५० ) इत्यत्राभ्यासग्रहणं समस्तलोपार्थं कृतम् । अन्यथा वर्णान्तस्य विधिर्भवतीत्यनेन नियमेन 'दास्त्योरेऽभ्यासलोपश्च' इत्येतद्रूपस्यैव सूत्रस्य करणेन लाघव स्यात् । तेनाभ्यासशब्दस्याभ्यासान्तलोपरूपोऽर्थो न गृह्यते । एव पेचतुरित्यादावकारस्य एकारोऽभ्यासलोपश्च, विशसतुरित्यादौ तन्निषेधश्च प्रवर्तते । शिश्रियतुरित्यादाविवर्णोवर्णयोरियुवादेशौ, प्राप्नुवन्तीत्यादौ विकरणोकारस्योवादेशः, विव्यतुरित्यादाविकारस्य यकारः, सुन्वन्तीत्यादौ विकरणोकारस्य वकार., जुह्वतीत्यादौ धातूकारस्य वकारः, बभूवेत्यादौ भूधातोरुकारस्याकारः, गूहयतीत्यादौ कृतगुणस्य गुहूधातोरुपधाया ऊत्वम्, दूषयतीत्यादौ दुषधातोरुपधाया ऊत्वम्, घटयतीत्यादौ मानुबन्धाना घटादीनामुपधाया ह्रस्वः, अघटीत्यादाविचि कारिते परे विकल्पेन ह्रस्वः, जनिवध्योश्चेचि परे नित्य ह्रस्वो भवति ।

तत ओकार–औकाराभ्या परौ यिन्नायी प्रत्ययौ स्वरवदुक्तौ, तेन 'गव्यति, नाव्यति' इत्यादौ स्वरसन्धिर्जायते । अत्र "ओतो यिन्नायी स्वरवत्, औतश्च" ( ३।४।६८, ६९ ) इति सूत्रद्वयकरण यथासङ्ख्यभयाद् विज्ञेयमिति वृत्तिकारः । 'चीयते' इत्यादौ नाम्यन्ताना धातूना दीर्घः, ईयादीत्यादाविण्धातोर्यपरे दीर्घः, मात्रीकरोतीत्यादौ ऋकारात् पर ईकारागमः, आद्रियते इत्यादाविकारागम., 'क्रियते' इत्यादावपि चेकारागमः, 'अर्यते' इत्यादौ ऋकारस्य गुणः, 'जेघ्रीयते, देध्मीयते' इत्यादौ चेक्रीयिते परे 'घ्रा–ध्मा' धात्वोरीकारादेशः, वस्त्रीयतीत्यादाववर्णस्य ईकारः, जिघत्सतीत्यादावदेर्घस्लादेशः, उवायेत्यादौ वेञ्धातोर्विकल्पेन वयीत्यादेश., वध्यादित्यादौ हन्तेर्वधादेशः, अगादित्यादाविण्धातोः, 'अधिजगे' इत्यादाविङ्धातोश्च गादेशः, 'जिगमिषति, अधिजिगासते' इत्यादाविण्–इङित्येतयोर्धात्वोर्यथासङ्ख्य सनि परे गमादेशः, भवितेत्यादावस्तेः 'भू' इत्यादेशः, वक्तेत्यादौ ब्रूधातोर्वचादेशः, आख्यातेत्यादौ चक्षिङ्धातोः ख्याञादेशः, विव्यतुरित्यादा-

वजधातोर्व्यादेशः, अत्तीत्यादावदादिधातुभ्यो विकरणस्य लुक्, अगादित्यादाविणादिभ्यः
५८९४ सिचश्च लुग् विधीयते परस्मैपदे ।

चतुर्थपादे सम्प्रसारणं धातूना धात्वेकदेशाना केषाञ्चित् प्रत्ययाना चाऽऽदेशादिकं विधाय पञ्चमे पादे पूर्वं नेता, सुनोतीत्यादौ नाम्यन्तधातु-विकरणादीनाम्, अबिभयुरित्यादावभ्यस्तानामुसि परे नामिनो गुण, अशिश्रियदित्यादौ तन्निषेधश्च एकोनत्रिंशत्सूत्रैर्विभागशो विस्तरेण वर्णितः। तदनु मुञ्चतीत्यादो नकारागम राधितेत्यादौ तन्निषेधं चोक्त्वा जुहुधीत्यादौ हेर्धिविधानमुपन्यस्तम्। ददतीत्यादावन्तेर्नकारस्य लोपः, 'शेरते' इत्यादावन्तेरादे 'रि' इत्यागमः, पपावित्यादावट 'औ' इत्यादेशः, चिकीर्षतीत्यादौ ऋदन्तधातोरिरादेशः, मुमूर्षतीत्यादौ ऋदन्तधातोरुरादेशः, अचीकरदित्यादौ ह्रस्व., अशशासदित्यादौ ह्रस्वनिषेधः, अपीप्यदित्यादावुपधाया लोपः, अतिष्ठिपदित्यादाविदादेशश्च वर्णितः।

एवं पञ्चमे पादे गुणविधानं तन्निषेधो गुणनिषेधप्रवृत्तये नकारागमादिविधानं चोपन्यस्तम्। षष्ठे पादे पूर्वं स्रस्यते, नष्ट., दशतीत्यादावनुषङ्गस्य लोपमगुणे प्रत्ययेऽनि विकरणे च परत समुपस्थाप्य पाचयतीत्यादौ धातोरुपधाभूतस्याकारस्य दीर्घः, निनायेत्यादौ नामिना च वृद्धिः, अपाक्षीदित्यादौ परस्मैपदे दीर्घः, सिचः परस्मैपदस्य च प्रसङ्गवशाद् अश्वयीदित्यादौ वृद्धिबाधको गुणो नवभि सूत्रैः सम्प्रदर्शितः। तदनु 'शय्यते' इत्यादौ शीङ ईकारास्यायादेशः, अस्थायीत्यादावादन्ताना धातूनामाय्यादेशः, 'अर्पयति, स्थापयति' इत्यादौ पकारान्तादेशः, यलोपः, नामिना गुणश्च, पालयतीत्यादौ पातेरिनि परे लकारान्तादेशः, धूनयतीत्यादौ नकारान्तादेशः, स्फावयतीत्यादौ स्फायधातोर्वादेशः, शातयतीत्यादौ तादेशः, घातयतीत्यादौ हकारस्य घकारादेशः, जिगीषतीत्यादौ जकारस्य गकारादेशः, चिकीर्षतीत्यादौ चकारस्य ककारादेशः, अधुक्षातामित्यादौ सणोऽकारस्य लोपः, दरिद्रयतीत्यादावन्तस्य लोपः, स्यतीत्यादावोकारस्य लोपः, 'व्यतिरे' इत्यादावाकारस्य लोपः, चिकीर्षतीत्यादावनि विकरणे परे पूर्वस्थाकारस्याकारोऽन्विकरणस्थाकारस्य लोपश्च, 'पचे' इत्यादावन्विकरणस्थाकारस्थाने एकारः, परस्थित-एकारस्य लोपश्च, आदीधितेत्यादावन्तस्य लोपः, 'अग्नीयते' इत्यादावायेरादेर्लोपः, जग्मतुरित्यादावुपधाया लोपः, अचीकरदित्यादौ कारितस्य लोपः, गार्गीयतीत्यादौ यकारलोपः, विद्वस्यतीत्यादौ नलोपः, 'अधोक्, अलेट्' इत्यादौ दिस्योर्लोपः, बेभिदितेत्यादौ यकारस्य लोपः, वक्तेत्यादौ चवर्गस्य कादेशः, लेढेत्यादौ धातुहकारस्य ढकारः, अधोगित्यादौ घादेशः, नद्धेत्यादौ धकारादेशः, भ्रष्टेत्यादौ षकारादेशः, 'प्रष्टा, क्रोष्टा' इत्यादौ छशोः षादेशः, 'ब्राह्मणायते' इत्यादौ पुवद्भावः, पचेतामित्यादावाकारस्य इकारादेशः, 'पचेयम्, पचेयुः' इत्यादौ यामुसोरियमियुसावादेशौ, शाम्यतीत्यादौ दीर्घः, गच्छतीत्यादौ छादेशः, पिबतीत्यादौ पादेः पिबाद्यादेशाः, पुनातीत्यादौ ह्रस्वः, रौतीत्यादौ सार्वधातुके वृद्धिश्च विहिता। वृद्धिविधायके "उतो वृद्धिर्व्यञ्जनादौ गुणिनि सार्वधातुके" (३।६।८४) इत्यत्रैव

ऊर्णोतेर्गुणविधानेन प्रोर्णोतीत्यादौ गुणे सिद्धे "ऊर्णोतेर्गुणः" ( ३।६।८५ ) इति सूत्रान्तरकरण विकल्पविधिं द्योतयति, पुनर्गुणग्रहण च सञ्ज्ञापूर्वकविधेरनित्यतामाचष्टे। सञ्ज्ञापूर्वकविधेरनित्यत्वादेव प्रोर्णोनौतीत्यादौ गुणस्यानित्यत्वे सिद्धे ऊर्णोतीति तिपा निर्देशश्चेक्रीयितलुगन्तस्य भाषायामनभिधानता विज्ञापयतीति टीकाकारः। ततस्तृणेढीत्यादाविडागमः, ब्रवीतीत्यादावीडागमः, 'आदत्, आद' इत्यादौ दिस्योरडादेशः, 'जिघत्स्यति, जिघत्सति' इत्यादौ सकारस्य तकारः, अवोचदित्यादावुपधाया ओदादेशः, अपास्थदित्यादावस्यतेरन्तस्य थादेशः, अपप्तदित्यादौ पतेः पप्तादेशः, कल्प्तेत्यादौ रेफस्य लकारः, दुधुक्षतीत्यादावादिचतुर्थत्व च विधीयते।

षष्ठे पादेऽनुषङ्गलोपः, वृद्धिगुणदीर्घविधानम्, अन्यानि च धातूनामुपधालोपादीनि कार्याणि विस्तरेणोक्तानि। सप्तमे पादे पूर्वं भवितेत्यादावेकादशभिः सूत्रैरिडागम सकीर्त्य ग्रहीतेत्यादौ तस्य दीर्घविधिरादिष्टः। इटो दीर्घविधायकस्य "इटो दीर्घो ग्रहेरपरोक्षायाम्" ( ३।७।१२ ) इत्यस्य योगविभागादृकारान्तादीनामपि धातूनामिटो दीर्घविधिः सिध्यति। उक्तं च वृत्तिकारेण—

ऋद्वृङ्वृञोऽपि वा दीर्घो न परोक्षाशिषोरिटः।
न परस्मै सिचि प्रोक्त इति योगविभञ्जनात्॥ इति।

ततोऽनिड्धातूना पञ्चदशभिः सूत्रैर्विस्तृतं वर्णनमुपलभ्यते। मध्ये च दिदेविषति, दुद्यूषतीत्यादाविवन्तादिधातूना विकल्पेनेड्विधानमुपन्यस्तम्। अन्ते च चकृवेत्यादावसुट्कृञोऽनिट्त्व प्रदर्श्य भूषणार्थे सम्पर्युपेभ्यः परस्य कृञः 'सस्कर्ता, परिष्कर्ता, उपस्कर्ता' इत्यादौ सुडागमं विदधाति—"सुड् भूषणे सम्पर्युपात्" ( ३।७।३८ ) इति। वृत्तिकारेण समवायाद्यर्थेष्वपि सुड्विधानमादिष्टम्।

एवं सप्तमे पादे इडनिट्प्रकरणमुपस्थाप्याष्टमपादे पूर्वं "पदान्ते धुटां प्रथमः" ( ३।८।१ ) इत्यनेन 'त्वन्नाथः, ककुब्भासः' इत्यादौ धुटा वर्णाना प्रथमवर्णापन्नता निर्दिष्टा। सूत्रे पदग्रहणेनापकृतमपि लिङ्गं परिगृह्यते, तेन वदतीत्यादौ धातोरन्ते उक्त कार्यं नोपपद्यते। 'अबिभः, पचावः' इत्यादौ पदान्ते वर्तमानयो रेफसकारयोर्विसर्जनीयः, अदुग्धेत्यादौ तथोर्धकारः, पेक्ष्यतीत्यादौ षढो कादेशः, वपुष्ट्वमित्यादौ तवर्गस्य टवर्गः, 'लीढः' इत्यादौ ढलोपः उपधाया दीर्घश्च, सोढेत्यादौ ढलोपः, अवर्णस्य ओदादेशश्च, दोग्धेत्यादौ धुटा वर्णाना तृतीयवर्णापन्नता, धोक्षीत्यादौ धुटा प्रथमवर्णापन्नता विधीयते। 'भृजी भर्जने' इति भौवादिकस्याऽऽत्मनेपदिनो धातोः 'बभृज्जे' इत्यादौ जकारस्य द्विर्वचन पूर्वाचार्यव्याकरणानुसारेण कृतम्, आधुनिकव्याकरणेषु तन्मतस्यादर्शनादित्याहुर्व्याख्याकाराः। सूत्रं च—"भृजः स्वरात् स्वरे द्विः" ( ३।८।१० ) इति। ततः पचामीत्यादावकारादेर्दीर्घः, अचकादित्यादौ ह्यस्तन्या दौ परतः सस्य तादेशः, अकरोदित्यादौ धातोरादेरडागमः, ऐधतेत्यादौ वृद्धिः, आटदित्यादावकारस्य आकारादेशश्च पृथगुक्तः। अत्राहु-

व्याख्याकारा —आपदित्यादावाकारस्य आर्‌रूपा वृद्धिर्मा भूद् अवर्णस्य सर्वमुखस्थानत्वादेकदेशेनाऽऽन्तरतम्यस्य सत्त्वादित्येतदर्थम् "**अवर्णस्याकारः**" ( ३।८।१८ ) इति सूत्रान्तर तत्र वर्णग्रहण च क्रियते इति ।

मा भवान् करोत्, मा स्म करोदित्यादावडागमाभाव, कृष्णीढ्वमित्यादौ धकारस्य ढकार, मार्ष्टीत्यादौ 'मर्ज' इत्येतस्य 'मार्ज' इत्यादेश, 'सहते' इत्यादौ धात्वादे षकारस्य सकार, नयतीत्यादौ धात्वादेर्णकारस्य नकार, चिचीषतीत्यादौ सकारस्य षकार समुद्घोषित । 'अङ्गाः, वङ्गा' इत्यादावण्प्रत्ययस्य लुकि सति प्रकृते वृद्ध्यादिकार्यं न भवति । उच्यते च—"**लुग्लोपे न प्रत्ययकृतम्**" ( ३।८।२९ ) इति । पपतुरित्यादौ द्विर्वचने कृते एव आकारलोपादिस्वरविधिप्रवर्तनाय परिभाष्यते—"**स्वरविधिः स्वरे द्विर्वचननिमित्ते कृते द्विर्वचने**" ( ३।८।३० ) इति । अनुबन्धेषु कार्याभावज्ञापनार्थमुच्यते—"**योऽनुबन्धोऽप्रयोगी**" ( ३।८।३१ ) इति । अर्थादनुबन्धो यदर्थमुपादीयते तत्कार्य तत्प्रकृतावुपपद्यते न त्वनुबन्धे इति । अनुपूर्वकस्य बन्धधातोर्विलोपनार्थकत्वादन्वर्थबलेनैव सिद्धौ सत्या मन्दमतिबोधाय सूत्र प्रणीतमिति विज्ञेयम् । अत्र केचिद् वदन्ति—"**अनुबन्धोऽप्रयोगी**" ( ३।८।३१ ) इत्येव रूप सूत्रमस्ति, तेन सञ्ज्ञासूत्रमिदमुपपद्यते । यो हि अप्रयोगी तस्यानुबन्धसञ्ज्ञा भवतीति ।

एव सर्वशास्त्रव्यापिनीः काश्चित् परिभाषाः पुरस्कृत्य सर्वशास्त्रोपयोगिनीः काश्चित् सञ्ज्ञा उपस्तौति । तत्र च 'श-ष-स-ह' इति वर्णचतुष्टयस्य **शिट्**सञ्ज्ञा, अन्तस्थानिमित्ता ये 'इ-उ-ऋ' इति त्रयो वर्णास्तेषा **सम्प्रसारण**सञ्ज्ञा, 'अर्-ए-ओ' इत्येतेषा **गुण**सञ्ज्ञा कृता । सर्वान्ते च 'आर्-ऐ-औ' इत्येतेषा वृद्धिसञ्ज्ञामुपन्यस्याऽऽख्यातप्रकरणमुपसहृतम् ।

महर्षेः शर्ववर्माचार्यस्य कृतावन्तिमे सूत्रेऽस्मिन् "**आरुत्तरे च वृद्धिः**" (३।८।३५) इत्यत्र वृद्धिपदं मङ्गलार्थमाम्नायते । ग्रन्थादौ "**सिद्धो वर्णसमाम्नायः**" ( १।१।१ ) इत्यत्र सिद्धशब्देन, ग्रन्थमध्ये "**अथ परस्मैपदानि**" ( ३।१।१ ) इत्यत्राथशब्देन, ग्रन्थान्ते च "**आरुत्तरे च वृद्धिः**" ( ३।८।३५ ) इत्यत्र वृद्धिशब्देन मङ्गलमाचरताऽऽचार्येण ग्रन्थविस्तरः कृतः । तदुक्त च—"**मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च मङ्गलयुक्ता यथा स्युरिति**" ( म० भा० १।३।१ ) इति ।

धातुभ्यो जायमानानामाख्यातप्रत्ययाना ( विशेष्यभूतानाम् ) विवरणमुपस्थाप्य तेभ्यो जायमानाना विशेषणभूताना कृत्प्रत्ययाना विवरण साम्प्रतमुपस्थाप्यते । कृत्प्रकरणमेतद् वररुचिशरीरमास्थाय महर्षिकात्यायनेन प्रणीतमिति वदन्ति व्याख्यातारः । वृत्तिकारेण श्रीदुर्गसिंहेनादावेवोच्यते—

**वृक्षादिवदमी रूढाः कृतिना न कृताः कृतः ।**
**कात्यायनेन ते सृष्टा विबुद्धिप्रतिबुद्धये ॥** इति ।

तस्मादाचार्येण श्रीदुर्गसिंहेन विषयसाम्याद् वररुचिशर्ववर्मणोरभेदमाकलय्य वररुचिप्रणीत कृत्प्रकरण कातन्त्रेण सयोजितमिति प्रतिभाति। तत्र कृत्प्रकरणस्य षट्पादेषु कीदृशः क्रम. प्रदर्शितस्तेनेति निदर्शयितुं तदीयविषयप्रवेश. क्रमेण प्रस्तूयते।

## कृदध्यायीयसूत्राणां रचना-क्रम-कार्याणि

पूर्वं ञनुबन्धे णनुबन्धे च कृत्प्रत्यये परे धातोस्तान्येव कार्याणि स्युर्यान्याख्याते इचि प्रत्यये परे धातूना भवन्तीति ज्ञापनार्थमतिदिश्यते—"**सिद्धिरिज्वद् ञ्णानुबन्धे**" (४।१।१) इति। इचि प्रत्यये परे यानि कार्याणि जायन्ते तानीह श्लोकद्वयेन निर्दिश्यन्ते। यथा—

**इज्वद्भावेऽस्योपधाया दीर्घो वृद्धिश्च नामिनाम्।**
**हन्तेर्घो जनवधोर्ह्रस्वः कुटादीनां गुणो भवेत्॥**
**स्यादादन्तानामायिश्च इनीचीति निबन्धनात्।**
**न ह्रस्वो मानुबन्धानामिचि वा वचनेन च॥**

(कात० वृ० ४।१।१) इति।

'पाठः, कारकः, घातकः, जनकः, उत्कोटक, पायक' इत्याद्युदाहरणानि। सूत्रे सिद्धिपद ग्रन्थादौ मङ्गलार्थमुपात्तम्। 'घातकः' इत्यादौ हन्तेर्नकारस्य तकारादेश विधाय अशमीत्यादाविचि परेऽमन्तधातूना दीर्घादिकम्, समिधितेत्यादौ प्रत्ययलुग्भूताना धातूना गुणादिक च प्रतिषिद्धम्। शनुबन्धे कृत्प्रत्यये परे सार्वधातुकवत्कार्यातिदेशः क्रियते—"**सार्वधातुकवच्छे**" (४।१।५) इति। तेन जुह्वदित्यादौ शन्तृङ्प्रत्यये सति अन्विकरणस्तल्लुगादिक च सम्पद्यते। ङनुबन्धे कृत्प्रत्यये गुणरूपकार्यस्य प्रतिषेधः कृतः। कनुबन्धे कृत्प्रत्यये परे यणि प्रत्यये यत्कार्यं भवति तदतिदिश्यते—"**के यणवच्च योक्तवर्जम्, जागुः कृत्यशन्तृङ्ण्योः**" (४।१।७, ८) इति। अत एव 'कृतवान्, इष्टिः, जागरूक.' इत्यादौ गुणाभावः, सम्प्रसारणम्, गुणश्च जायते। किदनुबन्धप्रत्ययस्य कार्यप्रसङ्गे 'शयित्वा, शयितवान्' इत्यादौ क्त्वाप्रत्ययस्य निष्ठासञ्ज्ञकप्रत्यययोश्च नवभिः सूत्रैर्गुणवत्त्वम्, 'प्रह्वन्न.' इत्यादौ ह्रस्वविधिश्च निर्दिष्टः। 'नावम्मन्यः' इत्यादौ खनुबन्धप्रत्ययान्ते धातावुपपदात् परमम्प्रत्ययम्, 'नाडिन्धमः' इत्यादौ मकारागम चानुशिष्य पुरन्दरादयः शब्दा निपातनात् साधवो विज्ञाप्यन्ते। अग्निचिदित्यादौ पनुबन्धे कृत्प्रत्यये परे ह्रस्वान्तधातो. पर तकारागम निर्दिश्य लव्यमित्यादौ केषाचित् कृत्प्रत्ययाना स्वरसन्धिविधानाय स्वरवत्त्वमतिदिश्यते। घृतस्पृगित्यादावपृक्तादे प्रत्ययस्य लोप प्रदर्श्य स्पृहयालुरित्यादाविनो लोपाभावः प्रोक्तः। प्रशमय्येत्यादाविनोऽयादेशः, प्रमायेत्यादौ मीञित्यादिधातूनामाकारः, 'प्रक्षीय, प्रक्षीणः' इत्यादौ क्षेर्दीर्घ कृतः। अत्र यपि प्रत्यये दीर्घविधानाय कृतात् "**क्षेर्दीर्घ.**" (४।१।४०) इति सूत्रान्निष्ठाया दीर्घविधानाय पृथगुपन्यस्त "**निष्ठायां च**" (४।१।४१) इति सूत्रमुत्तरत्र निष्ठामात्रस्यैवानुवृत्तिकरणायेति विज्ञेयम्। निष्ठाया स्फायः स्फ्यादेशः, प्यायतेश्च प्यादेशो

भवति। अत्र क्षीरहविषोरर्थयोः शृतमित्यस्य सिद्धिर्निपातनादभिहिता। 'प्रस्तीतः' इत्यादौ सम्प्रसारणम्, प्रवायेत्यादौ तन्निषेधः, 'सवीत' इत्यादौ तस्य दीर्घश्च जायते। क्विबादौ छकारवकारयोः श-ऊडित्येतावादेशौ, 'मूः, धूः' इत्यादौ तयोश्च लोपः, वतिरित्यादौ नकारादेर्लोपः, अकारस्य अकारश्च, वन्तिरित्यादौ पञ्चमलोपादिनिषेधः, ओद्मेत्यादौ पञ्चमवर्णलोपः 'स्यद' इत्यस्य निपातनात् सिद्धिः, 'रागः' इत्यादौ वर्गीयपञ्चमवर्णलोपः, अञ्जेत्यादौ पञ्चमस्य आकारः, हित्वेत्यादाविड्भावः, 'हित' इत्यादौ दधातेर्हिरादेशः, 'पम्फुल्त' इत्यादौ चरफलोरकारस्य उकारादेशः, 'दत्तः' इत्यादौ दासञ्ज्ञकधातोः, 'दत्' इति तकारान्तादेशः, 'प्रत्तमः' इत्यादौ दासञ्ज्ञकधातुस्थाने तकारादेशः, 'जग्ध' इत्यादावदेर्जग्धिरादेशो विहितः। अदो जग्ध्यादेशविधायके "**यपि चादो जग्धिः**" (४।१।८२) इति सूत्रे यपि चेति पदोपादानेनेदं विज्ञायते—अन्तरङ्गविधीना यबादेशो बाधको भवतीति। अन्यथा अन्तरङ्गत्वाददो जग्ध्यादेशे सति समासाश्रितत्वाद् बहिरङ्गे क्त्वो यबादेशे कृते प्रजग्ध्येत्यादीनामुपपत्तौ सूत्रे 'यप्' निर्देशस्य निष्प्रयोजनत्वं स्यात्। उक्तं च वृत्तिकारेण -

**जग्धौ सिद्धेऽन्तरङ्गत्वाद् यपि चेति यदुच्यते।**
**ज्ञापयत्यन्तरङ्गाणां यपा भवति बाधनम्॥** इति।

'घास' इत्यादावदेर्घस्लादेशो जायते। एवं निष्ठायाः कार्यमुक्त्वा पादान्ते क्तक्तवन्तू प्रत्ययौ निष्ठासञ्ज्ञाया सञ्ज्ञिनौ निर्दिश्येते—"**क्तक्तवन्तू निष्ठा**" (४।१।८४) इति।

प्रथमपादे ञाद्यनुबन्धप्रत्ययेषु इजादिवत्कार्यातिदेशः विशेषतो निष्ठाप्रत्ययनिमित्तककार्यनिर्देशश्च कृतः। द्वितीयपादे प्रथमं "**धातोः**" (४।२।१) इति पञ्चम्यन्तमधिकारं प्रदर्श्य तेन सह यस्य नाम्नः समासो विधीयते "**तस्य तेन समासः**" (४।२।४) इति सूत्रेण, तस्योपपदसञ्ज्ञा धातोः पूर्वं तस्याः प्रयोगं चाख्यातवान्। यथा—"**सप्तम्युक्तमुपपदम्, तत्प्राङ् नाम चेत्**" (४।२।२,३) इति। उक्तसूत्रत्रयस्योपन्यासः अलङ्कृत्वेत्यादौ प्राग्भावसमासनिषेधकेन "**नाव्ययेनानमा**" (४।२।५) इत्यनेन, 'मूलकेनोपदशम्, मूलकोपदशम्' इत्यादौ विकल्पेन समासविधायकेन "**तृतीयादीनां वा**" (४।२।६) इत्यनेन च सूत्रेण सह प्रपञ्चार्थमेव कृत इति सोपपत्तिकं वृत्तिकारेणोक्तम्। धात्वधिकारानन्तरं प्रकृतत्वात् कृदधिकारः समुपस्थापितः। ये हि तव्यादिप्रत्यया अग्रे उत्सर्गापवादरूपेण वक्ष्यन्ते तत्रापवादेन बाधितस्योत्सर्गभूतस्यापि प्रत्ययस्य समावेशार्थं परिभाषावचनमुपस्थाप्यते—"**वाऽसरूपोऽस्त्रियाम्**" (४।२।८) इति। अयं भावः—स्त्र्यधिकारविहितं प्रत्ययं वर्जयित्वाऽसरूपः कृत्प्रत्ययो विकल्पेन बाधको भवतीति। एष विकल्पनियमोऽपवादविधेर्विज्ञेयः। यथोक्तं वृत्तिकारेण—

**विकल्पितेऽपवादेऽपि बाधनं तदवस्थितम्।**
**उत्सर्गे न च लाभस्तद् बाधकत्वं विकल्प्यते॥** इति।

तदनु तव्यानीयौ प्रत्ययौ तद्बाधकं यप्रत्ययं चोपस्थाप्य यप्रत्ययान्ताः पण्यादयः केचन शब्दा निपातनात् ससाधिताः। क्यप्प्रत्ययनिर्देशान्ते क्यप्प्रत्ययान्ताः सूर्यादिशब्दा

निपातनेन साधुत्व प्रापिता । ष्यण्प्रत्ययस्य विवरणान्ते राजसूयादिशब्दसिद्धौ निपातनाव-लम्बन कृतम्। उपर्युक्ताना कृत्सञ्ज्ञकाना 'तव्य-अनीय-य-क्यप्-ण्यत्' इत्येतेषा पञ्चप्रत्ययाना कृत्यसञ्ज्ञा प्रयुक्ता—"ते कृत्याः" (४।२।४६) इति।

ततो 'ण्वुल्-तृच्-अच्-यु-णिनि-क-ड-श-ण-अक्-वुन्-थक-ण्युट्-अक' इत्येते चतुर्दश-प्रत्ययास्तत्तद्धातुभ्यो विहिता.। अच्प्रत्ययविधायके "अच् पचादिभ्यः" (४।२।४८) इत्यत्राऽऽहुर्व्याख्याकारा.—पचादिषु नवसु नामगणेषु सर्वे धातव. समायान्तीति, यथा ण्वुल्तृचौ सर्वधातुभ्यो विधीयेते तथा अच्प्रत्ययोऽपि सर्वधातुभ्यो विधेय', किमर्थं सूत्रे पचादिनिर्देश. क्रियते ? इति। तत्रेद विज्ञेयम्—'श्वपच' इत्यादौ कर्मोपपदस्थलेऽपवादरूपा अणादयोऽपि प्रत्यया न स्युरित्येतदर्थं सूत्रे पचादिग्रहण क्रियते इति।

एव द्वितीयपादे धात्वधिकारे तव्यादिकृत्यसञ्ज्ञका, सर्वधातुभ्यो जायमाना ण्वुल्तृजा-दिप्रत्ययाश्चोक्ता। तृतीयपादे कर्मोपपदेभ्यस्तत्तद्धातुभ्योऽणादिप्रत्यया निर्दिष्टा.। तत्र केचित् प्रत्यया. प्रसङ्गात् करणाद्युपपदेभ्योऽपि धातुभ्य समाख्याता., विहङ्गादयश्च केचन शब्दा निपातिता दृश्यन्ते। मध्येऽनीताधिकारसूत्रस्य निष्ठाप्रत्यययोरपि भूतार्थे विधान-मुपदिश्य 'सुत्वा, यज्वा' इत्यादौ निरुपपदाभ्या 'सु-यज धातुभ्या ङ्वनिप्प्रत्ययम्, जरन्नि-त्यादौ जॄधातो अन्तृन्प्रत्यय विहितवानाचार्य.। एतत्पादीयास्त्रिंशत् प्रत्यया यथाक्रममेव सन्ति—'अण्-ण-क-टक्-अच्-ट-ट्-खि-खश्-ख-ड-णिनि-ख्युट्-खिष्णु-खुकञ्-विण्-क-विट्-मन्-क्वनिप्-वनिप्-विच्-क्विप्-सक्-णिनि-इन्-क्त-क्तवन्तु-ङ्वनिप्-अन्तृन्' इति। विट्प्रत्यया-न्तानाम् 'अग्रेगा' इत्यादिशब्दाना वेदप्रयुक्तत्वेऽपि भाषात्वमुपपादयन् वृत्तिकारो ब्रूते—

"अग्रेगा उदधिक्राश्च गोषाश्च विषखास्तथा।
श्रियं दधतु राजेन्द्र! तवाब्जा सहिता इमे॥

'छन्दसि सञ्ज्ञात्वेन विश्रुता लोके प्रयुज्यन्ते इति मतम्' (४।३।६४) इति।" एवमग्रिमे सूत्रव्याख्यानेऽपि पुरोडाशादिशब्दाना भाषात्वविषये वदति—'सदा पुरोडाशपवित्रि-ताधरे । मन्त्रे रूढित्वाद् यथादर्शनं गम्यते। सञ्ज्ञात्वाल्लोके प्रयुज्यन्ते इति मतम्" (४।३।६५) इति।

चतुर्थपादे निरुपपदेभ्य एव धातुभ्यः क्वसु–कानादयो वर्तमानकालिकाः प्रत्यया-स्तत्तदर्थनिर्देशपुरस्सर तत्तद्धातुभ्यो विशदरूपेण विवेचिताः। क्वसुकानयोः क्वचिदतीतेऽपि दर्शनात् सूत्रे एव तत्कृते परोक्षावदतिदेशः क्रियते। उणादिप्रत्यया भूतार्थेऽपि जायन्ते। गम्यादिशब्दाः, क्रियाया क्रियार्थायामुपपदे धातोर्ण्वुल्तुमौ, क्रियाया क्रियार्थायामुपपदे कर्मणि च धातोरण्प्रत्यय, क्रियाया क्रियार्थाया कर्मणि चोपपदे शेषे च धातोर्विहितौ शन्तृङानशौ च प्रत्ययौ भविष्यदर्थे निर्दिश्यन्ते। सर्वे चैतत्पादीयाः प्रत्यया इत्थ विज्ञेयाः—'क्वसु-कान-शन्तृङ्-आनश्-शानङ्-तृन्-इष्णुच्-स्नुक्-रु-क्नु-घिणिन्-वुण्-वुञ्-यु-उकञ्-षाक-इन्-आलु-रु-

मरक्-घुर-कुर-ऊक-वर-क्वरप्-र-उ-कि-नजिङ-आरु-रुक्-लुक्-क्विप्-डु-ष्ट्रन्-इत्रन्-क्त-उणादि-तुम-अण्' इति। क्विप्रत्ययान्ता दधिरित्यादिरूढा शब्दा भाषाया प्रयुज्यन्ते इति विज्ञेयम्।

पञ्चमे पादे पूर्वं घञ्प्रत्ययस्य कर्तृकर्मादयोऽर्थास्तत्तद्धातुभ्यो विस्तरेण प्रोक्ताः। तदनु इनुणादयोऽनेके प्रत्यया अर्थविभागपुरस्सरमुपस्थापितास्ते चेत्थ विज्ञेयाः—'इनुण्-ण-अल्-अण्-ड-क-अथु-त्रिमक्-नङ्-कि-क्ति-क्यप्-य-अ-अङ्-यु-वुञ्-इञ्-अनि-क्त-युट्-घ-खल्-तुम्-तृच्-णिन्-तिक्' इति। मध्ये च प्रसङ्गाद् हनादेर्वधाद्यादेशा प्रकीर्तिता। कृत्प्रत्यया धात्वर्थाना सम्बन्धे विशेष्यविशेषणभावलक्षणे स्व काल त्यक्त्वा विशेषणत्वाद् विशेष्यस्य धात्वर्थस्य काले साधवो भवन्ति न तु विशेष्यभूतास्त्यादिप्रत्यया इति विज्ञापनार्थं पादान्ते सूत्रमुच्यते—"**धातुसम्बन्धे प्रत्ययाः**" ( ४।५।११३ ) इति।

षष्ठपादारम्भे 'क्त-णम्' प्रत्यययोरर्थविस्तरो दर्शितः। मध्ये क्वचित् खमिञ्प्रत्यय निर्दिश्य कृत्सञ्ज्ञकाः प्रत्यया कर्तरि कृत्य-क्त-खलर्थप्रत्ययाश्च भावकर्मणोर्भवन्तीत्यौत्सर्गिक वचनमादिष्टम्। क्तप्रत्ययश्च पुनरादिक्रियायाम्, गत्यर्थेभ्योऽकर्मकेभ्यः श्लिषादिभ्यश्च कर्त्रर्थेऽपि विहितः। ततो दाश-गोघ्नेतिशब्दयोः सम्प्रदाने, भीमादिशब्दानामपादाने सिद्धि-मनुदिश्योणादिप्रत्ययाना सम्प्रदानापादानाभ्यामतिरिक्तेष्वर्थेषु, क्तप्रत्ययस्याधिकरणाद्यर्थेष्वपि साधुत्व विज्ञापितम्। तदनन्तरं क्रमेण 'यु' इत्यस्यानादेश., 'वु' इत्यस्याकादेशः, 'झ' इत्यस्यान्तादेशः, नञो भिन्नस्याव्ययस्य क्त्वान्तेन समासे क्त्वाप्रत्ययस्य यबादेश., धुटि घानुबन्धे च प्रत्यये परे चकारस्य ककारः जकारस्य च गकार, 'कूजः, आज्यम्' इत्यादौ तन्निषेधः, सदृगित्यादौ समानस्य सभावः, ईदृगित्यादाविदम 'ई' इत्यादेशः, कीदृगित्यादौ किमः कीरादेशः, अमूदृगित्यादावदसोऽमुरादेशः, तादृगित्यादौ सर्वनाम्न आकारादेशः, विष्वद्र्यङित्यादावद्र्यादेश सध्र्यङित्यादौ सहस्य सध्र्यादेशः, सम्यङि-त्यादौ समः सम्यादेशः, तिर्यङित्यादौ धातुमकारस्य नकार., आरिवानित्यादाविडागमः, 'श्रितः' इत्यादौ तन्निषेधः, 'एष्टा, एषिता' इत्यादो विकल्पेनेडागमः, 'शीर्णः, भिन्नः' इत्यादौ निष्ठायास्तकारदकारयोर्नकारादेशः, शौरित्यादावकारात् परस्य ऊटो वृद्धिर्विधीयते। वृद्धि-विधायके "**अवर्णादूटो वृद्धिः**" ( ४।६।११६ ) इत्यत्र 'औ' मात्रस्यैव निर्देशेन सिद्धौ सत्या वृद्धिग्रहण ग्रन्थान्ते मङ्गलार्थं कृतमिति विज्ञेयम्।

**इति कातन्त्रव्याकरणविमर्शाभिधे शोधप्रबन्धे द्वितीयः सूत्ररचनाक्रमाध्यायः।**

—:०:—

# तृतीयोऽध्यायः = कातन्त्रीयो धातुपाठः

## कातन्त्रीयधातुसूत्राणां तद्व्याख्यानग्रन्थानां च कर्तारः ।

उपलब्धे शार्ववर्मिककातन्त्रव्याकरणे "दिवादेर्यन्, नुः स्वादेः, तनादेरु, ना क्र्यादेः, कर्तरि रुचादिङानुबन्धेभ्यः, इन्त्र्यजादेरुभयम्" ( ३।२।३३, ३४, ३७, ३८, ४२, ४५ ) इत्यादिसूत्रेषु दिवादिगणाना निर्देशादाचार्येण शर्ववर्मणाऽत्रस्य धातुपाठः प्रणीत इति वक्तु शक्यते। धातुगणाना निर्धारणाभावे सूत्रेष्वादिपदस्य निर्देशो न युज्यते कर्तुम्। आचार्यान्तरस्य धातुपाठमादाय सूत्रप्रणयनमौचित्य नावहति–पूर्वं प्रणीतेभ्यो व्याकरणान्तरेभ्यो व्याकरणस्यास्याल्पत्वात् पाणिनीयधातुपाठापेक्षयाऽत्र क्रमवैषम्यस्य सन्दर्शनाच्च। काशकृत्स्नधातुपाठेनापि न सवदते धातुपाठोऽयम्। भेदकानि कानिचिदुदाहरणानि प्रस्तूयन्ते —

| काशकृत्स्ने | पाणिनीये | कातन्त्रे |
|---|---|---|
| १. हेठ एठ विबाधायाम् ( १।४४० ) | हेठ विबाधायाम्, एठ च ( १।१६६, १७० ) | हेठ विबाधायाम्, एठ च ( १।३६०, ३६१ ) |
| २. ... | . | मृग अन्वेषणे ( ३।२४ ) |
| ३. ष्ट्रप समुच्छ्राये ( ३।६८ ) | ष्टुप समुच्छ्राये (१०।११९) | ष्ट्रूप समुच्छ्राये ( ३।७० ) |
| ४. तप ऐश्वर्ये च वृतु वर्तने } ३।१००-१ | तप ऐश्वर्ये वा वृतु वरणे } ३।५१-५२ | तप ऐश्वर्ये वावृतु वर्तने } ३।१०२-३ |
| ५. तुद नुद दिश भ्राज क्षिप कृष एते परस्मैपदिन. (तु० १।६) | तुद णुद दिश भ्राज क्षिप कृष एते उभयपदिनः ( तु० १।६ ) | तुद-कृष एते उभयपदिनः ( तु० १-६ ) |
| ६. षिचिर् क्षरणे (५।११) | षिच क्षरणे ( ५।१४२ ) | षिच क्षरणे ( तु० ११ ) |
| ७ वृधु वर्धने ( ६।६६ ) | वर्ध छेदनपूरणयोः (चु० १०३) | वर्ध छेदनपूरणयोः (चु० ७५) |
| ८. तन्चु सकोचने (६।१८) | तन्चू सकोचने ( रु० २८ ) | तन्चू सकोचने ( रु० १८ ) |
| ९. म्लेछ चुटि छेदने ( ६।६६ ) | चुटि छेदने ( चु० १०७ ) | म्लेछ च ( चाद् व्यक्तायां वाचि ), चुडि छेदने ( चु० ७९-८० ) |
| १०. ढुढि अन्वेषणे (१।१६१) | . | ढुढि अन्वेषणे (चु० २६६) |

उक्त च दुर्गसिंहेन परिभाषावृत्तौ—"गणकारसूत्रकारयोश्च परस्परेण सापेक्षत्वादेकत्वं सिद्धमेवेति" ( परि० ५८ ) इति।

उद्धृतान्याख्यातप्रकरणस्य सूत्राणि किमुताऽऽख्यातप्रकरण शर्ववर्माचार्येणैव प्रणीतमिति टीकाकारवचनेनावगम्यते, यथा—"**कृतमनपेक्ष्य शर्ववर्मणा विरचितमिदमिति न दुष्यति**" ( ॠदन्तस्येरगुणे ३।५।४२ ) इति। शार्ववर्मिको धातुपाठः साम्प्रत नोपलभ्यते।

शर्ववर्माचार्येण स्वीयधातुपाठस्य किञ्चिद् व्याख्यानमपि कृतमित्यत्र तदुपोद्बलकानि वचनानि नोपलभ्यन्ते। यत्तु युधिष्ठिरमीमांसकैरेतदीयवृत्तिरचनानुबन्धे—"**विशेषः पाणिनेरिष्टः सामान्यं शर्ववर्मणः**" इति कविकल्पद्रुमस्य धातुदीपिकाया टीकायामुपन्यस्त दुर्गादासीयवचन प्रमाणरूपेणानुमतम् ( द्र०-स० व्या० शा० इति०, भा० २, पृ० ६७ ), तन्न विचाररमणीयम्। इदमवधेयम्—तत्र तत्र धातुगणे उभयतोभाषेति पाठस्य करणादेव तत्तद्धातूनामुभयपदत्वे सिद्धे "**इन्-ञ्-यजादेरुभयम्**" ( ३।२।४५ ) इति सूत्रस्य नैरर्थक्यमिति पूर्वपक्षमुपस्थाप्य तन्निराकुर्वन्नाह वृत्तिकारः—"**गणकारवचनप्रमाणार्थमिदम्**" इति। तत्र च पञ्जीकारः—"**एषामेव धातूनां गणकृतोभयतोभाषत्वमुक्तं तेषामेव सूत्रकृताऽप्युभयपदं विधीयते इति। एकसंवादनिबन्धनं गणकारवचनस्य प्रामाण्यं यथा स्यादित्यर्थः**" इति। यदि शर्ववर्मण कश्चिद् वृत्तिग्रन्थः स्यात् तर्हि तदीयमत्र वचनमवश्यमुपस्थापयेत्। एव धातुपाठस्थ वचनमुपस्थापयता तद्वृत्तिवचनस्य यत् स्मरणमपि ( निर्देशोऽपि ) न कृत त्रिलोचनदासेन, तेनेदमेव वक्तु शक्यते—न शर्ववर्मणा धातुपाठस्य किञ्चिद् व्याख्यानमारचितमिति।

'विशेष. पाणिनेरिष्ट.' इत्यादिवचनन्तु कुलचन्द्रेणोक्त ( ३।२।४५ ) सूत्र व्याचक्षमाणेन दुर्गवाक्यप्रबोधे उपस्थापितम्। तत्रोच्यते-"**स्वरितञितः कर्त्रभिप्राये क्रियाफले**" ( अ० १।३।७२ ) इति पाणिनीय सूत्रम्, एतेन कर्त्रभिप्राये एव क्रियाफले स्वरितञिद्भ्यो धातुभ्य आत्मनेपदमापद्यते। शार्ववर्मिक च सूत्रमस्ति-"**इन्-ञ्-यजादेरुभयम**" (३।२।४५) इति। अस्मिन् सूत्रे कर्त्रभिप्राय एव क्रियाफले आत्मनेपद स्यादिति नाचार्यस्याऽऽग्रहो लक्ष्यते। दृश्यते च—'मरीचीन् वितनुते' इत्यादावफलवत्यपि कर्त्तर्यात्मनेपदम्, एव यज्ञ यजतीत्यादौ फलवत्यपि च कर्तरि परस्मैपदमिति। एतस्मादेव हेतो. 'कर्त्रभिप्राय एव क्रियाफले' इति वाक्यमुपन्यस्य शर्ववर्माचार्य पाणिनिमतेन सह स्वीय विसवाद प्रदर्शितवान्। तदर्थमुक्तम्—

**विशेषः पाणिनेरिष्टः सामान्यं शर्ववर्मणः।**
**सामान्यमनुगृह्णन्ति तत्राचार्यपरम्परा॥** इति।

आत्मनेपद-परस्मैपदसञ्ज्ञयोरन्वर्थतामवगम्य 'कर्त्रभिप्राये क्रियाफले' इत्यशः सूत्रे आचार्येण परित्यक्त इति प्रतिमाति। अन्वर्थसञ्ज्ञायाः प्रायोवृत्तित्वात् क्वचिद् दृष्टो व्यभिचारः समाधेयः ( द्र०—क० च० ३।२।४५ )। एवमुपर्युक्तसूत्रवचनेन धातुपाठस्थवचनेन च साधिताया धातूनामुभयपदव्यवस्थाया नावश्यकता प्रतिभाति धातुवृत्तावेतद्विषयकवचनोप-

न्यासस्य। पाणिनीये उभयपदव्यवस्थाविषये "स्वरितञितः" (अ० १।३।७२) इत्यादि तदीय सूत्रमेवोदाह्रियते न तु तदीय किञ्चिद् धातुवृत्तिवचनमपि। अथ भावः—पाणिनिना "स्वरितञितः कर्त्रभिप्राये क्रियाफले" (अ० १।३।७२) इति सूत्रवचनेनैव स्वीयमते विज्ञापिते "चुरादिवृत्तौ तत्कथनात् कर्त्रभिप्राये क्रियाफले आत्मनेपदं तदभावे परस्मैपदं जायते" इति कथनं तदीयानुशासनस्यानभिज्ञतामेव परिचाययति। तस्मादुद्धृतवचनेन शर्ववर्माचार्यस्य धातुवृत्तिकर्तृत्व न साधयितु शक्यते।

कातन्त्रैकदेशिना वररुचिकात्यायनेनावश्यमेव शार्ववर्मिकधातुपाठस्य व्याख्यानमारचितमिति "ह्रस्ववानयम्—उतोऽयुरुनु० (३।७।१५) इत्यत्रास्यापि ग्रहणमिति कात्यायनव्याख्यानात्" (मनोरमा, णु स्तवने—तु० १०४) इति रमानाथशर्मोक्तवचनेन स्पष्ट परिलक्ष्यते। तदीय व्याख्यान साम्प्रत नोपलभ्यते। शर्ववर्माचार्येण ज्वलादि—रधादि-ल्वादयो गणा अनुशासनसूत्रेषु न निर्दिष्टाः किं च महर्षिकात्यायनेन कृत्सूत्रेष्वेते पठिताः। एवं वर्तमानधातुपाठे ज्वलादि-रधादि-ल्वादीना समाप्त्यर्थं कृतं वृद्ग्रहण कात्यायनेनैव योजितमिति मन्ये।

तत्त्वावगमबलेन कातन्त्रदुर्गे सिंहवन्निःशङ्क विहरता दुर्गसिंहेन शार्ववर्मिकधातुपाठस्य परिष्कार कृत इत्येकेन मनोरमोक्तवचनेन वक्तुं शक्यते। तद् यथा—"दुर्गसिंहस्त्वमूनेकयोग कृत्वा वैकल्व्ये पठति नाह्वानरोदनयो" (कद क्रद आह्वाने रोदने च, भू० ४६६) इति। अन्यत्राप्युक्तवचनेनेद प्रतीयते (द्र०—मनोरमा, घुषिर् कान्तिकरणे, भू० ४५६। चक तृप्तौ, भू० ५०७)। धातुविषये विविधमतानि दुर्ग-दौर्गतिनामनिर्देशेनोद्धृतानि दृश्यन्ते। यथा—

"तथा च क्लेश भाषणे इति चान्द्रं सूत्रम्, क्लेश बाधने इति दौर्गम्" (क्षीरत० १।६३७-३८)। अत्रायं धातुर्यद्यपि क्षीरस्वाम्यादिभिर्न पठ्यते तथापि मैत्रेयचन्द्रदुर्गैः पठितत्वात्–शमीगर्भादग्निं मन्थति इत्यादिदर्शनाच्चास्त्येव (मा०धा०वृ०, मन्थ विलोडने १।३७)। दुर्गास्तु नोपधमनिदितं पठन्तीति स्वामी" (मा० धा० वृ०, आङः शसि इच्छायाम् १।४०७) इति। तदीयोऽपि धातुपाठो न दृष्टिपथमायाति। दौर्ग एव धातुपाठस्त्रिविष्टपप्रदेशे (तिब्बते) शाक्य-पण्डितैः शार्ववर्मिकधातुपाठनाम्ना कातन्त्रधातुसूत्रनाम्ना वा व्यवह्रियते स्मेति क्षीरतरङ्गिण्या (पृ० २३२) डॉ० ब्रूणोलिबिशोक्तवचनमनुसृत्य गुरुपदहालदारेण निर्दिष्टम् (द्र०—व्या० द० इति०, पृ० ४०९–टिप्पणी)।

परिष्कृतस्य कातन्त्रधातुपाठस्य स्वयमाचार्यदुर्गसिंहेन वृत्तिरपि कृताऽऽसीदित्यत्रास्ति निम्नाङ्कित वचः प्रमाणम्। यथा—"दन्दशनमिह दन्तशूककर्तृका क्रियाऽभिधीयते इति दुर्गसिंहव्याख्यानाद् दन्दशन इति पाठोऽनुमीयते (मनोरमा, खर्द दशने, भू० २०), दुर्गादयस्तु ईदनुबन्धपाठः परप्रसिद्ध्यैव, परो हि जन जनने इति भाषायां न प्रयोजयति। अस्माकं तु द्वयोरेव ग्रहणम्" (मनोरमा भू०

५३१ ) इति । कातन्त्रव्याख्यातार. परशब्देन प्रायः पाणिनिं स्मरन्ति । दन्दशनेत्यादि-दुर्गसिंहोक्तवचनस्य 'अनुमीयते' इति पदस्य चोपन्यासेन विरोधः प्रतीयते, ग्रन्थस्याभावे तदीयवचनोपन्यासस्यासम्भवात्, ग्रन्थस्य प्रत्यक्षे सत्यनुमानस्यानुपपत्तेश्च । अत्रेत्थं समाधेयम्–उपर्युक्त दौर्गवचन क्वचिदन्यत्र दृष्ट रमानाथेनेहोद्धृतम्, आहोस्विदाचार्यान्तरस्य कस्यचिन्मतमुपन्यस्य दुर्गसिंहेन यद् व्याख्यात तदेवेह प्रदर्शितमिति ।

"दुर्गत्रिलोचनवृत्तावयं नास्ति" ( मनोरमा, मृग अन्वेषणे, दि० २४ ) इत्यत्र दुर्गत्रिलोचनप्रणीताया धातुपाठस्यैव वृत्तेरुल्लेख इति प्रतिभाति । कविकण्ठहारेणापि चर्करीतरहस्यवृत्तावुच्यते—"**गणवृत्तौ दुर्गेणाप्युक्तम्–केचिदिह नञा निर्दिष्टत्वात् सिद्धाः । तदुक्तं दुर्गेण गणवृत्तौ–भावकर्मणोरात्मनेपदं नाभिधीयते इति केचित्**" ( कारि० ११, १४ ) इति । अत्र गणवृत्तिशब्देन धातुव्याख्यानमेव दौर्गसिंहीय किञ्चित् स्मृतमिति प्रतीयते ।

आचार्येण त्रिलोचनदासेन दौर्गधातुवृत्तिमाधारीकृत्य तदीयधातुपाठस्य वृत्तिर्विरचिताऽऽसीदिति सम्भव्यते । एतस्य वृत्तिकर्तृत्वे मनोरमोक्तानि सन्ति कानिचित् प्रमाणानि । यथा—"**पवर्गपञ्चमादिरिति त्रिलोचनः** ( मुछ प्रमादे, भू० ६० ), **नायमस्तीति दुर्गत्रिलोचनौ** ( वेल्ल गतौ, भू० १८० ), **दॄ विदारणे इति क्रैयादिकस्येह पाठो मानुबन्धार्थो न पुनः प्रकृत्यन्तरमभिधानादिति त्रिलोचनादयः** ( भू० ५२२ ), **चात् प्रकृताया गताविति त्रिलोचनादयः** ( वेणु ज्ञानचिन्तानिशामनेषु च, भू० ५७३ ), **वृदिति त्रिलोचनः । वस्तुतस्त्वत्र वृच्छब्दो नास्ति, वृत्तौ रुदादिः पञ्चको गण इति व्याख्यानात्**" ( अ० ३५ ) इत्यादि । "**धातुपारायणे तु त्रिलोचनेन खञ्नातीति दर्शितं तत्तु लेखकप्रमाद एवेति**" ( क० च० ३।२।३५ ) इति वचनेन त्रिलोचनदासेन धातुपारायणाख्य किञ्चिद् व्याख्यान कृतमिति निश्चीयते । प्रदर्शित मत वर्द्धमानेन कातन्त्रविस्तरे निर्दिष्टमिति रमानाथेनाप्युधृतम्[1] ।

'मुस खण्डने' ( दि० ११६ ) इति धातोर्व्याख्याने सायणाचार्येण आत्रेयस्यैक कातन्त्रीयं मतमुपन्यस्तम्, तेन आत्रेय. कातन्त्रधातुपाठस्य वृत्तिं रचयामासेति यत् कल्पित युधिष्ठिरमीमासकेन तत् तस्यादूरदर्शित्वमेव द्योतयति ( द्र०–स० व्या० शा० इति०, भा० २, पृ० ९८ ) । सायणाचार्यो निर्दिशति—"**आत्रेयस्तु कातन्त्रे मूर्धन्यान्तोऽयम् । तथा च राघवस्यामुषः कान्तामिति भट्टिकाव्ये प्रयोगश्चेति पाठान्तरमप्याह**" ( मा० धा० वृ० ) इति । अयमाशय.–कातन्त्रधातुपाठे खण्डनार्थको मुस-धातुर्मूर्धन्यान्त पठित इति आत्रेयाचार्योक्तवचनस्य प्रदर्शनार्थं सायणाचार्येण तदीयः पाठ उद्धृत, न तु कातन्त्रधातुव्याख्याने आत्रेयेण 'मुस' इत्यत्र मूर्धन्यान्त. पाठोऽङ्गीकृत इति तदुद्धृतवचनेन विज्ञायते इति । अन्यथा "मुसलमिति । अस्मादेव औणादिकः

१ धातुपारायणे तु खञ्नातीत्युदाहृतमिति विस्तरवृत्तावुक्तम् ( मनो०, क्री० ५० ) इति ।

कलप्रत्यय इति वदतोरात्रेयमैत्रेययोरन्येषामयमु सान्त पठता भ्रमिमस्योरुचोपधाया इति मसेर्मुसलव्युत्पत्तिरनार्षेति मतम् इत्यत्र सायणाचार्य आत्रेयस्य सान्तत्वपक्षोऽभिमत इति वक्तु न शक्नुयात् ।

य धातुपाठमवलम्ब्य रमानाथशर्मणा मनोरमानाम्नी वृत्तिः प्रणीता स न शार्ववर्मिक इति विज्ञायते । सन्ति केचिदत्र हेतव , यथा—

१—टीकाकारेण दुर्गेण "**चुरादेश्च**" ( ३।२।४५ ) इतिसूत्रव्याख्याने युजादि-प्रीञन्तं द्विचत्वारिंशदेव ( ४२ ) धातवो युजादिगणे पठिताः, परमत्र इभ सन्दर्भे ( चु० २८५ ) इत्यधिकोऽप्येको धातु• पठ्यते, अन्ते च ढुढिधातोरपि ( चु० २९९ ) अन्वेषणार्थे पाठो दृश्यते । तेन शार्ववर्मिकधातुपाठे तावन्त एव धातव• पठिता इति विज्ञायते ।

२—'बृहिर शब्दे च' ( भू० ३४८ ) इति धातोर्व्याख्याने रमानाथेनोच्यते—"**अस्य पाठ• सूत्रकारासम्मत एव । व्यवच्छेद्याभावे-बृंहेः स्वरेऽनिटि वा ( ४।१।६८ ) इत्यस्याऽऽनर्थक्यप्रसङ्गात्**" इति । अत्र सूत्रकारो महर्षिवररुचिर्विज्ञेयः—कृत्प्रकरणस्य तेनैव प्रणीतत्वात् । यदि शर्ववर्माचार्येण 'बृहि वृद्धौ' ( भू० २४७ ) इत्येत-स्माद् भिन्नो बृहिर् शब्दे चेत्यपि धातुः पठ्येत, तर्हि 'बृहि' इत्यनेन बृहक इत्यादेः 'बृहिर्' इत्यनेन च बर्हक इत्यादेः सिद्धौ सत्या महर्षिवररुचिः 'बृहकः, बर्हक.' इत्यादौ विकल्पेन नकारलोपार्थं "**बृंहेः स्वरेऽनिटि वा**" ( ४।१।६८ ) इति सूत्र नाऽऽरचयेत् । बृहिर् इत्यस्य गुरुमत्त्वाभावे बृहीत्यस्य न्वागमे कृते गुरुमत्त्वात् तस्माद् भावेऽडि '**बर्हा**' इत्येतस्यैव सिद्ध्यर्थं प्रणीते सूत्रे बर्हेत्येवोदाहरण तत्र दद्यान्न तु 'बर्हकः, बृहक.' इत्यादि । सूत्रे 'स्वरेऽनिटि' इति पदयोः पाठश्च व्यर्थः स्यात् ।

३—डॉ० ब्रूणोलिबिशमहोदयेन क्षीरतरङ्गिण्यामन्ते यो हि शार्ववर्मिको धातुपाठ उद्धृतस्तत्र दद-मन्थ।दिधातूनामनुल्लेखादत्र च तेषा वर्तमानत्वात्तदीयो धातुपाठः कश्चिदन्य एवाऽऽसीदिति प्रतीयते ।

दुर्गसिंहपरिष्कृतोऽपि नाय धातुपाठः प्रतिभाति । यतो हि "**बलपाठस्तु दुर्गसम्प्र-दाय विजृम्भितः** ( मनो०, भू० १९२ ), **दुर्गसिहस्त्वमूनेकयोगं कृत्वा वैक्लव्ये पठति नाह्वानरोदनयोः** ( मनो०, भू० ४९६ ), **दुर्गस्तु भासने इत्यस्यार्थमाह** ( मा० धा० वृ०, शुभ शुम्भ भाषणे हिंसाया च, भ्वा० २८७ ), **यदाह दुर्गः—तिक तिग षिध रि क्षि चिरि जिरि दाश दृ दुड् हिंसायाम्, छान्दसाश्चामी परस्मैभाषा उदात्ताः**" ( मा० धा० वृ०, स्वा० ३० ) इत्यादावुद्धृतं दौर्गमत नानुसरति धातुपाठोऽयम् । अयं धातुपाठः **कातन्त्रगणमाला** इति नाम्ना वङ्गदेशे प्रसिद्ध एतेनैव नाम्ना प्रकाशित-श्चापि दृश्यते ।

निर्दिष्टेभ्य आचार्येभ्यो भिन्नैरपि कैश्चिदाचार्यैः कातन्त्रधातुपाठो व्याख्यातः, पर मतान्तरबाहुल्यस्य प्रदर्शनेन धातुनिर्णयो न यथायथं कर्तुं शक्यते स्म तत्रेति रमानाथोक्त-

वचसा प्रतीयते । धातूना निर्णयायैव रमानाथशर्मणो मनोरमाकृतौ प्रवृत्तिर्जातेति तदुक्तेन प्रयोजनेन विज्ञायते । यथा—

प्रायेण धातुवैषम्यात् सर्वेषां घूर्णते शिरः ।
या तत्क्रियायै प्रभवेत् सैव वृत्तिर्मनोरमा ॥
भूरि सूरिकृता वृत्तिर्भूयसी युक्त्युक्तिका ।
निश्चेतुं धातवस्तस्यां न शक्यास्तेन मे श्रमः ॥ इति ।

**हस्तलेखानां परिचयः**

१—जम्मूस्थे रणवीर-अनुसन्धानपुस्तकालये नागराक्षरेषूपनिबद्ध. पञ्चविंशतिपत्रात्मकोऽपूर्णो हस्तलेखः ८६ घ—अङ्काङ्कितो वर्तते । प्रायेण भ्रष्टपाठा अत्र दृश्यन्ते । नागराक्षरमध्ये शारदाक्षराण्यपि क्वचिद् योजितानि ।

२—श्रीनगरस्थे सर्वकारीयपुस्तकालये सङ्गृहीतकातन्त्रलघुवृत्तेर्हस्तलेखस्य ( ६०७ ग्रन्थाङ्कितस्य ) मध्ये उपन्यस्त. शारदाक्षरमयो धातुपाठ. पाणिनीयधातुपाठमनुसरतीति—दशमेऽत्र गणे चुरादिके, येनाक्षरसमाम्नायमित्यादिलेखाद् विज्ञायते । धातूना क्रमोऽपि पाणिनीयधातुपाठक्रमानुसारी ।

वाराणसीस्थे सरस्वतीभवने चत्वारो हस्तलेखा वर्तन्ते वङ्गलिप्याम् , तत्र त्रयोऽपूर्णा एकश्च सम्पूर्ण. सुवाच्यश्चास्ति । अपूर्णा ग्रन्था. ३८५६८, ३६६६३, ३६८८० सङ्ख्याङ्किताः । पूर्णश्च ३९३३७ सख्याङ्कितः । अत्राप्यनेके भ्रष्टाः पाठाः सन्ति । केचिद् धातवो न पठ्यन्ते ये मुद्रिते धातुपाठे उपलभ्यन्ते केचिच्चातिरिक्ता अपि पठ्यन्ते, ये मुद्रिते न दृश्यन्ते ।

मन्ये—उपलब्धेषु धातुपाठेषु कातन्त्रीयमतानुरूप केनचिदाचार्यान्तरेणैव धातुपाठोऽस्य प्रतिसस्कृत इति । रमानाथेन सस्कृत इति तु वक्तु न शक्यते—"उछि उछी इति प्रमादात् पठितौ, तुदादिपाठादेव रूपद्वयस्य सिद्धत्वात् ( भू० ६२ ), भ्वादौ तुन्प-तुन्फपाठोऽयुक्त एवात्र पाठादेव रूपद्वयस्य सिद्धत्वात् ( तु० ३२), अत्र वृत्पाठो नास्त्येव वृत्तौ तृन्फादिसमाप्त्यर्थं शुन्भान्तानामित्युक्तत्वात्" ( तु० १७ ) इत्यादि मनोरमाया तदुक्तिबलात् ।

रमानाथशर्मणः स्याद्यन्तप्रयोगसाधकः शब्दप्रयोगनामकोऽपरोऽपि ग्रन्थ आसीत्, यमाधारीकृत्य श्रीगुरुनाथशर्मणा शब्दरूपकल्पद्रुमः प्रणीत इति ग्रन्थान्ते तेनैवोक्तम् । यथा—

सुनकान्वयजातेन विद्यानिधिपदाश्रिता ।
काव्यतीर्थोपनामश्रीगुरुनाथद्विजन्मना ॥
शब्दव्युत्पत्तिलिप्सूनामुपकृत्यै यथामति ।
रमानाथकृतं शब्दप्रयोगमवलम्ब्य च ॥
ग्रन्थो नाम्ना शब्दरूपकल्पद्रुमः प्रणीयते ॥ इति ।

ग्रन्थस्यास्य टिप्पणीषु कालापमतानि दुर्गकविराजादिनामभिरुद्धृतानि दृश्यन्ते।

**कातन्त्रीयधातुपाठे प्रयुक्ताना गण-अन्तर्गण-अनुबन्धानां प्रयोजनादिकम्**

रमानाथशर्मणा व्याख्याते कातन्त्रधातुपाठे जुहोत्यादेरदाद्यन्तर्गतत्वान्नवैव गणा दृश्यन्ते। उक्तमपि सगृह्य सङ्क्षेपेण सम्पादकेन श्रीगुरुनाथशर्मणा—

**भ्वद्-दिव-षु-तुदाद्याश्च रुध-तन-क्री-चुरादयः।**
**इमे नव गणा ज्ञेया धातूना शार्ववर्मिके॥** इति।

एतेषु गणेषु सन्ति केचिदन्तर्गणा येषु विशिष्ट किञ्चित् कार्यं विधीयते, ते च सम्पादकेनेत्थ सगृहीताः—

**भ्वादौ द्युतवृताद्याश्च घट-ज्वल-यजादयः।**
**अदादौ भा-जक्ष-रुद-जुहोत्याद्याः प्रकीर्तिताः॥**
**दिवादौ पुष-रधाद्याश्च तथा मुह-शमादयः।**
**तुदादौ मुच-तृन्फाद्याः कुटाद्याश्च प्रकीर्तिताः॥**
**क्र्यादौ प्वादिस्तथा ल्वादिश्चुरादिषु युजादय.।**
**अदन्ताश्च विनिर्दिष्टा इमेऽन्तर्गणसञ्ज्ञकाः॥** इति।

अत्र ज्वलादि-रधादि-ल्वादयो गणा आचार्येण शर्ववर्मणा न प्रयुक्ताः, किं च वररुचिकात्यायनेन कृत्प्रकरणे ते व्यवहृतास्तस्माज्ज्वलाद्यादिगणसमाप्त्यर्थं वृद्ग्रहण वररुचिकात्यायनेन कृतमिति मन्तव्यम्।

आचार्येण शर्ववर्मणा तत्तत्कार्यविधानाय सूत्रेष्वेव ये धातवः क्रमेण पठितास्तेषा मध्ये केचिद् मीनात्यादि-दादीतिगणनिर्देशेन बोधिताः[1]। आचार्येण शर्ववर्मणाऽपि सम्प्रसारणविधानाय कृते **"ग्रहि-ज्या-वयि-व्यधि-वष्टि-व्यचि-प्रच्छि-व्रश्चि-भ्रस्जीनामगुणे"** (३।४।२) इति सूत्रे उपात्ताः 'प्रच्छ-व्रश्च-भ्रस्ज' इति त्रयो धातव. सम्प्रसारणनिषेधाय प्रच्छादिगणेन बोधिताः।

'जपादि-त्वरादि-बिदादि-भृजादि' इत्येते ईदृशोऽपि चत्वारोऽवान्तरगणाः सन्ति यत्र धातुपाठे पठितः क्रमो न समादृतः, किन्तर्हीप्सिता एव धातवः शर्ववर्माचार्येण सङ्गृहीता इति तद्गणसमाप्तिबोधनाय वृत्करणं धातुपाठे न दृश्यते। महर्षिपाणिनिना तु तत्र सम्मता धातवः सूत्रेष्वेव पठिताः।

सम्प्रसारणविधौ **"स्वपि-वचि-यजादीनां यण्परोक्षाशीःषु"** (३।४।३) इत्यत्र गृहीताद् यजादेर्भिन्नोऽप्येको यजादिगण उभयपदविधानाय स्मर्यते। समाहारानुबन्धाः (समाहारः = स्वरितः) सर्वे धातवो यजादिगणे वेदितव्याः। तेभ्यः प्रायेण कर्त्रभिप्राये क्रियाफले आत्मने-

१, मिनादिदादीनामिति सिद्धे मीनातिग्रहण स्वरूपपरिग्रहार्थम्। मीनातिशब्द आदिर्येषामित्यर्थ., तेन धातुगणो न गृह्यते, तत्साहचर्याद् दादयो धातुगणा न गृह्यन्ते किन्तर्हि सौत्रा इत्याह— मीनातिमिनोतीत्यादि (कात० वृ० टी० ४।१।३९) इति।

पदम्, अकर्त्रभिप्राये च क्रियाफले परस्मैपदमुपपद्यते। एवमात्मनेपदविधानायानुदात्तानुबन्धधातूना बोधनाय रुचादिगणो निर्धारितः। तेभ्योऽर्थविशेषे उपसर्गविशेषे चाऽऽत्मनेपद विधीयते। महर्षिपाणिनिनाऽनुदात्तस्वरितेद्भ्यामेवैतयोर्निर्देश. कृतः। अनयोः प्रतिगण वर्तमानत्वात् सङ्ख्या न निर्धारिता। उक्तानामवान्तरगणानामप्यत्र प्रयोजनादिकं सङ्क्षेपतः प्रदर्शितम्।

एव शर्ववर्माचार्येण भ्वाद्यादिनवगणेषु पठिताना धातूना मध्ये अनुशासनभागे सप्तदश गणाः प्रयुक्ता., वररुचिकात्यायनेन त्रय इति विंशतिर्मुख्या अवान्तरगणाः। प्रकारान्तरेणाभीष्टसाधनाय चान्येऽपि जपादयो नव गणा उभाभ्या प्रयुक्ता इति कातन्त्रीये धातुपाठे एकोनत्रिंशदवान्तरगणा. सन्तीति वेदितव्यम्। अन्तर्गणाना धातुसङ्ख्या प्रदर्श्यते—

| गणाः | अन्तर्गणाः | धातुसङ्ख्या |
|---|---|---|
| भ्वादिः | १. द्युतादिः | २२ |
| ,, | २. वृतादिः | ०५ |
| ,, | ३ घटादिः (षानुबन्धाः) | १४ |
| ,, | ,, (मानुबन्धा अमन्तादीन् विहाय ) | ४५ |
| ,, | ४ ज्वलादि. | ३३ (३०) |
| ,, | ५. यजादिः | ०९ |
| अदादिः | ६ भादिः | १३ |
| ,, | ७. जक्षादिः | ०५ |
| ,, | ८. रुदादि | ०५ |
| ,, | ९ जुहोत्यादि | २४ |
| दिवादिः | १०. पुषादि. | ६४ |
| ,, | ११. रधादि. | ०८ |
| ,, | १२. मुहादिः | ०५ |
| ,, | १३. शमादि | ०८ |
| तुदादिः | १४. मुचादि. | ०८ |
| ,, | १५. तृन्फादिः | १८ |

( अष्टादशाना मध्येऽष्टसु नोपधेष्वेव नलोपाभाव उपपद्यते इत्यष्टावेव ते मन्तव्या इति टीकाकारादिमतम् )

| | | |
|---|---|---|
| तुदादिः | १६. कुटादिः | ३५ |
| क्र्यादिः | १७. प्वादि. | २२ |
| ,, | १८. ल्वादि. | २१ |
| चुरादिः | १९. युजादि. | ४४ |

( टीकाकारो दृभ सन्दर्भे ( चु० २८५ ), ढुढि अन्वेषणे ( चु० २९९ ) इति धातुद्वय न पठति तेन तन्मते ४२ मिता एव धातवो युजादौ बोद्धव्या )

| | | |
|---|---|---|
| चुरादिः | २०　अदन्ताः | ८४ |
| ,, | २१. रुचादि- | अनुदात्तानुबन्धा- |
| ,, | २२. यजादि- | स्वरितानुबन्धा |
| ,, | २३. जपादि- | ६ |
| ,, | २४　त्वरादि- | ९ |
| ,, | २५. प्रच्छादिः | ३ |
| ,, | २६. विदादि | विद-आदन्त-द्विप- |
| ,, | २७. भृजादि. | ७ |
| ,, | २८　मीनात्यादिः | ३ |
| ,, | २९. दादि- | ९ |

## प्रयोजनम्

१. द्युतादिः
पा० = लुङि विकल्पेन परस्मैपदभावः, द्युद्भ्यो लुङि (अ० १।३।९१)।
,, = च्लेरङादेश-, पुषादिद्युताद्यॢदित- परस्मैपदेषु ( अ० ३।१।५५ )।
कात० = यथासम्भवमुभयपदवत्त्वम्।
,, = अण् प्रत्ययः, पुषादिद्युताद्यॢकारानुबन्धार्तिसर्तिशास्तिभ्यश्च परस्मै ( ३।२।६२ )।

२. वृतादिः
पा० = विकल्पेन परस्मैपदम्, वृद्भ्य- स्यसनो- ( अ० १।३।९२ )।
,, = इडागमस्य निषेध-, न वृद्भ्यश्चतुर्भ्यः ( अ० ७।२।५९ )।
कात० = इट- प्रतिषेध-, अनात्मनेपदस्थात्तु वृतादेरिड् न स्ये सनि।
श्वस्तन्या च कृपैनैव कृतादेर्वापि सेऽसिचि॥
( कात० वृ० ३।७।१३ वा० )।

३. घटादिः
पा० = अङ्प्रत्यय-, षिद्भिदादिभ्योऽङ् ( अ० ३।३।१०४ )।
,, = उपधाया ह्रस्वः, मिता ह्रस्वः ( अ० ६।४।९२ )।
कात० = अङ् प्रत्ययः, षानुबन्धभिदादिभ्यस्त्वङ् ( ४।५।८२ )।
,, = उपधाया ह्रस्वः, मानुबन्धाना ह्रस्वः ( ३।४।६५ )।

४. ज्वलादिः
पा० = विकल्पेन णप्रत्ययः, ज्वलितिकसन्तेभ्यो णः ( अ० ३।१।१४० )।
कात० = ,, ,, , वा ज्वलादिदुनीभुवो णः ( ४।२।५५ )।

५. यजादिः

पा० = सम्प्रसारणम् , वचि-स्वपियजादीना किति ( अ० ६।१।१५ ) ।

कात० = सम्प्रसारणम् , स्वपि-वचि-यजादीना यण्परोक्षाशीःषु ( ३।४।३ ) ।

६. भादिः

पा० = — , आच्छीनद्योर्नुम् ( अ० ७।१।८० ) इत्यत्रावर्णान्तादेवाङ्गाद् 'भाती-भान्ती' इत्यादौ विकल्पेन नुम् विधीयते न तु भादिगणस्य निर्देशः ।

कात० = विकल्पेन नकाराभावः , तुदभादिभ्य ईकारे ( ३।२।३१ ) ।

७. जक्षादिः

पा० = अभ्यस्तसञ्ज्ञा, जक्षित्यादयः षट् ( अ० ६।१।६ ) ।

कात० = ,, ,, , जक्षादिश्च ( ३।३।६ ) ।

८. रुदादिः

पा० = इडागमः , रुदादिभ्यः सार्वधातुके ( अ० ७।२।७६ ) ।

,, = ईडागमः , रुदश्च पञ्चभ्यः ( अ० ७।३।९८ ) ।

कात० = ,, , रुदादिभ्यश्च ( ३।६।९१ ) ।

,, = इडागमः , रुदादेः सार्वधातुके ( ३।७।३ ) ।

९. जुहोत्यादिः

पा० = शपः श्लुः , जुहोत्यादिभ्यः श्लुः ( अ० २।४।७५ ) ।

कात० = द्विर्वचनम् , जुहोत्यादीना सार्वधातुके ( ३।३।८ ) ।

१०. पुषादिः

पा० = च्लेरङादेशः , पुषादिद्युताद्य्लृदितः ( अ० ३।१।५५ ) ।

कात० = अण्प्रत्ययः , पुषादिद्युताद्य्लृकारानुबन्धार्तिसर्तिशास्तिभ्यश्च परस्मै ( ३।२।२८ ) ।

११. रधादिः

पा० = वैकल्पिक इडागमः , रधादिभ्यश्च ( अ० ७।२।४५ ) ।

कात० = ,, ,, , रधादिभ्यश्च ( ४।६।८२ ) ।

१२. मुहादिः

पा० = हकारस्य घकारादेशः , वा द्रुह-मुह-ष्णुह-ष्णिहाम् ( अ० ८।२।३३ ) ।

,, = कवर्गादेशः , नशेर्वा ( अ० ८।२।६३ ) ।

कात० = विरामव्यञ्जनादावन्तस्य गकारः , मुहादीना वा ( २।३।४९ ) ।

१३. शमादि·
पा० = घिनुण्प्रत्ययः , शमित्यष्टाभ्यो घिनुण् ( अ० ३।२।१४१ ) ।
„ = दीर्घः , शमामष्टाना दीर्घः श्यनि ( अ० ७।३।७४ ) ।
कात० = „ , शमादीना दीर्घो यनि ( ३।६।६९ ) ।
„ = „ घिणिन्प्रत्यय, शमामष्टाना घिणिन् ( ४।४।२१ ) ।

१४. मुचादिः
पा० = नुमागमः , शे मुचादीनाम् ( अ० ७।१।५९ ) ।
कात० = नकारागमः , मुचादेरागमो नकारः स्वरादनि विकरणे ( ३।५।३० ) ।

१५. तृन्फादिः
पा० = नुमागमः , शे तृन्फादीनामुपसङ्ख्यान कर्तव्यम् ( का० वृ० ७।१।५९ वा० ) ।
कात० = अनि नानुषङ्गलोपः , अनिदनुबन्धानामगुणेऽनुषङ्गलोपः ( ३।६।१ ) ।
["जिघ्रतेर्वा" ( ३।५।४८ ) इत्यतोऽनुवृत्तस्य 'वा' इत्यस्य व्यवस्थितविभाषात्वात्] ।

१६. कुटादिः
पा० = ङिद्भावः , गाङ्कुटादिभ्योऽञ्णिन्ङित् ( अ० १।२।१ ) ।
कात० = गुणाभावः , कुटादेरनिनिचट्सु ( ३।५।२७ ) ।

१७. प्वादिः
पा० = ह्रस्वः , प्वादीना ह्रस्वः ( अ० ७।३।८० ) ।
कात० = „ , प्वादीना ह्रस्वः ( ३।६।८३ ) ।

१८. ल्वादिः
पा० = निष्ठातकारस्य नकारः , ल्वादिभ्यः ( अ० ८।२।४४ ) ।
कात० = „ „ , ल्वाद्योदनुबन्धाच्च ( ४।६।१०४ ) ।

१९. युजादिः
पा० (धृषादिः) = विकल्पेन णिच्प्रत्ययः , आ धृषाद् वा (अ०, ग० सू०, चु० २००) ।
कात० = विकल्पेनेन्प्रत्ययः , 'अथ विकल्पेनन्ताः' इति चुरादौ यजेः पूर्वं वचनम् ।

२०. अदन्ताः
उभयत्रोपधावृद्ध्यभावः ।

२१. रुचादिः
पा० = आत्मनेपदम् = अनुदात्तङित आत्मनेपदम् ( अ० १।३।१२ ) ।
कात० = „ = कर्तरि रुचादिङानुबन्धेभ्यः ( ३।२।४२ ) ।

२२. यजादिः
पा० = आत्मनेपदम् , स्वरितञितः कर्त्रभिप्राये क्रियाफले ( अ० १।३।७२ ) ।
कात० = उभयपदम् , इन्ञ्यजादेरुभयम् ( ३।२।४५ ) ।

२३. जपादिः
पा० = नुगागमः , जपजभदहदशभञ्जपशां च ( अ० ७।४।८६ ) ।
कात० = अनुस्वारः , जपादीनां च ( ३।३।३२ ) ।

२४. त्वरादिः
पा० = अदादेशः , अत् स्मृदृत्वरप्रथम्रदस्तृस्पशाम्, विभाषा वेष्टिचेष्ट्योः, ई च गणः ( अ० ७।४।९५-९७ ) ।
कात० = ,, , अत् त्वरादीनां च ( ३।३।३७ ) ।

२५. प्रच्छादिः
पा० = सम्प्रसारणम् , ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ( अ० ६।१।१६ ) ।
कात० = परोक्षायां सम्प्रसारणनिषेधः , प्रच्छादीनां परोक्षायाम् ( ३।४।१६ ) ।

२६. विदादिः
पा० = झेर्जुसादेशः , सिजभ्यस्तविदिभ्यश्च, आतः, द्विषश्च ( अ० ३।४।१०९, ११०, ११२ ) ।
कात० = अन उसादेशः , अन उस् सिजभ्यस्तविदादिभ्योऽभुवः ( ३।४।३१ ) ।

२७. भृजादिः
पा० = अन्त्यस्य षकारादेशः , व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ( अ० ८।२।३६ ) ।
कात० = ,, ,, , भृजादीनां षः ( ३।६।५९ ) ।

२८. मीनात्यादिः
पा० = आकारादेशः , मीनातिमिनोतिदीङां ल्यपि च ( अ० ६।१।५० ) ।
शर्व० = ,, , मीनातिमिनोतिदीङां गुणवृद्धिस्थाने ( ३।४।२२ ) ।
कात्या० = ,, , मीनात्यादिदादीनामा ( ४।१।३९ ) ।

२९. दादिः
पा० = ईकारादेशः , घुमास्थागापाजहातिसां हलि ( अ० ६।४।६६ ) ।
,, = एकारादेशः , एर्लिङि, वाऽन्यस्य संयोगादेः ( अ० ६।४।६७, ६८ ) ।
,, = ईकाराद्यादेशनिषेधः , न ल्यपि ( अ० ६।४।६९ ) ।
शर्व० = ईकारादेशः , दामागायतिपिबतिस्थास्यतिजहातीनामीकारो व्यञ्जनादौ ( ३।४।२९ ) ।

कात्या० = आकारादेश , मीनात्यादिदादीनामा ( ४।१।३९ ) ।

धातुषु विंशतिरनुबन्धा विशेषकार्यविधानाय सयोजिता दृश्यन्ते, तेषा प्रयोजनमिह प्रदर्श्यते—

१. आ ( टुर्छा कौटिल्ये, भू० ५७ ) ।
पा० = निष्ठाया नित्य इडागमस्याभावः , आदितश्च ( अ० ७।२।१६ ) ।
,, = ,, वैकल्पिक ,, , विभाषा भावादिकर्मणो· ( अ० ७।२।१७ ) ।
कात० = ,, ,, ,, , भावादिकर्मणोर्वा ( ४।६।६२ ) ।
,, = ,, नित्य ,, , आदनुबन्धाच्च ( ४।६।९१ ) ।

२. इ ( कुथि पुथि युथि लुथि हिंसासक्लेशनयोः, भू० ७ )
पा० = नुमागमः , इदितो नुम् धातोः ( अ० ७।१।५८ ) ।
कात० = नकारागमः , अनिदनुबन्धानामगुणेऽनुषङ्गलोपः ( ३।६।१ ) इत्यत्रेदनुबन्धानामनुषङ्गलोपस्य वर्जनाद् विज्ञायते—इदनुबन्धाना नकारागमो भवतीति वृत्तिकार-टीकाकारयोरभिमतम् ।

३. इर् ( श्च्युतिर् क्षरणे, भू० ५ ) ।
पा० = वैकल्पिकश्च्लेरङादेशः , इरितो वा ( अ० ३।१।५७ ) ।
कात० = अद्यतन्यामण्प्रत्यय· , इरनुबन्धाद् वा वक्तव्यम् ( कात० वृ० ३।२।२८ वा० ) ।

४. ई ( चिती संज्ञाने, भू० २ ) ।
पा० = इडागमस्य निषेधः , श्वीदितो निष्ठायाम् ( अ० ७।२।१४ ) ।
कात० = ,, ,, , न डीश्वीदनुबन्धवेटामपतिनिष्कुषोः (४।६।६०) ।

५. उ ( षिधु गत्याम्, भू० ८ ) ।
पा० = विभाषा इडागम , उदितो वा ( अ० ७।२।५६ ) ।
कात० = ,, ,, , उदनुबन्धपूक्लिशा क्त्वि ( ४।६।८४ ) ।

६. ऊ ( षिधू शास्त्रे माङ्गल्ये च, भू० ९ ) ।
पा० = विकल्पेनेडागमः , स्वरतिसूतिसूयतिधूञूदितो वा ( भू० ७।२।४४ ) ।
कात० = ,, ,, , स्वरतिसूतिसूयत्यूदनुबन्धात् ( ४।६।८३ ) ।

७. ऋ ( खादृ भक्षणे, भू० १० ) ।
पा० = उपधाह्रस्वस्य निषेधः , नाग्लोपिशास्वृदिताम् ( अ० ७।४।२ ) ।
कात० = ,, ,, , न शास्वृदनुबन्धानाम् (३।५।४५) ।

८ लृ ( गम्लृ सृप्लृ गतौ, भू० २७६ ) ।
पा० = च्लेरङादेशः, पुषादिद्युताद्य्लृदितः ( अ० ३।१।५५ ) ।
कात० = अद्यतन्यामण् प्रत्ययः पुषादिद्युताद्य्लृकारानुबन्धार्तिसर्तिशास्तिभ्यश्च (३।२।२८) ।
परस्मै

९. ए ( कटे वर्षावरणयोः, भू० ८३ )
पा० = वृद्धिनिषेधः, ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ( अ० ७।२।५ ) ।
कात० = दीर्घनिषेध , एदनुबन्धाना च ( कात० वृ० ३।६।९-वा० ) ।

१०. ओ ( ओ प्यायी वृद्धौ, भू० ४११ ) ।
पा० = निष्ठातकारस्य नकारः, ओदितश्च ( अ० ८।२।४५ ) ।
कात० = ,, ,, , ल्वाद्योदनुबन्धाच्च ( ४।६।१०४ ) ।

११. क् ( इक्* स्मरणे, अ० १२, ओहाक्† त्यागे, अ० ७१ ) ।

* { पा० = विशेषणम्, अधीगर्थदयेशां कर्मणि ( अ० २।३।५२ ) ।
,, = , , इण्वदिकः ( का० वृ० २।४।४७ वा० ) ।
कात० = ,, , इण्वदिकोऽपि ( कात० वृ० ३।४।८४ वा० ) }

† { पा० = 'ओहाङ्-ओहाक्' इति द्वयोरेव ग्रहणम्, हश्च व्रीहिकालयो ( अ० ३।१।१४८ ) ।
कात० = ,, ,, ,, ,, ,, , ह कालव्रीह्योः (४।२।६४) । }

१२. ङ् ( कुङ् खुङ् गुङ् घुङ् ङुङ् उङ् शब्दे, भू० ४५० ) ।
पा० = आत्मनेपदम्, अनुदात्तङित आत्मनेपदम् ( अ० १।३।१२ ) ।
कात० = ,, , कर्तरि रुचादिङानुबन्धेभ्यः ( ३।२।४२ ) ।

१३. ञ् ( वेञ् तन्तुसन्ताने, भू० ६११ ) ।
पा० = कर्त्रभिप्राये क्रियाफले आत्मनेपदम्, स्वरितञितः कर्त्रभिप्राये क्रियाफले ( अ० १।३।७२ )
कात० = उभयपदम्, इन्ञ्यजादेरुभयम् ( ३।२।४५ ) ।

१४. ञि ( ञितृष पिपासायाम्, दि० ६६ ) ।
पा० = क्तप्रत्ययो वर्तमानार्थे, ञीतः क्तः ( अ० ३।२।१८७ ) ।
कात० = ,, ,, , ञ्यनुबन्धमतिबुद्धिपूजार्थेभ्यः क्तः ( ४।४।६६ ) ।

१५. ट् ( धेट् पाने, भू० २६४ ) ।
पा० = ङीप्प्रत्यय , टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ( अ० ४।१।१५ ) ।
कात० = ईप्रत्ययः, नदाद्यन्चिवाह्यन्स्यन्तृसखिनान्तेभ्य ई ( २।४।५० ) ।

१६. टु ( टुनदि समृद्धौ, भू० २५ ) ।
पा० = अथुच्प्रत्यय , ट्वितोऽथुच् ( अ० ३।३।८९ ) ।
कात० = अथुप्रत्यय , ट्वनुबन्धादथु ( ४।५।६७ ) ।

१७. डु ( डुलभष् प्राप्तौ, भू० ४७२ ) ।
पा० = क्त्रिप्रत्यय , ड्वितः क्त्रिः ( अ० ३।३।८८ ) ।
कात० = त्रिमक्प्रत्यय , ड्वनुबन्धात् त्रिमक् तेन निर्वृत्ते ( ४।५।६८ ) ।

१८. ण् ( दाण् दाने, भू० २६६ ) ।
पा० = दाणो यच्छादेश , पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः (अ० ७।३।७८ ) ।
कात० = ,, ,, , दाणो यच्छ ( ३।३।७५ ) ।

१९. प् ( दैप् शोधने, भू० २६३ ) ।
पा० = घुसंज्ञाया निषेध , दाधा घ्वदाप् ( अ० १।१।२० ) ।
कात० = दासंज्ञाया निषेध , अदाप् दाधौ दा ( ३।१।८ ) ।

२० ष् ( त्रपूष् लज्जायाम् , भू० ३८३ ) ।
पा० = अङ् प्रत्यय , षिद्भिदादिभ्योऽङ् ( अ० ३।३।१०४ ) ।
कात० = , , पानुबन्धभिदादिभ्यस्त्वङ् ( ४।५।८२ ) ।

अनुबन्धसङ्ग्रह

> इवर्णोवर्ण-आदेदोदृदॢदिरूञिटुटञडुषाः ।
> क-ण-ङ-पाश्चैव धातूनामनुबन्धाः प्रकीर्तिताः ॥ इति

अत्र 'चिरि जिरि' ( सु० १७ ) इत्यादिषु 'स्तृ' भू० २७४) इत्यादिष्वेकस्वरसपृक्तेषु च धातुषु इकारादिरनुबन्धो नाद्रियते, यथोक्तम्—

> दीधी-वेवी-दरिद्रोर्णु-जागर्तीनां चिरेर्जिरेः ।
> एकस्वरकधातूनां नानुबन्धो विधीयते ॥
> ( मनो०, अ०, धा० ६६,-उद्धृतः ) इति ।

धातुपाठेऽस्मिन् पादोनाष्टादशशतमिता ( १७७५ ) धातवो दण्डकरीत्या प्रायेण पठिताः, तत्र प्रतिगण परस्मैपदि-आत्मनेपदि-उभयपदिनो धातव एकत्रैव योजिता । रमानाथशर्मणा स्वीयव्याख्याने धातूनां बहूनि पाठान्तराणि मतान्तरनिर्देशपुरस्सरं प्रदर्शितानि । एकैकस्य हि धातोर्लोकप्रयोगानुसारेण सम्भावितानां बहूनामर्थानां पाठोऽशक्य-

त्वान्नोचित इत्येक एव प्रसिद्धोऽर्थ [1]पठ्यते। षट अवयवे ( भ० ६७ ), गडि वदनैकदेशे ( भू० १३१ ) इत्यादौ धात्वर्थनिर्देशो द्रव्यवाचकैः शब्दैः कृतस्तत्र तद्द्रव्यसमवेतक्रियैव धात्वर्थोऽवगन्तव्य.[2]। पूर्वाचार्येण केनचिद् द्रव्यार्थनिर्देशे कृतेऽपि कथं न परवर्तिभिर्धातुकारैस्तत् सशोध्य क्रियार्थो दर्शित इत्याशङ्कायामेव समाधेयम्—पूर्वाचार्यमतप्रदर्शनाय तदीयः पाठः सरक्षित आचार्यैरिति। कृत्येनानेन धातुकाराणामज्ञतैव परिलक्ष्यते। उक्त च—

नाम्नः सत्त्वप्रधानस्य धातुकारोऽज्ञ एव हि।
शब्द-वक्त्रैकदेशादेर्धात्वर्थत्वमवोचत[3] ॥

(मनो०, भू० १३१) इति।

'अवोचत' इत्यत्राऽऽत्मनेपद कर्मव्यतिहारे प्रतीयते, तेन धातुकारा यत् परस्पर क्वचिद् वक्त्रैकदेशादिना द्रव्येण धात्वर्थं निर्दिशन्ति तेन सर्वे ते अज्ञा एवेत्यर्थः। रमानाथाचार्यः 'पर' शब्देन प्राय. पाणिनिमेव स्मरति[4]।

कृत्प्रकरणे वररुचिकात्यायनो मीनात्यादि—दादीति सौत्र गणद्वय निर्दिशति—"मीनात्यादि-दादीनामा" ( ४।१।३९ ) इति। मीनात्यादिः=मीनाति-मिनोति-दीङ.। दादिः=दा-मा-गायति-पिबति-स्था-स्यति-जहातय.। एतद् गणद्वितय सौत्रमेव मन्तव्यं न तु धातुपाठक्रमानुसारीति सहेतुक व्याख्याकारा निर्दिशन्ति। तद् यथा—"**मीङादि-दादीनामिति सिद्धे यन्मीनातिग्रहणं तत् स्वरूपपरिग्रहार्थम्, मीनातिशब्द आदिर्येषामिति विग्रहः। तेन धातुगणो न गृह्यते किन्तर्हि सौत्रः। अत्र हि मीनातिशब्दस्याऽऽदौ विद्यमानत्वात् तत्सहचरिता दादयोऽपि सूत्रपठिता एव गृह्यन्ते इत्याह-मीनातीत्यादि**" ( कात० वृ० प० ४।१।३९ ) इति।

शर्ववर्माचार्येण "मीनातिमिनोतिदीङा गुणवृद्धिस्थाने" ( ३।४।२२ ) इति सूत्रे **मीनात्यादिः**, "दामागायतिपिबतिस्थास्यतिजहातीनामीकारो व्यञ्जनादौ" ( ३।४।२९ ) इति सूत्रे **दादिः** पठितः। एव तत्र पठितानि धातुस्वरूपाण्यभिलक्ष्य सौत्रत्वमुच्यते गणयोरनयोरिति विज्ञेयम्।

---

१ क्रियावाचित्वमाख्यातुमेकैकोऽर्थ प्रदर्शितः।
प्रयोगतो हि मन्तव्या अनेकार्था हि धातवः॥ ( मनो०, चु० २९९ )।
निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रय·।
अनेकार्था स्मृता सर्वे पाठस्तेषा निदर्शनम्॥ ( पञ्जी ३।३।२४ )।

२. यत्र यत्र द्रव्यनिर्देशस्तत्र तत्समवेता क्रिया लक्ष्यते इति मैत्रेय ( मनो०, भू० ९७ ) इति।

३. द्र०—व्या० द० इति०, पृ० ४०७।

४. स्वरार्थं इति पर, अस्यायमभिप्राय—शप् कर्तरीति सूत्रेण शपि, तुदादिभ्यः श इत्यनेन च शप्रत्यये उच्चारणगतभेदोऽस्तीति ( मनो०, तु० ३२ ) इति।

कातन्त्रीयधातुषु मनोरमाटीकागताः केचिद् विचाराः

१—गत्यर्थकस्य षिधुधातोः ( मू० ८ ) निरनुबन्ध एव पाठो निष्ठायामिडर्थं कार्यस्तेन काशिकाप्रसाधित सिधितमित्यप्युपपत्स्यते ।

२—शब्दार्थकनर्दधातु केचिण्णोपदेश मन्वते। यद्यपि पाणिनीयसम्प्रदाये महाभाष्यकारेण[1] काशिकाकारेण[2] च नर्दधातुर्णोपदेशेभ्य पृथक् कृतस्तथापि श्रूयते—सङ्क्षिप्तसारव्याकरणे णोपदेशोऽयमुच्यते इति, तदेव मतमत्रोपस्थापितमिति सल्लक्ष्यते। णोपदेशफल तूपसर्गादसमासे नकारस्य णत्वमिति टीकाकारः—**"अपिशब्दविषयास्तु उपसर्गाण्णोपदेशस्य, प्रणमति, परिणमति, प्रणायक, परिणायकः"** ( कात० वृ० टी० २।४।४८ ) इत्यादि ।

३—अर्द गतौ याचने च ( मू० १६ ) इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् पीडार्थोऽपि गृह्यते, प्रयुक्तश्चापि—

'रक्षः सहस्राणि चतुर्दशार्दीत्' इत्यादौ ।

४—खर्दधातुरिह ( मू० २० ) दशनार्थे, पाणिनीये तु दन्दशूकार्थे पठ्यते। 'खर्दति मूलक पान्थः' इत्युद्धृत्य टीकाकारेण दशनशब्दस्य दन्तकर्तृकक्रियारूपोऽर्थोऽभिहितः दशनशब्दस्य प्रयोगेण सामान्या दशनक्रिया ज्ञायते, दन्दशनशब्दस्य तु प्रयोगेण दशनक्रियायामतिशयस्तेन च गर्हितत्वमाख्यायते। अयं भाव —येषा प्राणिना दशनस्य स्वभावस्ते एव खर्दनक्रियाविशिष्टा उच्यन्ते नेतरे। गर्हितत्वद्योतनस्येष्टत्वाद् दन्दशूकार्थे एव धातोरस्य पाठ. समीचीनः। दुर्गसिंहस्यापि दन्दशनमेवार्थोऽभिमत इति टीकाकारोऽनुमिनोति ।

५—विदि अवयवे ( २१ ) धातोरस्य केवलम् उप्रत्ययान्तो बिन्दुरितिप्रयोगः सम्मतष्टीकाकारस्य, असम्मताश्च त्याद्यन्ताः प्रयोगाः। काश्यपमते 'अति-अदि-इदि-विदि-गडि' इत्येतेषा पञ्चधातूना तिङन्ताः प्रयोगा न भवन्ति, सम्मतामतेन विदिभिद्योरेव तिङन्ता प्रयोगा न सन्तीति सायणाचार्यो निर्दिशति। प्रायेणाचार्यास्तिङन्तरूपाण्युदाहरन्त्येषाम्। रमानाथेनापि 'अति-अदि-इदि' इत्येतस्य धातुत्रितयस्य त्याद्यन्तरूपाण्युदाहृतानि ।

६—कुत्सार्थके णिदिधातौ ( मू० २४ ) णकारोपदेशो वैचित्र्यार्थ उक्तः। 'प्रनिनिन्दिषति नो भूय.' इति भट्टिप्रयोगदर्शनात् त्यादिप्रत्ययेष्वपि मैत्रेयाऽऽभरणसम्मताकारा विकल्पेन णत्वविधानमङ्गीकुर्वन्ति। तन्मत **"कृत्यचः"** ( अ० ८।४।२६ ) इत्यतः

१ सर्वे नादयो णोपदेशा , नृतिनन्दिनर्दिनक्किनाटिनाथृनाधृनॄवर्जम् ( म० भा० ६।१।६५ )।

२. सर्वे नादयो णोपदेशाः, नृनन्दिनर्दिनक्किनाटिनाथृनाधृवर्जम् ( का० वृ० ६।१।६५ )।
कातन्त्रवृत्तिकारादयस्तु नव धातून् णोपदेशान् नाङ्गीकुर्वन्ति, यथोक्तम्—
सर्वे नादयो णोपदेशा', नृतिनन्दिनर्दिनक्किनाटिनाटिननाथृनाधृवर्जम् (कात० वृ० ३।८।२५ )।

कृतिपदस्यानुवर्तनात् **"वा निंसनिक्षनिन्दाम्"** ( अ० ८।४।३३ ) इत्यनेन वैकल्पिकणत्व कृत्प्रत्ययेष्वेव भवतीति व्याख्यानात् सायणाचार्येण निरस्तम्। णोपदेशत्वादस्य नित्ये णत्वे प्राप्ते **"वा निंसनिक्षनिन्दाम्"** ( अ० ८।४।३३ ) इत्यनेन विकल्पविधानं युज्यते इति णोपदेश· सार्थकः।

७—समृद्ध्यर्थकस्य टुनदिधातोः ( भू० २५ ) 'नन्दते च कुलं पुसाम्' ( मार्क० पु० ) इत्यत्राऽऽत्मनेपदरूप गणकृतस्यानित्यत्वादित्युक्तम्।

८—अपनयनार्थको लुन्चधातु· ( भू० ४७ ) पाणिनीयकातन्त्रयोर्निष्ठायामिड्-विधानाय निरनुबन्ध एवाभिमत·। उदित ( उकारानुबन्धम् ) पठता मत सायणा-चार्येणानार्षमुद्घोषितम्। **"उदितो वा"** ( अ० ७।२।५६ ) इत्यनेन क्त्वाप्रत्यये इड्विकल्पे सिद्धे क्तप्रत्यये **"यस्य विभाषा"** ( अ० ७।२।१५ ) इत्यनेनेडभावे **"राजदन्तादिषु परम्"** ( का० वृ० २।२।३१ ) इत्यत्र पठित 'लुञ्चितम्' ( मृष्टलुञ्चितम् ) इति पद न सिध्येदित्यर्थः।

गत्यर्थक-षस्जधातोः ( भू० ४६ ) षश्चेति पाठान्तर प्रस्तौति रमानाथः। सायणाचार्यस्तु **"तमजिह्वा असश्चत"** इति प्रयोगमुपन्यस्य सश्चीति धातु मतान्तरेणो-पन्यस्यति ( मा० धा० वृ०, भ्वा० १२१ )। 'यदभिप्रायेषु सज्जन्ते' इति भाष्यप्रयोगा-दुभयत्र धातुरयमात्मनेपद्यपि स्वीकृतः।

१०—स्तेयकरणार्थकस्य ग्लुचुधातोः ( भू० ५० ) मतान्तरेण गत्यर्थमपि स्वमतेन धातोरनेकार्थत्वमवलम्ब्य समर्थयति।

११—म्लेछधातुः ( ५२ ) व्यक्तवागर्थे पठितोऽपि **"म्लेच्छो ह वा एष यदप-शब्दः"** ( मा० भा०, पस्प० ) इति भाष्यवचनेनाव्यक्तवागर्थक एष धातुरिति टीकाकारस्य हृदय प्रतिभाति। तथा च **"अन्तर्वेद्यामसौ विद्वान् न म्लेच्छति धृतव्रतः"** इति कविरहस्ये हलायुध। चौरादिकोऽपि [1]म्लेच्छधातुः ( चु० ७६ ) मूले व्यक्तवागर्थ एव पठितः।

१२—पाणिनीये उञ्छार्थकस्य उछिधातोर्विवासार्थकस्य उछीधातोश्च भ्वादौ पाठस्य प्रयोजनम् **"अनुदात्तौ सुप्पितौ"** ( अ० ३।१।४ ) इत्यनेनानुदात्तस्वर इत्युक्त व्याख्या-कारैः सायणादिभिः। कातन्त्रव्याकरणस्य लौकिकप्रयोगानुशासनफलकत्वात् स्वरकार्या-भावेन भ्वादौ पाठो नावश्यक इत्येव हृदि कृत्वाऽऽह रमानाथ·—**"उछि उछी इह प्रमादात् पठितौ तुदादिपाठादेव रूपद्वयस्य सिद्धत्वात्"**( भू० ६२ ) इति।

१३—पठधातुः ( भू० १११ ) न केवलं स्वतन्त्ररूपेणाध्ययने वर्तते, किञ्चार्थतः शब्दतश्च गुरुमुखाद् ग्रहणेऽपि वर्तते। यथा—पठति शास्त्र शिष्य इत्याह व्याख्याकारः।

१. ह्लप व्यक्तायां वाचि, म्लेछ च ( चु० ७८, ७९ )।

१४—हिंसाभापणार्थकौ शुभ-शुम्भधातू ( भू० १४० ) द्राविडा दन्त्यादी पठन्ति, तन्मत गदसिंहवचनानुसारेणानार्षमिति सङ्केतितम्[1]। पाणिनीयेऽपि नैतौ दन्त्यादी पठ्येते।

१५—"नामिनो र्वोरकुर्छुरोर्व्यञ्जने" ( ३।८।१४ ) इत्यनेन व्यञ्जनादीनामेव धातूना र्वोरुपधाया दीर्घो भवति न तु स्वरादीनामिति कुलचन्द्रमतमाद्रियमाण ईर्ष्यार्थक-षुक्ष्यंधातो. ( भू० १६३ ) ह्रस्वादिपाठेऽङ्गीकारेऽपि 'ईर्ष्य-ईर्ष्य' इति धात्वोर्दीर्घादिमेव पाठ मनुते टीकाकार[2]। मूले तु ह्रस्वादी पठितौ।

१६—जयार्थक-जिधातोः ( भू० १९१ ) पञ्चम्या ( लोट. ) एकवचनबहुवचनयोः प्रयोगो भाषाया न जायते इति शरणदेवो मनुते—भाष्यादौ तत्प्रयोगस्यानुक्तत्वात्। तु-स्थाने तातण. ( =तातङः ) प्रयोगस्तु जायते एव। यथा—

> उत्पन्नसर्वसंकल्पो नष्टनिःशेषचेष्टितः।
> भावगम्यनय. कोऽपि जयताद् वागगोचरः॥ इति।

पञ्चम्या. ( लोट. ) उत्तमपुरुषे प्रयोगाभावस्य ज्ञापनायोच्यते—

> जयतेर्नास्ति पञ्चम्या उत्तमः पुरुष. क्वचित्।
> वचेरन्त्यन्तुशन्तृङ्डां प्रयोगो नाभिधीयते॥
> ( द्र०—मनो०, भू० १९१ ) इति।

१७—पालनार्थे एव पठितोऽपि अवधातु ( भू० २०२ ) अन्यैः ( पाणिनीयैः ) 'रक्षण-गति-कान्ति-प्रीति-तृप्ति-अवगम-प्रवेश-श्रवण-सामर्थ्य-याचन - क्रीडा - इच्छा - दीप्ति-अवाप्ति-आलिङ्गन-हिंसा-दहन-भाव वृद्धि' इत्यूनविंशत्यर्थेषु पठ्यमानष्टीकाकारस्य रमानाथ-स्याभिमतः। प्रीतौ यथा—'न मामवति सद्वीपा' इति।

१८—स्मृतिध्यानयोर्भेदेऽपि[3] भेदानादरणात् 'स्मृ-ध्यै' इति धातुद्वयस्य (भू० २७२) चिन्तार्थे एव पाठः कृत।

१९—श्रवणार्थकस्य श्रुधातोः ( भू० २७८ ) स्वादौ पाठस्य युक्तत्वेऽपि भ्वादौ पाठस्तस्य "श्रुवः शृ च" ( अ० ३।१।७४ ) इत्यस्यानित्यत्व बोधयति। तथा च दृश्यते

---

१. दन्त्यादी इति द्राविडा, सुम्भो निसुम्भश्चासुर इति व्याचक्षते च, तदनार्षमिति गदसिंह—तालव्यस्यैवेष्टत्वात् ( मनो०, भू० १४० )।

२. नामिनो र्वोरित्यादिना सर्वत्र दीर्घ इति गोविन्दभट्टः। कुलचन्द्रस्तु व्यञ्जनादेरेव दीर्घं, स्वरादेर्न स्यात्, अतो गणकारोऽपीदमुपेक्ष्य ऊर्जप्रभृतीना दीर्घत्वमधीतवानित्याह ( मनो०, भू० १६३ ) इति।

३. यद्यपि पूर्वानुभूतार्थविषयक ज्ञान स्मृतिः, हितानाप्तेर्ध्यान चिन्ता। अत्र करणसाधनेन ध्यान-पदेनानुकूलप्रयत्नाभिध्यानम्। यदाह मणिकण्ठ—प्रयत्नविशेषश्चिन्ता, ज्ञानविशेषः स्मृति.। अन्यत्र तु चिन्तानन्तरं स्मृतिस्ततो ध्यान पुन पुनरनुसंधानमिति क्रमस्तथापि भेदानादरणा-देकार्थतोक्ता—**स्मरामि वानीरगृहेषु सुप्तम्** इति रघुवंशे ( १३।३५ )। ( मनो०, भू० २७२ ) इति।

प्रयोगः—'श्रवति राक्षसनिःस्वनमादृतः' इति। अत्र श्रुधातोः 'शृ' इत्यादेशाभावः। कैश्चित् भ्वादादेव पठ्यते।

२०—स्पर्धधातुः ( भू० २९३ ) सहर्षार्थे पठितो न तु सङ्घर्षार्थे, सङ्घर्षस्य स्पर्धार्थकत्वेऽपि घर्षणार्थत्वात्। तथा चोक्तम्—

"स्पर्धासंघर्षयोरुक्तः संघर्षः शब्दवेदिभिरिति व्याडिः" इति। सङ्घर्षः= परपराभवेच्छा। सम्—पूर्वस्य हृषु अलीके ( भू० २३१ ) इत्यस्य घञि रूपम्। पाणिनीये सङ्घर्षार्थे पठ्यते।

२१ पाणिनीये पठितः क्षुदिधातुराप्लवनार्थे ( भू० २६७ ) पठ्यते, क्षदिस्क्षुदीति पाठान्तरमपि प्रदर्श्यते। आप्लवनार्थकधातूना रूपाणीत्थ वेदितव्यानि—

क्षुणाति च क्षुणीते च क्षुणोत्याप्लवनेऽपि च।
क्षन्दते क्षुन्दते वापि षडाप्लवनवाचिनः॥

इति भट्टमल्लः।

२२—क्लिदि परिदेवने ( भू० २९, ३०३ ) इत्यस्योभयपदिष्वेव पाठादुभयपदित्वे सिद्धे परस्मैपदिष्वात्मनेपदिषु च पृथक् पाठः पाणिनीयतन्त्रप्रसिद्ध्या कृतः। अफलवत्यपि कर्तर्यात्मनेपद फलवत्यपि कर्तरि च परस्मैपद यथा स्यादित्यर्थः।

२३—बृहिर् शब्दे च ( भू० २४८ ) इति धातुर्न कात्यायनस्य सम्मतः—"बृंहेः स्वरेऽनिटि वा" ( ४।१।६८ ) इति सूत्रेण नलोपस्य विधानात्। अन्यथा इकारानुबन्धस्य धातोर्बृंहक इति रूपे, अनिकारानुबन्धस्य च बृहिर्धातोर्बर्हक इति च रूपे सिद्धे सूत्रकरण व्यर्थं स्यात्। 'बर्हा[1]' इत्येतस्य सिद्धये सूत्रे कृते 'स्वरे अनिटि' इति पदद्वयस्य निरर्थकत्वाद् व्याख्याकारैर्दुर्गादिभिः 'बृंहकः, बर्हकः' इत्याद्युदाहृतत्वाच्च नाय धातुः सूत्रकारस्य कात्यायनस्य सम्मत इति प्रतिभाति।

२४—सेचनार्थे पठित· षचधातु· (भू० ३३८) "ब्रुविशासिगुणेन च यत् सचते" ( म० भा० १।४५१ ) इत्युद्धरणेन समवायार्थेऽपि सम्मतष्टीकाकारस्य।

२५—तिजधातु· ( भू० ३४८ ) निशाने क्षमाया चेत्यर्थे पठ्यते, तत्र निशानार्थे त्यादिप्रत्यया न भवन्ति।

२६—स्फुट विकसने इत्यस्योभयपदिष्वेव पाठादुभयपदप्रयोगे सिद्धे परस्मैपदिषु ( भू० ११० ) आत्मनेपदिषु ( भू० ३५२ ) च पृथक्त्वेन पाठादफलवत्यपि कर्तर्यात्मनेपद फलवत्यपि च कर्तरि परस्मैपद सम्पद्यते।

२७—भ्रमणार्थकयो घुण-घुर्णेत्यनयोर्धात्वोः (भू०३६६, तु०४८) भ्वादावात्मनेपदिषु तुदादौ च परस्मैपदिषु पाठेनाकर्त्रभिप्राये क्रियाफले आत्मनेपदम्, कर्त्रभिप्राये च क्रियाफले

१ बृंहबृह्योरमी साध्या बृंहबर्हादयो यदि।
तदा सूत्रेण वैयर्थ्यं न बर्हा भावके स्त्रियाम्॥
( द्र०—क० च० ४।१।६८ ) इति।

परस्मैपदं जायते इति पाणिनीयानां मतमनुसृत्यात्रापि तत्रैव पाठः कृतः, अन्यथोभयपदिष्वेव पाठः क्रियेत ।

**२८—पणधातुः** ( भू० ४०१ ) व्यवहारार्थकः स्तुत्यर्थकश्च । तत्र स्तुत्यर्थे एवाऽऽय-प्रत्ययो भवतीति काशिकाकारमतमनुसृतम् । तत्र चोक्तम्—"**स्तुत्यर्थे पनिना साहचर्यात् तदर्थः पणिः प्रत्ययमुत्पादयति न व्यवहारार्थः**" ( गुपूधूपविच्छिपणिपनिभ्य आयः ३।१।२८ ) इति । व्यवहारार्थे आयप्रत्ययाभावः कुमारसम्भवे दृश्यते, यथा—"**जित्वा परीरम्भमथाऽधरोष्ठैः पुनः पणस्वेत्युदिता भवेन**" इति । भाषावृत्तिकारादिभिर्मतमिदमनार्षमुद्घोषितम् ।

**२९—क्षमूष् सहने** ( भू० ४०४ ) इत्यस्य घटादिपाठेनैव षानुबन्धत्वे सिद्धे पृथक् पाठो गणकार्यस्यानित्यत्वं विज्ञापयति । उदाहरणमन्वेषणीयं वर्तते ।

**३०—क्नूयी धातुः** ( भू० ४११ ) शब्दार्थेऽत्र पठितः, पाठान्तराणि तदुदाहरणानि चोपस्थापयन् रमानाथस्तत्पक्षीयोऽपि प्रतिभाति । रामाचार्यमते[1] क्नुयी धातुरिति विज्ञापयन्नुदाहरणाभावात् तन्मतं नाद्रियते ।

**३१—कल्लधातुः** ( भू० ४२० ) कातन्त्रे शब्दार्थे[2], माधवीयधातुवृत्तावव्यक्तशब्दार्थे, क्षीरतरङ्गिण्या चाशब्दार्थे ( तूष्णीम्भावे ) पठ्यते । गजाननबालकृष्णपल्सुलेमहोदयेन कातन्त्रमतेऽपि प्रदर्शितोऽव्यक्तशब्दार्थः[3] पाणिनीयधातुपाठसमीक्षायामप्यनुसृतः ( पृ० ७३ ) । यद्यपि प्राचीनकातन्त्रधातुपाठेऽयमप्यर्थः सम्भाव्यते तथापि चान्द्रसम्मतोऽव्यक्तशब्दार्थ इति रमानाथवचनेन तच्चिन्त्यं प्रतीयते ।

**३२**—सेवनार्थकस्य **षेवृधातोः** ( भू० ४२२ ) आत्मनेपदिषु पाठेऽपि गणकृतस्यानित्यत्वात् परस्मैपदेऽपि प्रयोगो जायते, यथा—

**नीचं समृद्धमपि सेवति नीच एव ।**
**स्वाधीने विभवेऽप्यहो नरपतिं सेवन्ति किं मानिनः ।** इत्यादि ।

**३३**—कुलचन्द्र-रत्नमतिमतेन कुत्सार्थे दीप्त्यर्थे चाविशेषात् **कासृधातोः** ( ४४० ) आम्प्रत्ययो भवति, शरणदेवस्तु कुत्सार्थे एवाऽऽम्विधानमनुमन्यते । तेन कुत्सार्थे '**कासाञ्चक्रे**' इति, दीप्त्यर्थे च '**चकासे**' इति रूपम् ।

---

१. मुग्धबोधस्य व्याख्यातारः रामतर्कवागीशमुद्दिश्य सम्भवतोऽयं प्रयुक्तः ।

२. कल्लते लोकः=न शब्दायत इत्यर्थः ( मनो०, भू० ४२० ) ।

३. अर्थभेदप्रदर्शनस्थलेऽव्यक्तशब्दार्थे कल्लधातुः पाणिनि-चन्द्र-काशकृत्स्न-कातन्त्रसम्मत इति प्रदर्शितम् ( A concordance of Sanskrit Dhātupāthas, P 167 )

४. डॉ० भागीरथप्रसादत्रिपाठिमहोदयेन (वागीशशास्त्रिणा) प्रणीतो '**विद्यावारिधि**' (पी-एच्० डी०) उपाधये स्वीकृतश्चायं ग्रन्थः प्रकाशितो वर्तते ।

३४—वल्ह प्राधान्यपरिभाषणहिंसादानेषु ( भू० ४५० ), बर्ह च ( भू० ४५१ )। अत्र चकारेणोक्तेषु प्राधान्यपरिभाषणहिंसादानेष्वर्थेषु पृथग् योगाद् भाषणादिकमेवानुकृष्यते, तस्मात् क्वचिद् भिन्नयोग स्पष्टार्थमपि क्रियते इति ज्ञायते। सायणाचार्यस्तु प्रधानार्थे पठति (मा० धा० वृ०, भ्वा० ४१३)। काशकृत्स्ने वल्हधातुरुक्तेष्वर्थेषु वर्हधातुस्तु प्रयत्नार्थे पठ्यते ( काश० धा० पा०, भ्वा० ५४४-४५ )।

३५—वितर्कार्थकस्य ऊहधातो ( भू० ४५४ ) आत्मनेपदिषु पाठेऽपि **'अनुक्तमप्यूहति पण्डितो जनः, यशः समूहन्निव दिग्विकीर्णम्'** इत्यादौ परस्मैपदप्रयोगेऽपि गणाकृतानित्यत्वेन न दोषः। वृत्तिकारादयस्तु[1] ( दुर्गसिहादय ) **"उपसर्गादस्यत्यूहो वा"** ( ३।२।४१-२१ ) इत्यत्राकर्मकयोग गन्यते-अस्यत्यूहावकर्मकावेव विकल्पेन रचादी ( आत्मनेपदिना ) भवत इत्यर्थ। तेन सकर्मके परस्मैपदमेव। वररुच्यादयस्तु अकर्मकयोग नाङ्गीकुर्वन्ति, तेन तन्मते सकर्मकयोगेऽपि विकल्पेनाऽऽत्मनेपदमुपपद्यते[2]। अकर्माकाधिकारे पठितस्यापि उपसर्गादस्यत्यूहो' इति वार्त्तिकस्य वृत्तिकैयटादौ सकर्मकाकर्मकसाधारणमुक्तम् ( द्र०-मा० धा० वृ०, ऊह वितर्के, भ्वा० ४१६ )।

३६—**गुपधातोः** ( भू० ४६८ ) **बधधातोश्च** ( भू० ४७० ) निन्दार्थे, तिजधातो ( भू० ३४८ ) क्षमार्थे, कितधातोः ( भू० २४८ ) रोगापनयनार्थे, मानधातो (भू० ४६९): जिज्ञासार्थे, दानधातोः ( भू० ६०१ ) आर्जवार्थे, शानधातोः ( भू० ६०२ ) निशानार्थे सन् प्रत्ययो विधीयते। तथा च किञ्चिदुक्त कातन्त्रविस्तरवृत्तौ—

> **जिज्ञासार्जवयोरेव मानदानोर्विधीयते।**
> **निशानार्थे तथा शानो नायमर्थान्तरे क्वचित्॥** इति।

जिज्ञासा-विचारः, तन्मात्रे सम्प्रत्ययो भवतीति केचिद् वदन्ति। अन्ये च जिज्ञासामात्रे निर्देशे सत्यपि धर्मविषयकविचारार्थे ( पूजामात्रे ) एव सन्प्रत्ययमङ्गीकुर्वन्ति (द्र०—मनो०, भू० ४६९ ) इति। निन्दाद्यर्थेभ्योऽर्थान्तरेषु गुपादिभ्यस्त्यादिप्रत्यया न विधीयन्ते इति

---

१ अकर्मक इत्येव 'निरस्यति शत्रून्, समूहति पदार्थान्' ( कात० वृ० ३।२।४२-२१ ) इति।

२. अस्यतेरात्मनेपदार्थमूहतेश्च परस्मैपदार्थं वा वचनम्-समूहति पदार्थमिति। ननु कथमत्र परस्मैपदम्-ऊहतेर्नित्यमात्मनेपदित्वात् प्रत्युदाहरणेऽप्यात्मनेपदस्यैव योग्यत्वात्? सत्यम्, समूहते पदार्थानित्यात्मनेपदेनैव प्रत्युदाहरणम्, प्रत्युदाहरणे परस्मैपदपाठस्त्वशुद्ध एव, अत कुलचन्द्रोऽपि सकर्मकयोस्तु यथाप्राप्तमित्युक्तवान्। वस्तुतो वररुच्यादिमतेऽकर्मकाधिकारो नास्त्येवात सकर्मकेऽपि विकल्प इति। अकर्मकाधिकारेऽपि चकारात् ( अकर्मकश्च ३।२।४२-३० ) सकर्मकेऽपि विकल्पः। अत एवानुक्तमप्यूहति पण्डितो जन इति भारवि। अत्र अपिशब्दस्योपसर्गाभावादायिलोपे परस्मैपदमिति कथम्-'सन्तत तिमिरमिन्दुरुदासे, यश समूहन्निव दिग्विकीर्णम्' इति? सत्यम्, विस्मृतलक्षणत्वादिति कुलचन्द्रः। अन्ये तु पच्यते मासानितिवत् पूर्वं कर्माविवक्षयेत्याहु। अस्मन्मते चकारादित्युक्त एव सिद्धान्त ( कवि० ३।२।४२-२१ ) इति।

केचित्। **"जनिवध्योश्च"** ( ३।४।६७ ) इत्यनेन हिंसार्थे[1] वृद्धेर्निषेधात् विज्ञायते–अर्थान्तरेष्वपि भवन्ति त्यादिप्रत्यया । तथा च दृश्यते—**'मा वधिष्ठा जटायुषम्, कङ्कणझणत्कारेण किं गोपसे'** इत्यादि ।

३७–षानुबन्धस्य प्रयोजनं **"षानुबन्धभिदादिभ्यस्त्वङ्"** ( ४।५।८२ ) इत्यनेनाङ्प्रत्ययस्य विधानम्। डुलभष्धातोरङ्प्रत्ययान्तस्य 'लभा' इतिशब्दस्य प्रयोगादर्शनादत्र षानुबन्धोऽनार्ष इति वर्द्धमानः ( द्र०-मनो०, भू० ८७२ ) ।

३८—पूर्वाचार्या घटादिधातून् 'घटमृष्' इत्येवमादिरूपेण पठितवन्तः, परमर्वाचीनैराचार्यैस्तथा न कृतम्। तैस्तु 'घट' इत्येवमादिरूपेण घटादिधातून् प्रपठ्य घटादय षानुबन्धा मानुबन्धाश्चेत्येवमुद्घोषितम्। कातन्त्रधातुपाठेऽपि तथैवानुसृतम्। उक्तं च टीकाकारेण—**"पूर्वे गणकारा येषां प्रत्येकं षकारानुबन्धत्वमुपदिष्टवन्तस्ते घटादयो मानुबन्धा लाघवायात्रान्वाख्याता अर्वाग्गणकृतेत्यर्थ** (३।४।६५) इति, **पूर्वाचार्यास्तु घटादीनां षानुबन्धत्वं प्रतिपदमेव पठितवन्तः'** (४।५।८२) इति च। पाणिनीये षानुबन्धा धातवस्त्रयोदश, तत्र वैक्लव्यार्थे क्लदिधातुरधिक पठितः, आह्वानरोदनार्थकौ 'क्रद-क्लद' धातू न पठितौ यौ च कातन्त्रे पठ्येते। एवं कातन्त्रे घटादौ षानुबन्धाश्चतुर्दश ( १४ ) धातवो दृश्यन्ते। मानुबन्धा अमन्तादीन् विहाय पञ्चचत्वारिंशद् ( ४५ ) धातवः कातन्त्रे, पाणिनीये च मैत्रेयसायणादिमतेन स्वनधातोराधिक्येनामन्तादीन विहाय षट्चत्वारिंशद् (४६) धातवः पठिताः। कातन्त्रे स्वनधातुर्मानुबन्धेषु न पठ्यते।

३९—सम्भ्रमार्थकाद् **'ञित्वरा'** इति धातोः ( भू० ५०० ) **"वा रुष्यमत्वरसंघुषास्वनाम्"** ( ४।६।९८ ) इत्यनेनेड्विधेर्विकल्पस्य सिद्धौ सत्यामनर्थक आकारानुबन्धो वैचित्र्यार्थ इति यदाह टीकाकारस्तन्न युक्तम्—उक्तसूत्रेण विधेर्विकल्पो नोच्यते किं च प्रतिषेधस्य। प्राप्तौ सत्यामेव प्रतिषेधो युज्यते इत्याकारानुबन्धवशाद् **"आदनुबन्धाच्च"** ( ४।६।६१ ) इत्यनेनेटो नित्ये प्रतिषेधे प्राप्ते तस्य विकल्पो निर्दिश्यते इति। विधेर्विकल्पे आत्मनेपदस्य त्वकारानुबन्धेनाप्युपपत्तौ सत्यामवश्यमवाऽऽकारानुबन्धो वैचित्र्यमुत्पादयेत्।

४०—रमानाथेन हसनार्थकात् **कखेधातोः** ( भू० ५०८ ) बाहुलकाद् इप्रत्यये उपधाया इत्वे च कृते **'किखि'** शब्दो व्युत्पादितः। किखि =वानरी।

**४१—कगे नोच्यते** ( भू० ५१२ )। विशिष्टस्य ( प्रसिद्धस्य ) कस्यचिदर्थस्यानिश्चयेनास्यायमर्थो नोच्यते इत्यर्थस्य निर्देशात् क्रियासामान्यवाची मानुबन्धोऽयं धातुरिति विज्ञेयम्। केषाचिन्मते कगेधातुरिह शास्त्रे नोच्यते इत्याह धातुप्रदीपकारः। काशकृत्स्नधातुपाठे गत्यर्थे पठ्यतेऽयं धातुः ( १।६०४ )

१ यद्यपि बन्धने बधिस्तथापि हन्ति हिंसायाम् ( कात० वृ० ३।४।६७ )।
गणेऽपठितोऽपि बधिर्हिंसाया धातुर्ज्ञातव्य इत्याह बधिरित्यादि।
( कात० वृ० टी० ३।४।६७ )।

४२—श्रथ क्रथ क्लथ हिंसार्थाः ( भू० ५१६ ), चन च ( भू० ५१७ )। अत्र चकारादुक्तस्य हिंसार्थस्यैवानुवृत्ते. पृथक् सूत्रकरण वैचित्र्यमाविष्करोति। उक्त च टीकाकारेण—"पृथग् योगो वैचित्र्यार्थः" ( मनो०, भू० ५१७ ) इति।

४३—"येऽत्रैव पठन्ति तेषां ( मते ) सोपसर्गाणामर्थान्तरेऽपि विघटयति, विज्वलयतीत्यादि" ( भू० ५३० ) इति रमानाथोक्तवचनेन ज्ञायते, यत् केचित् पूर्वाचार्या घटादिधातून् मानुबन्धानेव पठितवन्तो न त्वन्यत्रापि तान् पठितवन्त इति।

४४—"जनी-जृष-क्नसु-रञ्जोऽमन्ताश्च" ( भू० ५३१ ) इत्यत्र पाणिनीयाः 'जनी प्रादुर्भावे' ( दि० ९४ ) इत्येव धातुमङ्गीकुर्वन्ति, न तु 'जन जनने' ( अ० ८० ) इत्यपि, तन्मतेऽस्य छान्दसत्वात्। दुर्गादिमते तु तस्यापि ग्रहणमत्र क्रियते। एव सति 'जन' इति निर्देशे क्रियमाणे ईकारानुबन्धपाठः पाणिनीयप्रसिद्ध्यैव कृत इति दुर्गादिमतमाविष्कृत टीकाकारेण[1]।

४५—रेट् परिभाषणे ( भू० ५७५ ), चते चदे याचने च ( भू० ५७६ )। अत्र चकारः प्रकृतिमात्रेण[2] युज्यते न प्रकृत्यर्थेन, तेन रेट्धातुर्याचनार्थकोऽपि, इमौ च परिभाषणयाचनोभयार्थकादिति गोविन्दभट्टस्य मतम्। प्रायेण प्रकृत्यर्थेनैव चकारं योजयन्त्यचार्याः।

४६—वर्द्धमानमते धरतीतिप्रयोगाभावाद् धारणार्थकस्य धृञ्धातो ( भू० ५९९ ) पाठोऽपौराणिक एव। पर "तन्नयनविषयीभावे भावं दधार धराधिपः" इति नैषधे परस्मैपदस्य प्रयोगादनेकैरस्य पाठोऽङ्गीक्रियते इति रमानाथः।

४७—'वेञ्-व्येञ्-ह्वेञ्' ( भू० ६११-१३ ) इत्येतेषा यजादौ पाठादुभयपदित्वे सिद्धे ञकारानुबन्धो न पठनीय इति टीकाकारमतमाविष्कृतम्। कण्डूयञ्-प्रभृतीना ग्रहणे ञकारस्य साफल्यात् तत्पाठ. "इन्-ञ्-यजादेरुभयम्" ( ३।२।४५ ) इत्यत्र युज्यते इति न कश्चिद् दोषो ञकारानुबन्धकरणे ( द्र०—मनो०, भू० ६१३ )। कातन्त्रे कण्डूयञादयः सर्वे धातवो ञनुबन्धा एव पठिताः।

४८—भक्षणार्थक-अदधातो. ( अ० १ ) वर्तमानायाम् ( लटि ) एकवचने गणकृतस्यानित्यत्वादनः ( शप. ) लुगभावे 'अदति' इत्यपि प्रयोगोऽभिमतो वररुचेः।

४९—स्वप्नार्थक षसधातु ( अ० ९ ) छान्दस मन्यन्ते महाभाष्यकारादयः[3]। छान्दसत्वाभिधायक बोपदेवीयमतमुपन्यस्य टीकाकारेण स्वमतप्रदर्शने मौनमेवावलम्बितमिति तेनापि छान्दसत्वमेवास्य धातोरभिमतमिति प्रतीयते।

---

१ दुर्गादयस्त्वीदनुबन्धपाठ परप्रसिद्ध्यैव, परो हि जन जनने इति भाषाया न प्रयोजयति। अस्माकं तु द्वयोरेव ग्रहणमित्याहु.। वैदेह्या जनयेयमानन्दमिति भट्टि ( मनो०, भू० ५३१ )।

२ गोविन्दभट्टस्तु चते चदे इति प्रकृतिसम्बन्ध एव चकार. पूर्वधात्वपेक्ष इति, तेन रेट्धातुर्याचनऽपि ( मनो०, भू० ५७६ )।

३. षसिवशी छान्दसौ ( म० भा० ६।१।६ )। षस-षस्ती छान्दसौ, वशिरपि, तस्यापि भाषाया न प्रयोगः साधुः, भाष्यवार्त्तिककारौ चेत् प्रमाणम् ( प० म० ६।१।६ )।

५०—हन्धातोः ( अ० ४ ) गत्यर्थे पाठेऽपि असामर्थ्याल्लोके गमनार्थे प्रयोगो न क्रियते, किं च सामर्थ्याद् वेदे एवेति कथनं लौकिकेऽस्मिन् व्याकरणे समीचीनं न प्रतिभाति। अत्रावधेयम्—द्विविधं हि पदसामर्थ्यम्—स्वरूपकृतं सहकारिकृतं चेति। गवादिपदज्ञानात् सास्नालाङ्गूलादिमत्स्वरूपार्थस्य यज्ज्ञानमुत्पद्यते तत्स्वरूपसामर्थ्यात्। सहकारिकृतं पदसामर्थ्यं द्विविधम्—एकमसदप्युपसन्धानबलात् ( उपसर्गसंयोगात् ) जायते। यथा—सत्तामात्रे पठितस्य भूधातोः प्रभवतीत्यादौ प्रादियोगात् प्रथमाविर्भावरूपोऽर्थः सम्पद्यते। अन्यत् सदप्युपसन्धानादेव जायते। यथा अध्ययनार्थे पठितस्यापीङोऽधीत्युपसन्धानादेवाध्ययनार्थोऽधिगम्यते। उक्तं च—'शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते' इति। एवं च गत्यर्थे पठितस्याप्यस्य 'प्रहत-उद्धत-पद्धति-जङ्घा' प्रभृतिषूपसन्धानविशेषादेव तद्बोधकत्वं तदभावे चासामर्थ्यं विज्ञेयम्। वररुचिमते गणकृतस्यानित्यत्वाद् 'हनति' इत्यपि प्रयोगः साधुर्मन्यते। दृश्यते चापि—'सर्वा एवाहनत् पृथक्' इति ( द्र०—मनो०, अ० ४ )।

५१—मिश्रणार्थे एव पठितस्य युधातोः ( अ० ६ ) अमिश्रणार्थेऽपि 'भव लघु युतकान्त, अयुतसिद्धानाम्=मिलितसिद्धानाम्' इत्यादौ प्रयोगो दृश्यते। एवं मतान्तरेण ( सायणादेः ) पठितोऽमिश्रणार्थो रमानाथस्यापि सम्मत इति प्रतिभाति।

५२—गत्यर्थक इण्धातुः ( अ० १३ ) कविकल्पद्रुमे दीर्घोऽपि पठ्यते। 'न हि तरणिरुदीते दिक्पराधीनवृत्तिः' इति प्रयोगोऽपि दृश्यते। अत्राऽऽत्मनेपदं चिन्त्यम्।

५३—आलङ्कारिकमते भाषणार्थक-वचधातोः ( अ० ३० ) वर्तमानायाः ( लटः ) प्रथमपुरुषबहुवचने, सङ्क्षिप्तसारमते पञ्चम्याः ( लोटः ) अपि प्रथमपुरुषबहुवचने प्रयोगो नोपपद्यते। अभियुक्तास्त्वित्थं वदन्ति—"अप्रयुक्तानां काव्यवाक्येष्वेव दोषत्वं न तु लौकिकवाक्येष्वपि—तत्र प्रतीतिमात्रापेक्षणात्। वचन्तीत्यादिप्रयोगास्तु लोकेऽपि न प्रयुज्यन्ते इति तेषामसाधुत्वं मन्यते" इति। पाणिनीयाः क्षीरस्वाम्यादयो वचन्तिमप्रयुक्तमाहुः। केचिदेकवचनादन्यत्रानभिधानमङ्गीकुर्वन्ति ( द्र०—मा० धा० वृ०, अ० ६६ )।

५४—अदादौ परस्मैपदिषु "चर्करीतं चेत्येके" ( अ० ४० ) इति सूत्रं पठ्यते। अत्रैके इति निर्देशादाचार्यशर्ववर्मणो नेदमभिमतं प्रतीयते, किं च पूर्वेषां केषांचिदाचार्याणाम्। तेन चर्करीतान्तधातोः ( यङ्लुगन्तस्य ) भाषायां प्रयोगो नास्तीति शर्ववर्मणो मतमवगम्यते। न्यासकारस्तु 'बोभवीति, जाघटीति' इति जाम्बवतीकाव्यस्य प्रयोगो प्रमाणरूपेणोपस्थाप्य भाषायां चर्करीतस्य प्रयोगं साधयति। भावकर्मणोरस्य प्रयोगो न भवतीति कुलचन्द्रः।

५५—चक्षिङ्धातौ ( अ० ४१ ) अनुबन्धद्वयस्योच्चारणं वैचित्र्यार्थमिति मैत्रेयः। अकारानुबन्धेऽपि तस्यानुदात्तत्वादात्मनेपदस्य सिद्धेः। न्यासकारस्त्वात्मनेपदस्यानित्य-

त्वज्ञापनार्थमनुबन्धद्वयस्योच्चारण कृतमिति ब्रूते। वररुचिमते इकारानुबन्धेन छन्दसि नकारागमो ङकारानुबन्धेन चात्मनेपद सम्पद्यते ( एतेन पूर्वाचार्यस्य कस्यचिन्मतमनुसृत्येदमुक्तमिति प्रतीयते )। लौकिकेऽस्मिन् व्याकरणे इकारानुबन्धस्याऽऽनर्थक्येन केचिद् ह्रस्वपाठ प्रामादिक मन्यन्ते। दीर्घपाठस्य फल तु निष्ठायामिड्भाव इत्यस्ति तेषा सम्मतिः ( द्र० —मनो०, अ० ४१ )।

५६—'**नमोवाकं प्रशास्महे**' इत्युत्तररामचरितप्रयोगेण शासधातो• प्रयोग आङ्-उपसर्गेण सह न नित्य इति केचिन्मन्यन्ते। पाणिनीये उकारानुबन्धस्य प्रयोजन छन्दसीत्युच्यते मैत्रेयेण। अत्रोकारानुबन्धरहितो धातु ( अ• ४६ ) पठ्यते।

५७—"**दीधीवेव्योश्च**" ( ३।५।१५ ) इत्यनेन 'आदीध्यै, आवेव्यै' इत्यादौ गुणनिषेध निर्दिशन् शर्ववर्माचार्योऽनयोरपि भाषाया प्रयोग विज्ञापयति, न हि छान्दसं किञ्चिदनेन साधितमिति।

५८—**ब्रूञ् व्यक्तायां वाचि** ( अ• ६६ )। "**अजेर्वीः**" ( ३।४।६१ ) इत्यत्र अज इति वक्तव्ये यदिका निर्देश कृत• स ज्ञापयति—असार्वधातुकीय कार्यमनित्य मिति गरणदेव-मैत्रेय-ज्ञापकसमुच्चयकृता मतं रमानाथाचार्येण प्रदर्शितम्। तेन '**विब्रूतिः**' इत्यत्र "**ब्रुवो वचिः**" ( ३।४।८८ ) इत्यनेनासार्वधातुके वचादेशो न जायते।

५६—**घृ क्षरणदीप्त्योः, ह्वृ प्रसह्यहरणे, भस भर्त्सनदीप्त्योः, कि कित ज्ञाने, तुर त्वरणे, धिष शब्दे, धन धान्ये, जन जनने** ( अ० ७२-७३, ७५-८० ) इत्येतेषा धातूना भाष्यकारादिमतानुसारेण छन्दोविषयत्वेऽपि लौकिकेऽस्मिन् व्याकरणे पठितत्वाल्लोकप्रयुक्तत्वमपि विज्ञायते। भाष्यकारादे प्रामाण्यमङ्गीकुर्वता सायणाचार्येणैषा लोकप्रयुक्तत्वज्ञापनाय कातन्त्रे पाठ उपेक्षणीय [1] इत्याख्यातम्।

६०—अन्वेषणार्थको **मृगधातुः** (दि० २४) दिवादौ काशकृत्स्नधातुपाठे पाणिनीयधातुपाठे च न दृश्यते, कातन्त्रे तु पठ्यते। तत्रोक्त रमानाथेन—"**दुर्गत्रिलोचनवृत्तावयं नास्ति, अप्रयुक्तोऽयमित्यालङ्कारिकाः**" इति। तेन दुर्गत्रिलोचनमते नाय धातुरत्र पठनीय इति प्रतिभाति।

---

१. गणान्ते छन्दसीति वक्ष्यते। तदेतदादीना सर्वेषा शेष। यदाह न्यासकार•—'ये निजादिभ्यः परे पठ्यन्ते ते सर्वे छान्दसा, तथा हि तान् पठित्वा छन्दसीत्युक्तम्' इति। स्वामिकाश्यपाभ्यामपि छान्दसत्वमेवोक्तम्। अतँश्छान्दसन्वादियर्तीत्यादौ बहुल छन्दसीतीत्वे सिद्धे पुन "**अर्तिपिपर्त्योश्च**" ( ३।३।२५ ) इतीत्वविधान भाषायामप्यस्य प्रयोगोऽस्तीति ज्ञापनार्थमिति वदता भाष्यकारेणाप्ययमर्थं स्फोरित। अत एव भाष्यविरोधात् कातन्त्रोक्तमेषा भाषाविषयत्वमुपेक्ष्यम्। अत एव पुरुषकारेऽपि '**घृप्रभृतयोऽपि छान्दसा इति केचिद्**' इति मैत्रेयग्रन्थमुपादाय केचिच्छब्दो भाष्यानुसारिण इत्येव व्याख्येय इत्युक्तम् ( मा० धा• वृ०, जु० २४ ) इति।

६१—**वाश्टधातु** ( दि० १०६ ) सामान्यशब्दार्थे पठितोऽपि तिरश्चां शब्दे वर्तते। **'उद्वाश्यमानः स रामम्'** इति भट्टिप्रयोगेण **'तिरश्चां वाशितं रुतम्'** इत्यमरवचनेन च वाशितमिति क्तान्त एव शब्दस्तिर्यग्ध्वनेर्बोधकस्तदतिरिक्ताश्च शब्दसामान्यार्थस्य बोधका इति प्रतीयते। रमानाथोऽपीदमेवानुमन्यते। केचिल्लाघवात् तिर्यग्ध्वनावेवेति मन्यमाना भट्टिप्रयोगं लक्षणयोपपादयन्ति।

६२—व्यथनार्थकस्य **तुद्**धातोः ( तु० १ ) कर्तर्यात्मनेपदे प्रयोगो भाषाया नास्तीति कुलचन्द्रमतमनाकरमिति टीकाकारः। णुद प्रेरणे इत्यस्य ( तु० २ ) भाषाया नात्मनेपदप्रयोग इति दुर्गवर्द्धमानौ[1]। **"नुनुदे तनुकण्डु पण्डितः** ( २।४ ) इति नैषधे आत्मनेपदप्रयोगस्य दर्शनात् केचिदात्मनेपदेऽपि प्रयोगमस्य मन्यन्ते, तदनुसारेणात्रोभयपदिषु पाठ इति रमानाथ.। पाणिनीये परस्मैपदिषु पृथक् पाठ. फलवत्यपि कर्तरि परस्मैपदस्य विधानाय कृत इति सायणाचार्य. ( द्र० —मा० धा० वृ०, तु० २ )।

६३—छेदनार्थक **ओव्रश्चूधातुः** ( तु० १६ ) दन्त्यसकारोपधोऽयमिति केषाञ्चिन्मतम्। तदेव मतमादाय वृत्तिकारादिभि. **"भृजादीनां षः"** ( ३।६।५६ ) इति सूत्रव्याख्यानेऽयमपि धातुः पठ्यते। परं नास्त्येतदाचार्यशर्ववर्ममतम्, अन्यथा स 'व्रष्टा, व्रक्ष्यति' इत्यादावन्त्यलोपविधानाय **"व्रश्चिमस्जोर्धुटि"** ( ३।६।३५ ) इति सूत्रं नाऽऽरचयेत्। अय भावः—दन्त्यसकारोपधत्वे **"भृजादीनां षः"** ( ३।६।५६ ) इत्यनेन चकारस्य षकारे, सकारस्य च लोपे 'व्रष्टा' इत्यादेः सिद्धौ सत्या यद् **"व्रश्चिमस्जोर्धुटि"** ( ३।६।३५ ) इत्यनेनान्त्यलोपं निर्दिशति, तेन विज्ञायते—तालव्यशकारोपधोऽयं धातुस्तस्याभिमत इति।

६४—दिवादौ **लुभ**धातु. ( दि० ७३ ) गार्ध्यार्थे पठितस्तुदादौ च विमोहनार्थे पठ्यते ( तु० २६ )। तन्न रोचते टीकाकाराय दुर्गाय। इदमवधेयम्—**"निष्ठायां च"** ( ४।६।८८ ) इति सूत्रस्य व्याख्याने टीकाकारो वक्ति—**'यद्यपि लुभ गार्ध्ये, तथाप्यनेकार्था हि धातव इति विमोहने वर्तते'** ( कात० वृ० टी० ४।६।८८ ) इति। पञ्जीकारेण श्रीत्रिलोचनदासेनापीदमेवोक्तम्—**'यद्यपि लुभ गार्ध्ये पठ्यते, तथाप्यनेकार्थत्वाद् विमोहनेऽपि वर्तते'** ( पञ्जी ४।६।८८ ) इति। तेनेदं स्पष्टमवगम्यते—टीकाकार-पञ्जीकारमतेन तुदादौ विमोहनार्थे लुभधातुर्न पठनीय इति। यत्तु **"वेषुसहलुभरुषरिषान्ति"** ( ४।६।८१ ) इति सूत्रस्य व्याख्याने **'लुभ गार्ध्ये, लुभ विमोहने इति विशेषाभावाद् भाष्ये ग्रहणात् प्रतिषेध इति स्मृतिः'** ( कात० वृ० टी० ४।६।८१ ) इत्युक्तं दुर्गेण, तदपि धातूनामनेकार्थत्वमादायैवेति विज्ञेयम्। अत्र पाठः पूर्वाचार्यानुरोधेन लुभतीत्यादिप्रयोगदर्शनात् कृत इति रमानाथः।

---

[1] यद्यपि नुदिरुभयपदी तथापि भाषायामात्मनेपदं नाभिधीयते ( कात० वृ० टी० ३।५।२५ )। अथ परस्मैपदिष्वपि पठ्यते, तेनाय भाषाया परस्मैपद्येवेति वर्द्धमान. ( मा० धा० वृ० तु० २ )।

६५--हिंसार्थकयोः 'तुन्प-तुन्फ' इत्येतयोर्धात्वोः ( तु० ३२ ) तुदादौ पाठो न समीचीनः—भ्वादितुदाद्यो· समानरूपत्वादिति मन्यते रमानाथः। लौकिकेऽस्मिन् व्याकरणे स्वरार्थमुपादान न युज्यते।

६६—रुधाद्यन्ते गणसमाप्त्यर्थं 'वृत्' शब्द मैत्रेयोऽधीते, धातुपारायणे तु गण-समाप्तिर्नेष्यते तेन क्र्यादौ पठिताभ्या लूञ्-पूञ्धातुभ्या लुनति, पुनतीत्यादिप्रयोगाः सिध्यन्ति। सायणाचार्येणापीदमुक्तम्[1]।

६७—डुकृञ् करणे ( त० ७ )। कण्ठाभरणे करणस्य उत्पादना, उच्चारणम्, उपस्थापनम्, अभ्यञ्जन चेति चत्वारोऽर्थाः सोदाहरणमुक्तास्ते चात्र प्रदर्शिताः। यथा—

> अभूतोत्पादनायां कृञ् दृष्टः कुरु घटं यथा।
> दृष्टश्चोच्चारणे चौरङ्कारमाक्रोशतीतिवत्॥
> तथोपस्थापनेऽस्मानमितः कुरु यथोच्यते।
> अभ्यञ्जनेऽपि च तथा पादौ मे सर्पिषा कुरु॥ इति।

भक्षणार्थेऽपि धातुरय प्रयुज्यते, यथा—'मधुरसमुषायोगे या नवान्नमचीकरत्' इति। वररुचिमते 'उ' विकरणस्य लोपोऽपि जायते। यथा—किं करोमि कथ कुर्मि कुत्र गच्छामि माधव! इति।

६८—क्र्यादौ पठितात् पूञ्धातोः ( क्री० ८ ) जायमानस्य नाविकरणस्य क्वचिद् ह्रस्वोऽपि जायते इति वररुचिमत दर्शितम्। यथा—

> स्मरणात् पुनते पापं धारणात् पूर्वसञ्चितम्।
> दर्शनाल्लभते मोक्षमेतद् योगस्य लक्षणम्॥ इति।

अत्रेदं विचार्यते–रुधाद्यन्ते वृत्करण धातुपारायणकारेण नेष्यते, तेन लुनति, पुनतीत्यादि-प्रयोगाः सिध्यन्तीत्युक्तम्, तेनैव मतेन ( रुधादेः कृतेन 'न' विकरणेन ) 'पुनते' इत्यस्यापि सिद्धौ यद् 'ना' विकरणस्य ह्रस्वत्वमुक्त तेन ज्ञायते—वररुचिना रुधाद्यन्ते वृत्करण-मिष्यते इति।

६९—क्र्यादावुभयपदिषु वरणार्थकस्य वृञ्धातोः ( क्री० १२ ) पाठे कृते पुनस्तस्य ञकारानुबन्धरहित· पाठः कर्त्रभिप्रायेऽपि क्रियाफले परस्मैपदार्थो मन्यते। केचित्तु ओष्ठ्या-दित्वादस्य पुन· पाठमङ्गीकुर्वन्ति। केचन भरणार्थे इम पठन्तीति टीकाकारेण सूचितम् ( द्र०-मनो०, क्री० १७ )।

---

१. वृत्, रुधादयो वृत्ता इत्यर्थ। धातुपारायणे तु गणसमाप्तिर्नेष्यते, तेन लुनति, पुनतीति सिध्यति ( मा० धा० वृ०, रुधाद्यन्ते )।

७०—क्र्यादौ ( ४४ ) चुरादौ ( १६५ ) च पठित उञ्छार्थक **उद्ध्रस**धातु केषाचिन्मते[१] उकारानुबन्ध । 'उद्ध्रस इत्यत्र 'उद्' इत्यमुमश केचिद् धातोरवयवमङ्गीकुर्वन्ति, तेन क्र्यादौ 'उद्ध्रस्नाति' इति, चुरादौ च 'उद्ध्रासयति' इति रूप निष्पद्यते । अत्र दशबलकारिकोदाहरणमुपस्थापयता रमानाथेन दशबल्कारिकाया प्रणेता 'दुर्ग' इति निर्दिष्टम्, स च वृत्तिटीकाकाराभ्या भिन्न एव कश्चिद् दुर्ग प्रतीयते-तत्र पाणिनीयाना 'शप्-श्ना' इत्यादिविकरणाना स्मरणात् । तत्रोच्यते—

> **क्र्यादावुद्ध्रस उञ्छ इत्युदिरितश्चौरादिकः पठ्यते,**
> **तस्य ध्रासयतीति रूपमपर ध्रस्नाति योऽयं ध्रसेः ।**
> **उत्पूर्वस्य गणद्वयेऽपि पठनं येषां कृते श्नाविधा-**
> **वुद्ध्रस्नाति निगद्यते णिचि कृतेऽप्युद्ध्रासयत्यन्यतः ॥**
> ( दशब० ३० ) इति ।

७१—इनन्तात् **'चोरि'** इत्यादिधातोश्चेक्रीयितविधान ( चेक्रीयितम् = यङ्प्रत्ययः) नोपपद्यते एकस्वरत्वाभावात् । रूपावतारे तु चेक्रीयितोत्पत्ते. प्रागेव इनो लोपे सत्येकस्वरत्वाच्चेक्रीयितमुदाहृतम् । यथा—चोचूर्यते इति ( द्र०—मनो०, चु० १ ) ।

**७२**—एकः पूजार्थको **मान**धातुः ( चु० ४७ ) युजाद्यतिरिक्तः पठ्यते, तन्न युक्तम्—युजादावेव पाठादिष्टसिद्धेः । युजादेरुभयपदित्वात् परस्मैपदे सिद्धे परस्मैपदार्थं पृथक् पाठो न युक्त इत्यर्थः । पाणिनीये धृषादावेवाय पठ्यते ( मा० धा० वृ०, चु० २३४ ) । काशकृत्स्नधातुपाठे तु युजादेरन्यत्रापि पठित ( चु० ६२ ) ।

**७३**—क्षीरस्वामिना उपमार्थे पठितस्य **गूरी**धातोरीकारानुबन्धमनार्षं मनुते टीकाकार. । सायणाचार्यस्यापीदमेवाभिमतम्, धातुप्रदीप-दैव-पुरुषकाराणामस्यैव पाठस्याभिमतत्वात् (द्र०—मा० धा० वृ०, चु० १३६) । अत्र तु गूर उद्यमे (चु० ११८ ) इत्येव पठ्यते ।

७४—कुपूर्वात् स्मिङ्धातारेव ( भू० ४५७ ) ईषद्धसनार्थकात् 'कुस्मयते' इत्यादौ सिद्धे **कुस्म कुस्मयने** ( चु० १३१ ) इत्यस्य पृथक् पाठस्तु जादौ रूपभेदप्रदर्शनार्थं कृतः ( द्र०—मनो०, चु० १३१ ) ।

७५—**हन्त्यर्थाश्च** ( चु० १४३ ) इति धातुसूत्र पठ्यते । गणान्तरेषु पठिता हन्त्यर्था. सर्वे धातवश्चुरादौ पठितव्या इति रमानाथेनाऽऽख्यातम् । धातुपारायणे तु **"चटा स्फुट घटा हन्त्यर्थाश्च"** इति पठ्यते, तेन हन्त्यर्थे 'चाटयति, आस्फोटयति, घाटयति' इत्यादिप्रयोगा उपपद्यन्ते, अर्थान्तरे तु चटतीत्यादयः । चकारात् सर्वे धातवश्चुरादौ पठ्यन्ते, तेन—**"दृष्टे सूर्ये पुनरपि भवान् वाहयेदध्वशेषम् , कोकिलो विष्णुरूपेण राजकन्यामजीहरत् , रामो राज्यमकारयत"** इत्यादौ स्वार्थे इन्प्रत्ययो जायते ।

१. माधवीयधातुवृत्तौ धातुप्रदीपे च 'उ ध्रस' इति, काशकृत्स्नधातुपाठे उ ध्रसु उञ्छे ( क्र्या० ४३ ), उद्ध्रस उत्क्षेपे ( चु० १८३ ) इति ।

वररुचिमतानुसारेण "धातोश्च हेतौ" (३।२।१०) इति सूत्रे चकारात् प्रयोगानुसारेणान्यत्रापि स्वार्थे इन् ( णिच् ) प्रत्ययो विधीयते। तेन—"दशास्यं घातयित्वा तु रामो यास्यति मन्दिरम्" इत्यादयः प्रयोगा सिध्यन्ति ( द्र०—कवि० ३।२।१० )। चुरादेरिन्-प्रत्ययो विकल्पेन भवतीत्यत्राऽऽह दुर्गसिंहः—

"विशब्दन इति प्रतिषेधाच्चुरादाविन् स्याद् विभाषयेति, तेनेदं सिद्धम्-महीपालवचः श्रुत्वा जुघुषुः पुष्यमाणवाः" ( कात० वृ० ४।६।६३ ) इति।

केचित्तु-चुरादिभ्यो यथाभिधानमिन्प्रत्ययो भवति न सार्वत्रिको विकल्प इत्याहु[१]। 'इन्-ञ्-यजादेरुभयम्' ( ३।२।४५ ) इत्यनेनेनन्तानामुभयपदविधानेऽपि 'आगर्वादात्मनेपदी' इति चुरादिस्थवाक्ये आत्मनेपदस्य निर्देशात् सर्वत्रोभयपदं नोपपद्यते ( द्र०—कवि० ३।२।४५ )।

७६—चुरादौ षडशीति ( ८६ ) येऽदन्ता धातवः पठितास्तदन्ते उक्तम्-बहुलमेतन्निदर्शनमिति। अदेतददन्तधातुनिदर्शनं तद् बहुलं वेदितव्यम्, तेनानुक्ता अपि धातव ऊहनीयाः। यथा—वस निवासे वसयतीति रमानाथः।

इति कातन्त्रव्याकरणविमर्शाभिधे शोधप्रबन्धे तृतीयो धातुपाठविमर्शाध्यायः।

---

१. यद्यपि सामान्यचुरादेरिन् विकल्पेन विवक्षित एव, तथाप्यभिधानाद् युजादेरेवायं नियमोऽन्येषां यथाभिधानम् ( मनो०, चु० २५९ )।

# चतुर्थोऽध्यायः=कातन्त्रीयो गणपाठः

## कातन्त्रीयगणपाठस्य कर्ता, गणाना प्रयोगे भिन्नाः प्रकाराश्च

पञ्चाङ्ग व्याकरणमुच्यते। सूत्रपाठ-धातुपाठ-गणपाठ-उणादि-लिङ्गानुशासनानि पञ्चाङ्गानि। लाघवकरणायानुशासनसूत्रेषु नान्तरीयकमपि धात्वादिपाठ नोपदिशन्त्याचार्याः। गणशब्देन क्रमेण पठितः शब्दसमूहो गृह्यते। यद्यपि गणशब्देन धातूणादी विहाय (पृथक् पठितत्वात) वर्णविभक्त्यादेशादीनामपि समूहस्यावबोध. कर्तुं शक्यते। यथा कातन्त्रे "एकारादीनि सन्ध्यक्षराणि, कादीनि व्यञ्जनानि" (१।१।८, ६) इत्यत्र वर्णानाम्, "अयादीनां यवलोपः पदान्ते न वा लोपे तु प्रकृतिः" (१।२।१६) इत्यत्राऽऽदेशानाम्, तृतीयादौ तु परादिः,

विभक्तयो द्वितीयाद्या नाम्ना परपदेन तु।
समस्यन्ते समासो हि ज्ञेयस्तत्पुरुष' स च॥

तृतीयादीना वा' (२।१।७, ५।८ ४।२।९०) इत्यत्र विभक्तीनाम्, "शेषाः कर्म-करणसम्प्रदानापादानस्वाम्याद्यधिकरणेषु" (२।४।१६) इत्यत्र स्वाम्यादिसम्बन्धानाम्,

रागान्नक्षत्रयोगाच्च समूहात् साऽस्य देवता।
तद्वेत्त्यधीते तस्येदमेवमादेरणिष्यते॥
तेन दीव्यति संसृष्ट तरतीकण् चरत्यपि।
पण्याच्छिल्पान्नियोगाच्च क्रीतादेरायुधादपि॥
(२।६।७, ८)

इत्यत्रार्थानाम्, "आख्याताच्च तमादयः, स्यसंहितानि त्यादीनि भविष्यन्ती, स्यादीनि क्रियातिपत्तिः" (२।६।४०, ३।१।३२, ३३) इत्यत्र च प्रत्ययाना समूहो निर्दिष्ट-स्तस्य समूहस्य गणशब्देन बोधः कर्तुं शक्यते तथापि संस्कृतव्याकरणे गणशब्देन लिङ्गशब्दा. (प्रातिपदिकानि) गृह्यन्ते। तेषा प्रातिपदिकशब्दाना निर्धारण सूत्रपाठात् पूर्वमेव कर्तु-मावश्यक प्रतिभाति। तत्पाठमन्तरा सूत्रेषु पठितैरादि-प्रभृति-बहुवचनान्तशब्दैस्तत्राभीष्ट-शब्दानामवगमो नान्यैः कर्तुं शक्यते। एतच्च महाभाष्यकारेण[1] प्रदीपकारेण[2] च प्रसङ्गत समाहितम्।

---

१. अवरादीना च पुन. सूत्रपाठे ग्रहणमनर्थकम्। किं कारणम्? गणे पठितत्वात् (म० भा० १।१।३३)।
२. अवरकालपाठात् पूर्वशब्दोऽवरशब्देनोच्यत। तन पूर्वं गणपाठ. पश्चात् सूत्रपाठ इत्यर्थ (म० भा० प्र० १।१।३३)।

एतेन यद्यपि साम्प्रत कातन्त्रगणपाठ. पृथङ् नोपलभ्यते तथापि "**स्वस्रादीनां च, त्यदादीनाम विभक्तौ, मुहादीना वा, बाह्वादेश्च विधीयते**" ( **२।१।६६, ३।२९, ४६, ६।६** ) इत्यादिसूत्रेष्वादिशब्दस्य पाठादनुमीयते—शर्ववर्माचार्येणावश्य स्वस्रादयः शब्दा निर्धारिता आसन्निति। हेत्वन्तरमप्यत्रोपस्थापयितु शक्यते। यथा—

१—सर्वादिगणे शर्ववर्माचार्येण किम् शब्दस्य पाठो यदि द्विशब्दात् पूर्वं न कृत. स्यात् तर्हि विभक्तिसञ्ज्ञासूत्रे किंशब्दादपि तसादिप्रत्ययविधानाय किंशब्दोऽवश्य पठ्येत, पाणिनीये किंशब्दपाठस्य द्वयादौ दर्शनात्। अत एव महर्षिपाणिनिना "**किंसर्वनामबहुभ्योऽद्वयादिभ्यः**" ( अ० ५।३।२ ) इत्यत्र किंशब्द. समावेशित.। कातन्त्रसूत्र वर्तते—

**विभक्तिसञ्ज्ञा विज्ञेया वक्ष्यन्तेऽतः परं तु ये।**
**अद्व्यादेः सर्वनाम्नस्ते बहोश्चैव पराः स्मृताः॥**
( २।६।२४ ) इति।

२—सर्वादिगणस्य कस्मिश्चित् सूत्रे निर्देशाभावेऽपि "**स्मै सर्वनाम्नः**" (**२।१।२५**) इत्यादिसूत्रै सर्वादिशब्देभ्य स्मायाद्यादेशविधानम्, सर्वादिगणस्थपूर्वादि-अन्यादि-त्यदादीति-गणत्रितयस्थशब्देभ्यस्तत्तत्कार्यविधान च कृतम्, एतच्च गणपाठाभावे नोपयुज्येत।

पाणिनीये आदि[1]-प्रभृति[2]-बहुवचनान्त[3]-शब्दैर्गणा निर्दिष्टा.। कातन्त्रे तु सर्वे गणा आदिशब्देनैव निर्दिष्टा। पचादय. केचिदीदृशोऽपि लिङ्गगणा. ( लिङ्गम्=प्रातिपदिकम् ) सन्ति यत्र पठितेभ्य. शब्देभ्यो धातूनपोद्धृत्याजादिविधान प्रदर्श्यते, तस्मात् ते न धातुगणाः किं तर्हि प्रातिपदिकगणा एव मन्यन्ते इति तेऽपि गणपाठप्रकरणेऽत्र विचारिताः। तत्र विंशत्यादि[4]-शतादि-[5]-षष्ट्यादय[6] ईदृशोऽपि गणा. सन्ति येषा शब्दपाठमन्तराऽपि केवलमवधे. परिज्ञानेन बोधो भवितुमर्हति। अत्र षष्टेः प्राक् चत्वारिंशच्छब्दा.(४०) विंशत्यादि-[7] गणे, शत-सहस्र-लक्षादय शतादिगणे, शतात् प्राग् यावन्तः शब्दास्ते षष्ट्यादिगणे[8] आचार्यैरङ्गीक्रियन्ते न पुनस्तत्तद्गणेषु पठ्यन्ते। काशिकाकारेणैतदुक्तम् "**विंशत्यादयो लौकिकाः सङ्ख्याशब्दा गृह्यन्ते**[9], शतादयः सङ्ख्याशब्दा लौकिका गृह्यन्ते[10]"

१. सर्वादीनि सर्वनामानि ( अ० १।१।२७ ) इत्यादि।
२ अव्ययीभावे शरत्प्रभृतिभ्यः ( अ० ५।४।१०७ ) इत्यादि।
३ कुम्भपदीषु च ( अ० ५।४।१३९ ) इत्यादि।
४ विंशत्यादेस्तमट् ( २।६।२१ )।
५. नित्य शतादे. ( २।६।२२ )।
६. षष्ट्याद्यतत्पराद ( २।६।२३ )।
७. द्र०—कवि० २।६।२१।
८ द्र०—कावि० २।६।२३।
९. का० वृ० ५।२।५६।
१०. का० वृ० ५।२।५७।

इति, तस्मात् ते मया नात्र व्याख्याताः। कपिलकादि-शिवादि-हरीतक्यादिगणा व्याख्याकारै स्मृता. पर शर्ववर्माचार्येण सूत्रेषु न निर्दिष्टा इति तेऽपि न व्याख्याताः।

"अव्ययाच्च" ( २।४।४ ) इत्यत्रैकवचनेन यद्यपि स्वरादयो निपाताश्च शब्दास्तत्राभिमतास्तथापि तेषा कृते यौगिकोऽय सञ्ज्ञाशब्द. प्रयुज्यते—"अव्ययम्' इति। अय भावः—बहूना शब्दाना मध्ये आदावेव पठितेन शब्देन कश्चिद् गणो निर्धारयितु शक्यते। अत्र च "अव्यय" इति शब्दो न पूर्वं पठ्यते किं तर्हि स्वरादयो निपाताश्च शब्दा अव्ययशब्देन बोध्यन्ते, तेषामसङ्ख्यत्वात् ( यत्र लिङ्गाद्यन्वयो भवितु नार्हति )। तेन नात्र स गणरूपेण व्याख्यात.। असङ्ख्यत्वादव्ययशब्दाना वृत्तिकारेण ते न सङ्कलिता', टीकाकारेण सार्धद्विशतमिता' (२५०) शब्दा प्रदर्शिताः। "चादियोगे च" ( २।३।५ ) इत्यत्र चादयः पञ्चैव गृह्यन्ते 'च-वा-ह-अह-एव' इति, आदिपदस्य व्यवस्थावाचित्वात्[१]। तेन कृत्स्नस्य चादिगणस्य सूत्रे निर्देशाभावात् स न व्याख्यातः।

व्याख्यातेषु एकोनत्रिंशद्गणेषु (२९) यद्यपि सर्वादिगण. सूत्रे साक्षान्न निर्दिष्टस्तथापि तत्पाठमन्तरा तत्र विहित स्मायादिकार्यं कर्तुं न शक्यते इति तदभीष्टः सर्वादिगणो व्याख्यात। कातन्त्रसम्प्रदाये कातन्त्रपरिशिष्टादौ स्वीकृता. प्रादयो गणा नात्र व्याख्याता, तेषा परिशिष्टरूपेण स्मरणात्। महर्षिकात्यायनप्रणीतस्य कृद्भागस्य गम्यादयो गणास्तु व्याख्याता एव, कृद्भागस्य मुख्यरूपेण स्वीकारात्। साम्प्रत सर्वाद्यादिगणाना क्रमशो विचार. प्रस्तूयते—

## कातन्त्रीयगणपठितशब्दाना पाणिनीयगणपठितशब्दैः सह युक्तायुक्तत्वपरीक्षणम्

### १—सर्वादिः ( स्मै सर्वनाम्न. २।१।२५ )।

सूत्रकारेण शर्ववर्माचार्येण सूत्रे नाय गण. साक्षान्निर्दिष्टः, किं च सर्वनामसञ्ज्ञकाल्लिङ्गात् 'ङे' इत्यादे. स्मायाद्यादेशा विहिता.। वृत्तिकारेण दुर्गसिंहेन सर्वनामसञ्ज्ञकान् सर्वादिशब्दान् प्रपठ्य गणोऽय निर्धारितः। तत्र कातन्त्रे तान्तस्य त्वच्छब्दस्य पाठाभावाच्चतुस्त्रिंशच्छब्दा ( ३४ ) दृश्यन्ते, पाणिनीये च पञ्चत्रिंशत् ( ३५ )। कातन्त्रवृत्तिकारमतेऽन्यार्थकोऽदन्त एवैकस्त्वशब्दो नान्यस्तान्तोऽपि त्वच्छब्द इति प्रतीयते, स्वरभेदेन पृथक् तान्तपाठस्य लौकिकेऽस्मिन् व्याकरणेऽसम्भवात्। केचिदत्रापि तान्तमेव त्वच्छब्द पठन्तीति टीकाकारवचनाद्[२] विज्ञायते, गीतगोविन्दे 'त्वदधरमधुरमधूनि पिबन्तम्' (६।१) इत्यत्रान्यार्थे तान्तस्य त्वच्छब्दस्य प्रयोगदर्शनात्।

---

१. द्र०—पञ्जी, कवि० २।३।५।

२. अन्यादेरिति किम् ? त्व तिष्ठति, त्व पश्यति। कस्यचिन्मते त्वच्छब्दस्तान्त एव गणे पठ्यते तदा त्वच्छब्देनापि किम् ? तान्तत्वादन्तर्गणक इव निवारको न वा[illegible]ऽऽदिशब्द' प्रवर्तते, चरितार्थत्वात् ( कात० वृ० टी० २।२।८ ) इति।

कातन्त्रे सर्वादिगणस्य मध्ये द्विर्वृत्करण विधायावान्तरमपि पूर्वादि-अन्यादीति गण-द्वितय साक्षाद् सङ्केतितम्—"विभाष्येते पूर्वादेः, अन्यादेस्तु तुः" ( २।१।२८ २।८ ) इति। द्वयादि-त्यदादीत्येतावपि गणौ सर्वादेरन्तर्गतौ वेदितव्यौ। अत्र 'किम्' शब्दस्य पाठो द्विशब्दात् पूर्वमेव क्रियते, तेन विभक्तिसञ्ज्ञाधिकारस्य निर्देशे—

विभक्तिसञ्ज्ञा विज्ञया वक्ष्यन्तेऽतः परं तु ये।
अद्व्यादेः सर्वनाम्नस्ते बहोश्चैव पराः स्मृताः॥
( २।६।२४ )

इत्यत्र 'किम्' शब्दस्ततस्तसादिप्रत्ययविधानाय न पठितः, सर्वनाम्नैव तस्य ग्रहणात्। पाणिनीये द्विशब्दानन्तर किंशब्दस्य पाठात् "किसर्वनामबहुभ्योऽद्व्यादिभ्यः" ( अ० ५।३।२ ) इत्यत्र किंशब्दः पठित.। क्रमदीश्वरादयोऽन्यतमशब्द नेह गणे पठन्ति[१]। कातन्त्रपरिशिष्टकार. श्रीपतिदत्तस्तु शिक्षायुर्वेदादिषु "अन्यतमस्मिन्" इति प्रयोग विज्ञापयन् पाठमस्य मनुते (द्र०—कात० परि० वृ०, नामप्रक०, सू० ३)। चाक्रवर्मणाचार्यमतेन द्वयशब्दस्यापि सर्वनामता निर्दिशन् भट्टोजिदीक्षित "द्वयेषामपि मेदिनीभृताम्" ( शि० व० १२।१३ ) इति माघप्रयोगस्य साधुत्व मन्यते। 'वृथोभयेषामपि' इति पाठमा-कलयन्तः केचित् तन्निराकुर्वन्ति ( द्र०—कात० परि० प्र०, नामप्रक०, सू० ३ )।

सर्वेषा नाम (=वाचकम्) सर्वनामेत्येवप्रकारेण सर्वनामसञ्ज्ञाया अन्वर्थत्वाद् द्विवचनान्तस्य 'उभ' शब्दस्य सर्वनामत्वं भवितु नार्हतीत्याशङ्कायामिद विज्ञेयम्—सर्वनाम्नो हेतुप्रयोगे सर्वविभक्तयो भवन्तीति वचनेन उभशब्दादपि हेतुप्रयोगे सर्वा विभक्तय. स्युरित्यभिप्रेत्यात्र गणे उभशब्दस्य पाठ कृतः, अन्यथा हेत्वर्थे षष्ठ्येव स्यादिति केचित् प्रथम-पश्चिमावपि शब्दावत्र पठन्ति ( द्र०—क० च० २।१।२५ )। युष्मदादीना चेतनामात्रवाचि-त्वात् सर्ववाचकत्व न सिध्यतीति गणे पाठादेव तेषा सर्वनामत्वमवगन्तव्यम्। सर्वेभ्य. सर्वादिशब्देभ्य. स्मायाद्यादेशा न भवन्तीति यथासम्भव द्विप्रभृतिभ्योऽकप्रभृतीनि प्रयोजनानि विज्ञेयानि।

अत्राऽऽशङ्क्यते—यथा जगदादिशब्दाना सर्ववाचकत्वेऽपि तेषा सर्वनामसञ्ज्ञा लोको-पचाराश्रयणेन ( काव्यशास्त्रादौ सर्वादिशब्देभ्यः सर्वनामकार्यविहित-सर्वे-सर्वस्मै इत्यादिशब्द-रूपवज्जगदादिशब्दरूपाणि न प्रयुज्यन्ते ) न मन्यते। तथैव सञ्ज्ञोपसर्जनीभूताना सर्वा-दिशब्दाना सर्वनामत्व लोकोपचाराश्रयणेन निराकरणीयम्, कथ पुनस्तदर्थं सर्वनाम्नोऽन्वर्थता समाश्रीयते इति? अत्रावधेयम्-व्याख्यान्तराभावे एव लोकोपचारः समाश्रीयते। निर्दिष्ट-विषये सर्वनाम्नोऽन्वर्थतामाश्रित्य कार्ये सम्पन्ने लोकोपचाराश्रयण नावश्यक प्रतिभातीति।

---

१. द्र०—वङ्गभाष्यम् २।१।२५।

२—पूर्वादिः ( विभाष्येते पूर्वादे २।१।२८ )।

त्यदः पूर्वो वृच्छब्दः पूर्वादिगणसमाप्त्यर्थ एव पठ्यते" ( कात० वृ० टी० २।१।२८ ) इति टीकाकारस्य सर्वादित्यदन्त नवानामेव शब्दाना दर्शनादत्र गणे नव (९) शब्दा विज्ञेया । एते नव शब्दास्त्रिषु गणसूत्रेषु पठ्यन्ते पूर्वापरावरदक्षिणोत्तरपराधराणि व्यवस्थायामसञ्ज्ञायाम्, स्वमज्ञातिधनाख्यायाम्, अन्तर बहिर्योगोपसव्यानयोरिति ।

३—स्वस्रादिः ( स्वस्रादीना च २।१।६६ )।

गणोऽस्य पाणिनीये कातन्त्रे च भिन्नरूपेण कार्यान्तरविधानाय समादृतः। पाणिनीये "न षट्स्वस्रादिभ्यः" ( अ० ४।१।१० ) इत्यनेन स्वस्रादिगणस्थशब्देषु ङीप्प्रत्ययस्य निषेधः कृतः। अत्र स्वस्रादौ सप्त शब्दा अभिमताः। यथोक्तम् —

स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा।
याता मातेति सप्तैते स्वस्रादय उदाहृताः॥

( सि० कौ०, स्त्रीप्र० ४।१।१० ) इति।

कातन्त्रे च "स्वस्रादीनां च" (२।१।६६) इत्यनेन निपाताना स्वस्रादिसञ्ज्ञा-शब्दानामृकारस्याऽऽरादेशो विधीयते। अत्र स्वस्रादावष्टौ शब्दा पठ्यन्ते।

स्वसा नप्ता च नेष्टा च त्वष्टा क्षत्ता तथैव च।
होता पोता प्रशास्ता च ह्यष्टौ स्वस्रादयः स्मृताः॥

( कात० वृ० २।१।६६ ) इति।

एते स्वस्रादिशब्दा महर्षिपाणिनिना दीर्घविधानाय सूत्रे एव पठिताः—

"अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्" ( अ० ६।४।११ ) इति।

होत्रादिशब्दाना "धातोस्तृशब्दस्याऽऽर्' ( २।१।६८ ) इत्यनेनैवाऽऽरादेशे सिद्धे स्वसुश्चेत्येव सूत्र करणीयमित्याशङ्कायामिदमवगन्तव्यम्—निपातेष्वेव नप्त्रादिषु सञ्ज्ञा-शब्देषूक्त कार्यं सम्पद्यते। तेन धातृशब्दस्य निपातत्वाभावे धातारमित्यादौ[1] पूर्वसूत्रेणैवाऽऽ-रादेशो[2] जायते। होतृशब्दस्य वेदविद्रूपेऽर्थविशेषे निपातनमेव विज्ञेयम्, दानकर्तृत्व-रूपार्थस्याप्रतीयमानत्वादिति गणेऽस्मिन् होतृशब्दः पठ्यते ( द्र०—व्या० सा० २।१।६६ )।

सञ्ज्ञाशब्दा द्विविधाः—व्युत्पन्ना अव्युत्पन्नाश्च। व्युत्पत्तिपक्षे नियमार्थमिद सूत्रम्, अव्युत्पत्तिपक्षे चाप्राप्तिप्रापणार्थं विज्ञेयम्।

४—अन्यादिः ( अन्यादेस्तु तुः २।२।८ )।

सर्वादिगणेऽन्यादयः पञ्च शब्दाः पठ्यन्ते, एतेषा निर्धारण डतमानन्तर तृत्करणेन क्रियते। तदुक्तं टीकाकारेण—"अन्यादिरयं सर्वनामान्तर्गणः पञ्चसङ्ख्यापरिच्छिन्न

१. अथाभ्यर्च्य विधातार प्रयतौ पुत्रकाम्यया ( रघु० १।३५ )।
२ धातोस्तृशब्दस्याऽऽर् ( कात० २।१।६८ )।

एवावसीयते, तत्र वृत्करणात् । अन्य-अन्यतर-इतर-डतर-डतम इति" ( कात० वृ० टी० २।२।८ ) । महर्षिपाणिनिमतानुसारेण किम्-यत्-तद्-एकेभ्यो द्वयोरेकस्य निर्धारणे डतरप्रत्ययः, जातौ बहूना निर्धारणे डतमप्रत्यय सम्पद्यते, तदेवाभिलक्ष्य डतरडतमावत्र गणे पठ्येते । तत्प्रत्ययान्तेभ्योऽन्यादिशब्देभ्यः 'कतरत्-कतमत्' इत्यादौ तुरागमो भवति । गण कृतस्यानित्यत्वाद् डतरडतमप्रत्ययान्तादेकशब्दात् तुरागमो न भवति । पाणिनीये डतरादि-गणः प्रयुक्तस्तत्र पाठक्रम ईदृशो विज्ञेयः—"डतर-डतम-इतर-अन्य-अन्यतर" इति । डतरादिभ्य· "अद्ड्डतरादिभ्यः पञ्चभ्यः" ( अ० ७।१।२५ ) इत्यनेन स्वमोरद्डादेशः क्रियते । गणपाठेऽत्र वृत्करणाभावात् सूत्रे पञ्चभ्य इति पठितम् ।

५—त्यदादिः ( त्यदादीनाम विभक्तौ २।३।२९ ) ।

सर्वादिगणे त्यदादयो द्वादश शब्दा पठ्यन्ते, सर्वनाम्नस्तत्र सन्निवेशात् सञ्ज्ञोप-सर्जनीभूताना त्यदादीना निर्दिष्ट कार्य न जायते । अकारादेशो विभक्तौ परतो द्विपर्यन्ता-नामेवेष्यते । अनन्तर पठितयोर्युष्मदस्मदोरन्त्यस्य लोपो निर्दिश्यते । 'भवन्तु' शब्दस्य युष्मदस्मद्भ्या व्यवहितत्वादकारादेशो नोपपद्यते, अन्यथा ताभ्या प्रागेव पठेत् । पश्चात् पाठस्य फलम्-अह च भवाश्चेत्यत्र द्वन्द्वे भवन्ताविति रूप जायते, अन्यथा पूर्वस्य लोपे आवामित्यनिष्ट रूप स्यात् । द्विपर्यन्तेषु किंशब्दस्य कादेशो विधीयते तेन तत्र प्रवर्ततेऽ-कारादेशः । 'किम्-एक' शब्दयोर्द्विशब्दात् पूर्व पाठस्ततो विभक्तिसञ्ज्ञकाना तसादि-प्रत्ययाना विधानाय कृत·, पश्चात् पाठे कृते 'अद्व्यादे·' इत्यनेन निषेधात् ततस्तसादि-प्रत्यया न स्युरिति ।

६—यजादिः ( हशषछान्तेजादीना डः २।३।४६ ) ।

यजादीना धातुत्वाद् यद्यपि धातुगणपाठे तेषा सन्निवेशः समुचितस्तथापि क्विबाद्यन्त-धातुभ्यो लिङ्ग—( प्रातिपदिक ) रूपाणा साधितत्वादत्र यजादौ समावेशितधातूना धातुपाठे क्रमेण पाठाभावाच्च लिङ्गगणपाठे यजादिगणः प्रदर्श्यते । आख्यातिककार्यार्थं निर्धारिते यजादिगणे यजवपादयो नव धातवः पठ्यन्ते । अत्र च "यज्-सृज्-मृज्-राज्-भ्राज्-भ्रस्ज्-व्रश्च्-परिव्राज्" इत्येतेऽष्टौ क्विबन्ताः शब्दाः पठ्यन्ते । एषामन्त्यस्य डकारो भवतीति "हशषछान्तेजादीनां डः" ( २।३।४६ ) इति सूत्रेण निर्दिश्यते, यथा—देवेट्, रज्जुसृडित्यादि । महर्षिपाणिनिना त्वेते श दाः सूत्रे एव पठिता —"व्रश्चभ्रस्ज-सृजमृजयजराजभ्राजच्छशा षः" ( अ० ८।२।३६ ) इति ।

यजादिगणसूत्रे आदिपदस्य व्यवस्थावाचित्वाद् 'यज्' इत्येव धातुर्गृह्यते न तु गत्यर्थक इजीति धातुः । व्यवस्थावाचित्वेनेष्टाश्रयण कष्टमिति चेत् तर्हि जकारस्य गकारविधानाय दृगादिषु 'ऋत्विज्' शब्दस्य पाठात् तथा विज्ञेयम् । अयं भावः—"हशषछान्तेजादीनां डः" ( २।३।४६ ) इत्यनेन 'ऋत्विज्' इत्यत्र डकारस्याप्राप्तौ "चवर्गदृगादीनां च" ( २।३।४८ ) इत्यत्र चवर्गस्यैव पाठेन जकारस्य गकारे सम्पन्ने दृगादिषु तस्य पाठो व्यर्थः

स्यात्। तेनेद प्रकल्प्यते—पूर्वसूत्रेण 'ऋत्विज्' इत्यत्र यजधातोर्जकारस्य डकारः प्राप्तस्तस्य निराकरणाय दृगादिषु 'ऋत्विज्' शब्दः पठ्यते इति। तत्र नियमः कल्पयितु न शक्यते विधिनियमसम्भवे विधेरेव ज्यायस्त्वात्। आख्यातप्रकरणे शर्ववर्माचार्य उक्ताना यजादीना भृजादिगणे पाठ निर्दिशति।

७—**दृगादिः** ( चवर्गदृगादीना च २।३।४८ )।

दृगादयोऽष्टौ शब्दाः स्मर्यन्ते—"**दृश्-स्पृश्-मृश्-दधृष्-उष्णिह्-ऋत्विज्-सृज्-असृज्**" इति। एतेषामन्त्यस्य गकारादेशो जायते। पाणिनीये केचिदत्र शब्दा निपातनात्, केचिच्च क्विबादिप्रत्ययविधानात् साध्यन्ते—"**स्पृशोऽनुदके क्विन्, ऋत्विग्-दधृक्-स्रग्-दिग्-उष्णिग्-अन्चु-युजि-कुञ्चा च, त्यदादिषु दृशोऽनालोचने कञ् च**" ( ३।२।५८-६० ) इति। 'ऋत्विज् सृज्-असृज्' इत्येतेषामन्त्यस्य सूत्रस्थचवर्गवचनेनैव गकारे सिद्धे दृगादिषु पाठो व्यर्थ इति नाऽऽशङ्कनीयम्, यजादित्वान्नित्यं डकारे प्राप्ते गकारार्थं तस्य पाठात्।

अत्र 'असृज्' इत्यस्य 'अकारात् सृज्' इत्यर्थस्येष्टत्वाद् विश्वसृगिति प्रयोग उपपद्यते हेमकरमते। टीकाकारमतेऽत्र नञ्समासे व्यवस्थितविभाषया विश्वसृगित्यत्र गत्व भवति। शरणदेवेन तु "**न्यङ्क्वादीनां हश्च गः**" इति वचनेनात्र गकारादेशः क्रियते इति कविराजः ( द्र०—क० च० २।३।४८ )।

८—**मुहादिः** ( मुहादीना वा २।३।४६ )।

मुहादौ पञ्च शब्दाः पठ्यन्ते—"**मुह्-द्रुह्-ष्णुह्-ष्णिह्-नश्**" इति। "**मुहादिसमाप्त्यर्थं गणे वृच्छब्दः पठ्यते**" ( कात० वृ० टी० २।३।४६ ) इति टीकाकारोक्तवचनेनापीद विज्ञायते। एषा विकल्पेनान्त्यस्य गकारादेशः सूत्रेणानेन जायते, पक्षे च "**हशषछान्तेजादीनांडः**" (२।३।४६) इत्यनेन गकारे कृते 'मुट्' इत्यादि रूपाणि सिध्यन्ति। "**दादेर्हस्य गः**" ( २।३।४७ ) इत्यनेन गकारे कृते 'मित्रध्रुग्' इति सिद्धे कथं पुनर्मुहादौ 'द्रुह' इति पठ्यते? मित्रस्य द्रुं वृक्षं जहातीति क्विबन्तात् तमाचष्टेऽर्थे इनि ( णिचि ) कृते क्विपि 'मित्रध्रुग्' इति रूपं निष्पद्यते, एव द्रुहधातोरभावाद् "**दादेर्हस्य गः**" ( २।३।४७ ) इत्यनेनाप्राप्तौ मुहादौ तस्य पाठः क्रियते ( द्र०—कवि० २।३।४६ )।

९—**गर्गादिः** ( गर्गयस्कबिदादीना च, ण्य गर्गादेः २।४।६, ६।२ )।

कातन्त्रे पाणिनीये च गर्गादिगणे पठितेषु शतशब्देषु भिन्ना अपि केचन शब्दाः संनिवेशिताः। पाणिनीयगर्गादिगणे केचिदेकोननवतिशब्दानङ्गीकुर्वन्ति। पाणिनीये पौत्रादावपत्येऽर्थे "**गर्गादिभ्यो यञ्**" ( अ० ४।१।१०५ ) इत्यनेन यञ्प्रत्ययः, कातन्त्रे च "**ण्य गर्गादेः**" ( २।६।२ ) इत्यनेन ण्यप्रत्ययो विधीयते। बहुत्वे विहितस्य तस्यापत्यप्रत्ययस्यास्त्यभिधेयस्य कातन्त्रे "**गर्गयस्कबिदादीनां च**" ( २।४।६ ) इत्यनेन, पाणिनीये

च "यञञोश्च" ( अ० २।४।६४ ) इत्यनेन लुक् क्रियते, यथा—गर्गस्यापत्यानि गर्गाः, वत्सा इत्यादि। पाणिनीये "यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसङ्ख्यानम्" ( का० वृ० २।४।६४ ) इति वार्त्तिकेन विकल्पेन लुक् क्रियते, तेन गार्ग्यस्य गार्ग्ययोर्वा कुलमित्यर्थे गार्ग्यकुल गर्गकुलमिति रूपद्वयमुपपद्यते। कातन्त्रे तु यद् गार्ग्यस्य गार्ग्ययोर्वा कुल तन्मूलपुरुषस्य गर्गस्याप्यभेदेन [1] भवितुमर्हति, तेनैकत्वद्वित्वार्थेऽपत्यप्रत्ययस्य लुग्विधिर्नोच्यते। परमभेदधिया गार्ग्यस्य भार्या गर्गभार्येत्यत्र गार्ग्यस्य या भार्या सा गर्गस्यापीति वक्तु शक्यते इति चेत्, सत्यम्, गर्गकुले सम्भूतत्वाद् गार्ग्योऽपि गर्गशब्देन व्यपदिश्यते इति नानर्था शङ्का कार्या ( द्र०—कात० वृ० टी०, पञ्जी २।४।६ )।

'गार्ग्यः' इत्यादाविण्प्रत्ययो गर्गशब्दादकारान्तधिया क्रियते इति न तस्य लुग् भवति। "इणतः" ( २।६।४ ) इति सूत्रेणेण्प्रत्ययो गणमुच्चार्य न विधीयते, किं चाकारान्तलिङ्गात् ( प्रातिपदिकात् ) विधीयते। अन्यथा गर्गादेर्यस्कादावेव पाठ उचितः स्यात् ( द्र०—कात० वृ० टी० २।४।६ )।

१०—यस्कादिः ( गर्गयस्कबिदादीना च २।४।६ )।

कातन्त्रे यस्कादिगणे शिवादि[2]-बाह्वादि-अत्र्यादिगणाना त्रिचत्वारिंशत् ( ४३ ), पाणिनीये च षट्त्रिंशच्छब्दाः ( ३६ ) पठ्यन्ते। कातन्त्रे 'अगस्ति-कुण्डिनि' इत्येतौ शब्दौ गणेऽत्र पठ्येते, तत्र अगस्त्यशब्दाद् बहुत्वेऽणो लुक्, गणपाठादिकारान्तता च निपात्यते। कुण्डिनिशब्दाद् गर्गादिण्यप्रत्ययस्य लुग् अदन्तता च निपात्यते। ततः "अगस्तयः, कुण्डिनाः" इति सिध्यतः। पाणिनीये तु "आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्" ( अ० २।४।७० ) इति सूत्रेणाण्यञोर्लुक्, अगस्तिकुण्डिनचावादेशौ च क्रियेते। चकारानुबन्धोऽत्र चित्स्वरार्थमुपात्तः।

११—बिदादिः ( गर्गयस्कबिदादीना च २।४।६ )।

कातन्त्रे बिदादिगणे एकोनपञ्चाशत् ( ४९ ) पाणिनीये च चतुश्चत्वारिंशद् ( ४४ ) मतान्तरेण त्वेकोनपञ्चाशच्छब्दाः ( ४९ ) पठ्यन्ते। एतेभ्योऽपत्यप्रत्ययस्य लुग् भवति। बिदाद्यन्तर्गतेभ्योऽष्टभ्यो गोपवनादिशब्देभ्यो[3] लुग् न भवति। ऋषिभिन्नेभ्यो बिदादिशब्देभ्यो गोत्रापत्यार्थेऽण्प्रत्ययः, ऋषिवाचकेभ्यस्तु अपत्यार्थे निर्दिश्यते।

१२—नदादिः ( नदाद्यन्चिवाह्यन्स्यन्तृसखिनान्तेभ्य ई २।४।५० )।

पाणिनीये स्त्र्यधिकारे टाप्ङीबादयोऽनेके प्रत्यया. क्रियन्ते। कातन्त्रे तु शर्ववर्माचार्येण सूत्रद्वयेन द्वावेव 'आ-ई' इत्येतौ प्रत्ययौ विहितौ। तत्र नदादिगणशब्देभ्य ईप्रत्ययः

१. गार्ग्यकुल गर्गकुलमिति। गार्ग्यस्य हि यत् कुल गर्गस्य गर्गाणामपि तत्कुलमित्यभेदेनोच्यते ( कात० वृ० २।४।६ )।

२. शर्ववर्माचार्येण शिवादिगण पृथङ् न पठितः।

३. गोपवनमुद्दिश्य लुगभावरूप कार्यं शर्ववर्माचार्येण न निर्दिष्ट लाघवस्याभिप्रेतत्वात्। व्याख्याकारैः पूर्वाचार्यमतानि व्याख्यातानि।

क्रियते । नदादेराकृतिगणत्वाद् वृत्तिकारेण न तद्गणस्थाः शब्दाः सङ्कलिताः । टीकाकारेण द्विचत्वारिंशदधिकैकशत ( १४२ ) शब्दा अत्र सङ्गृहीताः । परमार्थतस्तु व्याख्याकारमते येभ्यः शब्देभ्यः स्त्रियामीप्रत्ययो दृश्यते विशेषात् त एव नदादय सन्तीति विज्ञेयम्[1] ।

पञ्जीकारेण त्रिलोचनदासेन अणादिष्टप्रत्ययान्ताः शब्दा नदादिगणे स्वीकृताः । यथोक्तं तेन—"**अण्-एयण्-इकण्-नण्-स्नण्-करप्षडनुबन्धो नदादिरिति वचनादी-प्रत्ययः**" ( पञ्जी २।४।५ ) इति । एतद्गणस्था बहवः शब्दाः पाणिनीयगौरादिगणे[2] पठिता दृश्यन्ते । कानिचिद् गणसूत्राणि टीकाकारेण व्याख्यातानि । नदादिभिन्नेभ्योऽ-ञ्याद्यन्तेभ्योऽपि शब्देभ्य ईप्रत्ययस्य विधानाय आचार्येण सूत्रेऽञ्च्यादिशब्दाः पठितास्तद-तिरिक्ताः स्त्रियामीप्रत्ययान्ताः शब्दा नदाद्यन्तर्गता मन्तव्याः स्त्रियामूङ्प्रत्ययविधानाय गणेऽ-स्मिन् पञ्च गणसूत्राणि पठ्यन्ते[3] ।

१३—**कुञ्जादिः** ( कुञ्जादेरायनण् स्मृतः २।६।३ ) ।

कातन्त्रे कुञ्जादिगणे द्विसप्तत्यधिकैकशत ( १७२ ) शब्दा पठिताः । पाणिनीये ते शब्दा विभागशः कुञ्जादि-नडादि-लोहितादिगणेषु निर्दिष्टाः । कुञ्जादेराकृतिगणत्वात् पाणिनीयेऽपठिता अपि केचन शब्दाः कातन्त्रे दृश्यन्ते । अत्र नडादिभ्यः प्राक् त्रयोदश-शब्देभ्य आयनण्प्रत्ययान्तेभ्योऽस्त्रियामबहुत्वे ण्यप्रत्ययो विधीयते, यथा कौञ्जायन्य इत्यादि । गर्गादेराकृतिगणत्वादपठितेभ्योऽपि कौञ्जायनादिशब्देभ्यो ण्यप्रत्यय उपपद्यते । एताभ्यां द्वाभ्यां प्रत्ययाभ्यामेक एवापत्यार्थो विज्ञायते । 'नाडायनः' इत्यादौ न भवति ण्यप्रत्ययः ।

१४—**अत्र्यादिः** ( स्त्र्यत्र्यादेरेयण् २।६।४ ) ।

कातन्त्रे अत्र्यादिगणे नवसप्ततिः ( ७९ ) शब्दाः पठिताः । अत्रिशब्दोऽत्र अप्रत्यय[4]-इदन्त-द्विस्वरोपलक्षणं मन्यते, तेन गणेऽपठितेभ्योऽपि शुच्यादिशब्देभ्य एयण्-प्रत्ययो जायते ( द्र०—कात० वृ० २।६।४ ) । अत्रेर्द्विस्वरोपलक्षणत्वाद् मारीचादिभ्यो बहुस्वरेभ्यः शब्देभ्य एयण् न भवति । पाणिनीये दत्तागोपादिद्व्यच्कशब्देभ्यो ढक्प्रत्ययस्य विधानाय "**द्व्यचः**" ( अ० ४।१।१२१ ) इति, अत्रिनिध्यादि-इकारान्तशब्देभ्यः "**इतश्चानिञः**" ( अ०४।१।१२२ ) इति, अन्येभ्योऽतद्धितान्तशब्देभ्यश्च "**शुभ्रादिभ्यश्च**" ( अ० ४।१।१२३ ) इति सूत्रं कृतम् । शर्ववर्माचार्येण लाघवाय "**स्त्र्यत्र्यादेरेयण्**" ( २।६।४ ) इत्येकेनैव सूत्रेण तत्कार्यं साधितम् । टीकाकारेणात्र गोधादिवर्जितपयशब्देभ्यो विकल्पेन एयण्प्रत्ययो भवतीति विस्तरेण व्याख्यातम् ( द्र०—कात० वृ० टी० २।६।४ ) ।

१. नदादिराकृतिगण इति यत्र क्वचित् स्त्रियामीप्रत्ययो दृश्यते स नदादिरित्यर्थः (पञ्जी २।४।५०)।

२. षिद्गौरादिभ्यश्च ( अ० ४।१।४१ ) ।

३. कात० वृ० टी० २।४।५० ।

४. न विद्यते प्रत्ययो यस्मात् तादृशादेव शब्दादेयण्प्रत्यय इष्यते, अत एव दाक्षिशब्दात् स न प्रवर्तते ।

१५—बाह्वादिः ( बाह्वादेश्च विधीयते २।६।६ ) ।

कातन्त्रे बाह्वादिगणे षट्पञ्चाशत् ( ५६ ), पाणिनीये[1] चैकोनपञ्चाशच्छब्दाः ( ४९ ) पठ्यन्ते । आकृतिगणत्वाद् बाह्वादेः सात्यकिः, जाङ्घिः, वामजाङ्घिः, ऐन्द्रशर्मिः, आजधेनविरित्यादयोऽपि शब्दाः सिध्यन्ति ।

अत्र बाहु-उपबाहु-बिन्दु-उपबिन्दुशब्दाना पाठाद् यद्यपि ग्रहणवता लिङ्गेन तदन्तविधिर्न गृह्यते, तथापि केवलस्य शीर्षशब्दस्य नपुसकत्वादपत्ये योगविभागात् तत्र लोमन्शब्दे च तदन्तविधिरङ्गीक्रियते । यथा हास्तिशीर्षि , औध्र्वलोमिरिति । यद्यपि गोत्रादिभूतादेव बाह्वादेरपत्येऽर्थे इण्प्रत्ययो विधीयते, तथापि व्यासादीनामनादिपुरुषत्वात् तत्र गोत्रादिभूतानामिति न सम्बध्यते ( द्र०-कात० वृ० टी० २।६।६ ) ।

१६—गवादिः ( यदुगवादितः २।६।११ ) ।

कातन्त्रे गवादिगणे एकोनचत्वारिंशत् ( ३९ ), पाणिनोये[2] च त्रयोविंशतिः (२३) शब्दाः पठ्यन्ते । महर्षिपाणिनिना अपूपादिभ्यो विकल्पेन यत्प्रत्ययस्य विधानायापूपादि[3]-गणः पृथङ् निर्दिष्टः । कातन्त्रे तु 'हविर्वचनयूपादिभ्यो वा' इति गणे एव सूत्र पठितम् । टीका-कलापचन्द्रयोरन्येऽपि केचन शब्दा व्याख्याताः । 'रूढिशब्दा हि तद्धिताः' इति सिद्धान्तमवलम्ब्य तद्धितप्रत्ययाना विस्तरो न प्रदर्शित. शर्ववर्माचार्येण । वृत्तिकारवचनेन[4] हितेऽर्थेऽपूपादिभ्य ईयप्रत्ययोऽपि[5] प्रवर्तते, यथा—अङ्गारीयाणि काष्ठानि इत्यादि । 'नाभेर्नभश्च' इत्यादिगणसूत्रव्याख्यानावसरे व्याख्याकारैस्तत्र तत्र विकल्पादिविधिः स्पष्ट निर्दिष्टः । यद्यपि [6]बाह्वादिगणे उपबाह्वादिशब्दपाठेन 'ग्रहणवता लिङ्गेन तदन्तविधिर्नास्ति' इति ज्ञापितम् , तथापि सुगव्यमतिगव्यमित्यादौ यत्प्रत्ययस्य विधानाय तदन्तविधिरिष्यते ।

१७—द्व्यादिः ( विभक्तिसञ्ज्ञा विज्ञेया वक्ष्यन्तेऽत. पर तु ये ।
अद्व्यादे. सर्वनाम्नस्ते बहोश्चैव पराः स्मृता ॥ २।६।२४ ) ।

तद्धितप्रकरणे विभक्तिसञ्ज्ञा द्व्यादिभिन्नेभ्य सर्वनामभ्यो विधीयते । 'द्वि-युष्मद्-अस्मद्-भवन्त्' इत्येते चत्वारो द्व्यादय. शब्दाः सर्वनामान्तर्गता वेदितव्याः । तत्राय विशेषः—महर्षिपाणिनिना 'किम्' शब्दः सर्वादिगणस्यान्ते पठितः इति द्व्याद्यन्तर्गतत्वात् ततो विभक्तिसञ्ज्ञकप्रत्ययाना निषेधो मा भूदिति "किंसर्वनामबहुभ्योऽद्व्यादिभ्यः" ( अ०

१. बाह्वादिभ्यश्च ( अ० ४।१।९६ ) ।
२. उगवादिभ्यो यत् ( अ० ५।१।२ ) ।
३. विभाषा हविरपूपादिभ्य. ( अ० ५।१।४ ) ।
४ विकृतिवाचिन. शब्दात् प्रकृतावभिधेयाया यथोक्त हितेऽर्थे प्रत्ययो मन्तव्य.-अङ्गारीयाणि काष्ठानि ( कात० वृ० २।६।११ ) इति ।
५. ईयस्तु हिते ( २।६।१० ) ।
६. द्र०—कात० वृ०, कवि० २।६।११ ।

५।३।२ ) इत्यत्र किंशब्दोऽपि पृथक् पठितः कातन्त्रे द्विशब्दात् पूर्वमेव तस्य पाठात् किंशब्दो नोक्तसूत्रे पठित.।

१८—सद्यआदि. ( सद्य आद्या निपात्यन्ते २।६।३७ )।

महर्षिपाणिनिना "सद्यःपरुत्परार्यैषमस्" ( अ० ५।३।२२ ) इत्यादिना यन्निपात्यते, "अनद्यतने र्हिलन्यतरस्याम्" ( अ० ५।३।२१ ) इत्यनेन, "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः" ( अ० ५।३।२७ ) इत्यतो "विभाषाऽवरस्य" ( अ० ५।३।४१ ) इत्यन्त पञ्चदशभिश्च सूत्रैर्यत्कार्यं विधीयते तत्सर्वमत्र "सद्यआद्या निपात्यन्ते" ( २।६।३७ ) इत्यनेनैव सूत्रेण निपातितम्। अत्र व्याख्याकारैः पञ्चचत्वारिंशच्छब्दा. ( ४५ ) तत्तत्कार्यविधानाय वार्त्तिकानि निर्दिश्य ससाधिताः आकृतिगणत्वादस्यान्येऽपि शब्दा ससाधनीया इति निर्दिशन्त्याचार्याः[१]।

१९—राजादिः ( सामासान्तगताना वा राजादीनामदन्तता २।६।४१ )।

पाणिनीये 'डच्-अ-अच्-टच्-षच्-ष-अप्-असिच्-अनिच्-इच्-कप्' इत्येते एकादश प्रत्ययास्तत्तत्स्वरादिकार्यविधानाय कृता.। कातन्त्रे तु समासान्तेभ्यो राजादिशब्देभ्यः 'अत्' इत्येक एव प्रत्ययो विधीयते। तकारानुबन्धोऽत्रोच्चारणार्थमुपात्तः। पाणिनीये "समासान्ताः" ( अ० ५।४।६८ ) इत्यत आरभ्य "निष्प्रवाणिश्च" ( अ० ५।४।१६० ) इत्यन्त सूत्रेषु 'शरत्प्रभृति[२]-द्विदण्ड्यादि[३]-हस्त्यादि[४]-कुम्भपद्यादि[५]-उरःप्रभृति[६]' इत्येते पञ्च गणा निर्दिष्टा.। कातन्त्रे तु राजादिगणमदन्त निर्दिश्य तत्र धेन्वनडुहादयः शब्दा निपातनात् साधिताः। राजादिगणे दशाधिकैकशत ( ११० ) शब्दाश्चतुःषष्टिमितेषु (६४) सूत्रेषु प्रपठ्य तत्र अनन्त-धुडन्त-चवर्गान्तादिशब्दा न सङ्कलिता.। मध्ये अव्ययीभाव-तत्पुरुष-बहुव्रीहि-समाहारद्वन्द्वसमासेषु केचन विशेषनिर्देशाः कृताः।

"समासान्तगतानां वा" ( २।६।४१ ) इत्यादिसूत्रे 'वा' शब्दः समुच्चयार्थको विज्ञेयः, "वा खारी" ( २।६।४१-११ ) इत्यत्र वाशब्दस्य ग्रहणात्। अन्यथा वाऽधिकारेऽनुवर्तमाने वाग्रहण व्यर्थं स्यात्। उपराजमित्यादौ समासात् परं विधीयमानमम्भावादिकार्यं समासान्तराजादिभ्यः कृतो योऽत्प्रत्ययस्तदन्तान्न स्यादिति न शङ्कनीयम्-अवयवावयवस्याकारस्यापि समासस्यावयवत्वात्। यथा लोकेऽपि दृश्यते— देवदत्तस्यावयवे हस्तादावन्तर्भूता व्रणकिणादयोऽपि देवदत्तग्रहणेन गृह्यन्ते इति।

१. एवमन्येऽपि वेदितव्याः, सद्यआदेराकृतिगणत्वात ( कात० वृ० प० २।६।३७ )।
२. अव्ययीभावे शरत्प्रभृतिभ्य. ( अ० ५।४।१०७ )।
३. द्विदण्ड्यादिभ्यश्च ( अ० ५।४।१२४ )।
४. पादस्य लोपोऽहस्त्यादिभ्य. ( अ० ५।४।१३८ )।
५. कुम्भपदीषु च ( अ० ५।४।१३९ )।
६. उर.प्रभृतिभ्य. कप् ( अ० ५।४।१५१ )।

२०—धेन्वनडुहादिः ( धेन्वनडुहादयश्च २।६।४१-६५ ) ।

कातन्त्रे राजादिगणे धेन्वनडुहादयः पञ्चषष्टिः ( ६५ ) शब्दाष्टीकाकारेणार्थनिर्देश-पुरस्सरं श्लोके व्याख्याताः । तद् यथा—

नञ्सुदुर्भ्यः प्रजायास्तु बहुव्रीहावसन्तता ।
मन्दाल्पाभ्यां च मेधायाः अमेधा इति सूचनम् ॥
अस्थूलादेव नासायाः सञ्ज्ञायां च नसः स्मृतः ।
यथा द्रुरिव नासाऽस्य द्रुणसः सुनसोऽपि च ॥
प्रादेश्चापि तथा नित्यमसञ्ज्ञायामपि स्मृतम् ।
प्रगता नासिका यस्य प्रणसमुन्नसं मुखम् ॥
नित्यं जायाया जानिः स्यादविशिष्टपदादपि ।
वधूर्जाया भवेद् यस्य वधूजानिः स उच्यते ॥ इत्यादि ।

२१—पचादिः ( अच् पचादिभ्यश्च ४।२।४८ ) ।

सर्वे धातवः पचादौ नामगणे पठ्यन्ते । अय भावः—पचादिगणे यावन्तः प्रातिपदिकशब्दाः पठितास्तेषां प्रकृतौ सर्वे धातवो वर्तन्ते इति । तेन सर्वधातुभ्योऽयमच्प्रत्यय इष्यते इति फलितम् । सर्वशब्दोऽत्र सङ्कोचवृत्तिः, "नाम्युपध०" ( ४।२।५१ ) इत्यादिना क्वचित् कप्रत्ययस्यैवेष्टत्वात् सूत्रे पचादिग्रहणं क्वचिद् बाधकबाधनार्थं कृतम्, तेन-श्वानं पचति, जारं बिभर्तीत्यादौ "कर्मण्यण्" ( ४।३।१ ) इत्यनेन प्राप्तमिण्प्रत्ययम्, देव-सर्पेत्यादौ "नाम्युपधप्रीकृगृज्ञां कः" (४।२।५१) इत्यनेन प्राप्तं कप्रत्ययं च प्रबाध्याच्-प्रत्ययः प्रवर्तते । अन्यथा सर्वधातुभ्योऽच्प्रत्ययस्य निर्देशः क्रियेत । पाणिनीयेऽत्रैकोन-त्रिंशच्छब्दाः ( २६ ) पठिता निदर्शनाय । सर्वधातुभ्योऽच्प्रत्ययविधानाय, सूत्रे पचादि-शब्दपाठाय चोक्तं काशिकाकारेण—

अज्विधिः सर्वधातुभ्यः पठ्यन्ते च पचादयः ।
अण्बाधनार्थमेव स्यात् सिध्यन्ति श्वपचादयः ॥
( ३।१।१३४ ) इति ।

२२—नन्द्यादिः ( नन्द्यादेर्युः ४।२।४६ ) ।

नन्दनादिनामगणे पठितशब्देभ्यो धातूनपोद्धृत्य ततो युप्रत्ययोऽत्र विधीयते न तु नन्द्यादिक्रमेण पठितधातुभ्यः, तत्र क्रमेण पाठस्याभावात् । पाणिनीये चतुर्विंशतिः ( २४ ), कातन्त्रे च त्रयोविंशतिः ( २३ ) शब्दा गणेऽत्र पठ्यन्ते । वृत्तिकारेण रोचनशब्दः सञ्ज्ञार्थे नोपलब्ध इति तत्पाठाभावान्मन्ये । सम्पादनदोषाद् नन्द्यादेराकृतिगणत्वाद् वा स न दृश्यते इत्यपि सम्भाव्यते ।

**२३—ग्रहादिः** ( ग्रहादेर्णिन् ४।२।५० ) ।

ग्रहादौ नामगणे निर्दिष्टशब्देभ्यो धातूनपोद्धृत्य ततो णिन्प्रत्ययो विधीयते । त एव शब्दास्तत्र पठ्यन्ते ये एकेन णिन्प्रत्ययेनैव सिध्यन्ति । कातन्त्रे ग्रहादिगणे सप्तदश ( १७ ), पाणिनीये च सप्तविंशतिः ( २७ ) शब्दाः पठिताः । भेदोऽयमस्याऽऽकृतिगणत्वाद् विज्ञेयः । तत्रोत्साहीतिशब्दः कातन्त्रे इन्प्रत्ययान्त इष्यते, पाणिनीये च ग्रहादौ पठितत्वाद् णिन्प्रत्ययान्तः । इयान् भेदः "**कर्तृकर्मणोः कृति नित्यम्**" ( २।४।४१ ) इत्यत्र कृद्ग्रहणं कृदन्तात् प्रत्ययान्तरे षष्ठीनिषेधार्थमभिमतम्, तेन तद्धिते इनिप्रत्यये षष्ठ्या निषेधः, णिन्प्रत्यये च षष्ठी सम्पद्यते ( द्र०—कवि० ४।२।५० ) ।

**२४—तदादिः** (तदाद्याद्यन्तानन्तकारबहुबाह्वहर्दिवाविभानिशाप्रभाभाश्चित्रकर्तृनान्दीकिलिपिलिबिबलिभक्तिक्षेत्रजङ्घाधनुररुःसङ्ख्यासु च ४।१।२३) ।

पाणिनीये किंयत्तच्छब्देभ्योऽच्प्रत्ययो[१] विधीयते । अजादिगणे वैषां पाठः स्वीक्रियते टाब्विधानाय, अन्यथा टप्रत्यये सति ङीष् स्यात् । कातन्त्रे तु तदादिगणे पठितेभ्य एकादशशब्देभ्यष्टप्रत्यय इष्यते । तत्र सङ्ख्यापदेन गृहीतावेकद्विशब्दौ प्रकल्प्य नवशब्देभ्यष्टप्रत्ययो विधीयते । स्त्रिया टप्रत्ययेन ई-( ङीप् ) प्रत्ययविधानं जातावङ्गीक्रियते इत्यजातौ न प्रवर्तते ईप्रत्ययः । सूत्रे तदादेः पृथक् पठितः किंशब्दो न सर्वनामसञ्ज्ञको गृह्यते । केचिदत्र ( तदादिस्थाने ) त्यदादिपाठमङ्गीकुर्वन्ति, तन्न समीचीनम्, त्यच्छब्दस्य छान्दसत्वाल्लौकिकेऽस्मिन् व्याकरणे तत्पाठस्यायुक्तत्वात् । त्यच्छब्दष्टप्रत्ययस्यैव विषये छान्दसो मन्यते न तु सर्वत्र "**त्यदादीनाम विभक्तौ**" (२।३।२९) इत्यादौ तस्येष्टत्वात्, अन्यथा सर्वथा तस्य बहिष्कारः स्यात् ।

**२५—गम्यादिः** ( भविष्यति गम्यादयः ४।४।६८ ) ।

सामान्यभविष्यत्काले नित्यं श्वस्तनी-( लुट् ) सञ्ज्ञकं तासूप्रत्ययं प्रबाध्य इन्-णिन्-प्रत्ययान्ता औणादिका गम्यादयः शब्दाः साधवो भवन्तीति विज्ञाप्यते । तत्र कातन्त्रे षट्, पाणिनीये च नव शब्दा गम्यादौ पठ्यन्ते । पाणिनीये पठितानां प्रतियोधी-प्रतिबोधी-प्रतियोगीतित्रयाणां शब्दानां पाठः कातन्त्रे तेषां भविष्यदर्थस्यानभिप्रेतत्वान्न कृत इति प्रतिभाति । प्राप्तेन कार्यान्तरेण निपातनकार्यं बाधितुं न शक्यते इति श्वस्तनी-( =लुट् ) विषये 'श्वो ग्रामं गमी' इत्यादिकमपि रूपं निष्पद्यते ।

**२६—भिदादिः** ( षानुबन्धभिदादिभ्यस्त्वङ् ४।५।८२ ) ।

भिदादिरत्र नामगणः स्मर्यते, धातुपाठे भिद्-लिख्-मृगादिधातूनां भिन्नेषु गणेषु पठितत्वात् । पञ्जीकारेणोक्तमपि—

**इह भिदादिः—भिदिर् विदारणे इत्यादिस्तु धातुगणो न गृह्यते अन्यतोऽप्यङो दर्शनात् । अपि तु भिदा-छिदा-गुहेत्यादिर्नामगण एव न च नाम्नः प्रत्ययो**

१. किंयत्तद्बहुषु कृञोऽज्विधानम् ( म० भा० ३।२।२१ वा० ) ।

धात्वधिकारात्, अतस्तत्रापोद्धारणद्वारेण ये धातवो दृश्यन्ते—भिदिर् विदारणे, छिदिर् द्विधाकरणे, गुहू संवरणे इत्यादयस्तेभ्यः प्रत्यय इत्याह-भिदादिभ्यो नामगणनिर्दिष्टेभ्य इति" ( ४।५।८२ ) इति । पाणिनीये 'क्षि-क्रप' धात्वोः षानुबन्धत्वाभावाद् भिदादौ पाठो दृश्यते, कातन्त्रे तु षानुबन्धत्वान्न भिदादौ पाठः। मृगयेत्यादौ गुणादिक गणपाठसामर्थ्याद् भवति, अन्यथा ङित्वात् तन्न स्यात्।

२७—भीमादिः ( भीमादयोऽपादाने ४।६।५१ )।

कातन्त्रवृत्तिकारेण भीमादिगणे षट् शब्दाः प्रदर्शिताः, पाणिनीये तु त्रयोदश शब्दा दृश्यन्ते। दुर्गसिंहेन[1] मूर्खरक्षःप्रभृतयः शब्दा अपादानादन्यत्राप्युणादौ साधिता इति नात्र ते पठिताः। भीमादिशब्दानामपि विषये तेनोक्तम्—"एते औणादिका यथाकथञ्चिद् व्युत्पाद्याः" इति। अत एवोणादिवृत्तावर्थान्तरमपि तेन प्रदर्शितम्[2]। गणेऽस्मिन् पठितः समुद्रशब्दः प्रपतनशब्दस्यार्थो विज्ञेयः, न त्वपादानव्युत्पत्त्या साधितो भीमादिगणस्थः कश्चिदन्यतमः शब्दः ( द्र०—व्या० सा० ४।६।५१ )।

२८—न्यङ्क्वादिः ( न्यङ्क्वादीना हश्च घः ४।६।५७ )।

न्यङ्क्वादिशब्देषु चकारजकारयोः ककारगकारौ हकारस्य च घकारः सम्पद्यते। पाणिनीये एते सप्तविंशतिः ( २७ ) कातन्त्रे चैकोनविंशतिः ( १९ ) शब्दाः पठ्यन्ते, तत्र पाणिनीयेऽसुन्प्रत्ययान्ते ओकस्शब्दे चकारस्य ककारादेश उणादीना बाहुल्यादङ्गीक्रियते। कातन्त्रे तु न्यङ्क्वादिगणे पाठादस्य सिद्धिरभिप्रेता। अकारान्ते ओकशब्दे पाणिनीयेऽन्तोदात्तार्थं कप्रत्ययो विधीयते। कातन्त्रे तु "पदरुजविशस्पृशोचां घञ्" ( ४।५।१ ) इत्यनेन तत्र घञ्प्रत्ययं विधाय चकारस्य ककारादेशः "चजोः कगौ धुड्घानुबन्धयोः" ( ४।६।५६ ) इत्यनेन निर्दिश्यते। एवं कातन्त्रे व्यतिषङ्ग-अवसर्गशब्दाभ्यामनुषङ्ग-उपसर्गशब्दावुपलक्ष्येते इति तयोः पाठाभावाद् विज्ञेयम्। टाबन्ते उप्रत्ययान्ते च "दूरेपाका-दूरेपाकुः-फलेपाका-फलेपाकुः" इत्येतान्यपि चत्वारि केषाञ्चिदभिमतानि रूपाणि पाणिनीये पठितानि। रुहेर्हकारस्य धकारादेशो न पृथग् विहित इति तत्साधनाय 'न्यग्रोध-वीरुध्' इत्यपि शब्दद्वयं पठितं पाणिनीये, कातन्त्रे "रुहेर्धो वा" ( ४।६।७२ ) इत्यनुशासन

१ मुह्यति कार्येषु मूर्खो जडः ( मुहेर्मूर्चं ४।२७—कात० उ० वृ० )।

२. भीयतेऽस्मिन्निति भीमः ( भिय षुरन्तो वा १।५८—कात० उ० वृ० )। भीयतेऽस्मिन्निति भयानको भीष्मः ( भीशीङ्भ्यामानकः २।६३—कात० उ० वृ० )। "भीम—एव एते औणादिका" इत्यादिवृत्तिकारवचनेनेदं प्रतीयते-भीमादयोऽपि ( अपादाने व्युत्पन्ना ) शब्दा औणादिका भवन्तीति "ताभ्यामन्यत्रोणादयः" ( ४।६।५२ ) इत्यत्र 'अन्ये' इति पदमध्याहृत्यार्थयोजना कार्या। दाश-गोघ्ना-भीमादीन् विहायान्येषु शब्देषु सम्प्रदानापादानाभ्यामन्यत्रोणादयो भवन्तीत्यर्थः। आहोस्विद् उणादौ साधिता भीमादयोऽपादानभिन्नव्युत्पत्त्या सिध्यन्ति, अपादाने तु निपातनादेषु तत्तत्प्रत्यया भवन्तीति।

कृतम्, तेन 'वीरुध्-न्यग्रोध' इत्येतौ शब्दौ न पठ्येते। "न्यङ्क्वादीनां च" (अ० ७।३।५३) इत्यनेन कवर्गादेशस्य विधानात् कवर्गादेशान्ता एव शब्दा न्यङ्क्वादिगणे पठितु युज्यन्ते इति पाणिनीये धकारादेशान्तशब्दयो पाठश्चिन्त्यः प्रतीयते।

२९—**पूरण्यादि**·(पुवद् भाषितपुस्कानूङपूरण्यादिषु स्त्रिया तुल्याधिकरणे २।५।१८)।

पूरणप्रत्ययान्ता स्त्री पूरणीत्युच्यते। महर्षिपाणिनिना प्रियादिगणे पठिताः शब्दा अत्र पूरण्यादावेव गणे पठ्यन्ते। पूरण्यादिषु शब्देषु परतः पवद्भावः प्रतिषिध्यते, यथा—कल्याणीपञ्चमा रात्रयः, कल्याणीप्रिय इत्यादि।

**इति कातन्त्रव्याकरणविमर्शाभिधे शोधप्रबन्धे चतुर्थाध्यायान्तर्गतो गणपाठविमर्शः।**



# कातन्त्रीय उणादिपाठः

## कातन्त्रीयोणादिसूत्राणां कर्ता

उणादिप्रत्ययान्तेषु शब्देषु निपातनादिकार्यं बाहुल्येन क्रियते इति कृदन्तभूता अप्युणादिप्रत्ययाः पृथगेव सगृह्यन्ते आचार्यैः। उणादिप्रत्ययैः प्रायेण सञ्ज्ञाशब्दा निष्पाद्यन्ते, ते च व्युत्पन्ना अव्युत्पन्नाश्च मन्यन्ते। वैयाकरणनिकाये महर्षिशाकटायनेन सर्वे सञ्ज्ञाशब्दा व्युत्पन्ना, महर्षिगार्ग्येण च तत्र केचिदव्युत्पन्ना अपि स्वीक्रियन्ते[1]। कातन्त्रव्याख्यातारोऽपि गार्ग्यमतमनुसरन्ति। उक्तं च त्रिलोचनदासेन—"**औणादिका हि द्विविधा व्युत्पन्ना अव्युत्पन्नाश्च**" (पञ्जी ३।४।२) इति। "**वृक्षादिवदमी रूढाः कृतिना न कृताः कृतः**" (कात० वृ०, कृत्प्रकरणारम्भे) इति दुर्गसिंहवचनेनाव्युत्पत्तिपक्षे शर्ववर्माचार्यस्य निष्ठा सल्लक्ष्यते। दुर्गसिंहस्य तु निष्ठा व्युत्पत्तिपक्षे प्रतिभाति, यथा निर्दिष्टं तेन—

शब्दानामानन्त्याद् व्युत्पत्तिर्दृश्यते येषाम्।
तेषां विज्ञैः कार्या मृग्या धातोस्ततः प्रत्ययान्तात्॥

(कात० उ० वृ०, अन्ते) इति।

शर्ववर्माचार्येण लाघवायोणादिसूत्राणि न प्रणीतानीति कृत्सूत्राणां वररुचिकात्यायनेन प्रणीतत्वात् प्रतिभाति। प्रमाणानुपलब्धौ कात्यायनेनापि प्रणीतानि तानि न लक्ष्यन्ते। कातन्त्रवृत्तिकारेण श्रीदुर्गसिंहेन कतिपयसूत्राणां रचनयोणादिभागः प्रपूरितः इति सम्भाव्यते। सम्प्रति तदीयं व्याख्यानमप्युपलभ्यते। डॉ० चिन्तामणिमहोदयैः कन्नडलिप्यात्मके कस्मिंश्चित् प्राचीनहस्तलेखे आधृतानि षट्पादात्मकानि दुर्गसिंहवृत्तियुतान्येकोनचतुःशतसूत्राणि (३९९) प्रकाशितानि। तत्रानेकैर्भ्रष्टपाठैर्मूलावबोधे कश्चिदायासोऽपेक्ष्यते। वङ्गाक्षरेषु प्रकाशितानि पञ्चपादात्मकानि सप्तषष्ट्युत्तरशतद्वयमितानि (२६७), सरस्वतीभवनस्थे (वा० सं० वि० वि०) हस्तलेखे च (ग० सं० ३८०७१) चतुर्ष्वध्यायेषु त्रिपञ्चाशदुत्तरशतद्वयमितानि (२५३) सूत्राणि दृश्यन्ते। युधिष्ठिरमीमांसकेन १२३१ तमे वत्सरे लिखितः पाटननगरस्थहस्तलेखसङ्ग्रहे सुरक्षित एको हस्तलेखः सङ्केतितः (द्र०—सं० व्या०

---

१. नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च। न सर्वाणीति गार्ग्यो वैयाकरणानां चैके (निरु० १।१२।२, ३)।

नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् (म० भा० ३।३।१)।

शा० इति० भा० २, पृ० २१४ )। बङ्गाक्षरेषु[1] दुर्गसिंहस्य व्याख्यानं सङ्क्षिप्तम्, [2]नागराक्षरेषु च विस्तृतं किञ्च मन्तोषकरं वर्तते। उपाध्यायसर्वस्वे श्रीसर्वेश्वरोपाध्यायेन दुर्गसिंहीयव्याख्यानमनुसृत्यैषां सूत्राणां किञ्चिद् व्याख्यानमारचितमिति गुरुपदहालदारेण निर्दिष्टम् ( द्र०—व्या० द० इति०, पृ० ५७० )।

परं ग्रन्थानुपलब्धिवशात् तत्र किञ्चिदपि वक्तुं न शक्यते। विमलसरस्वती[3]वचनानुसारेण वररुचिकात्यायनेनोणादिसूत्राणि प्रणीतानीति सम्भावनं प्रमाणिकतां न भजते।

नमस्कृत्य गिरं ( शिवम् ) भूरिशब्दसन्तानकारणम्।
उणादयोऽभिधास्यन्ते बालव्युत्पत्तिहेतवे॥

इत्युणादिप्रकरणारम्भे दुर्गसिंहोक्तौ कस्यचित् कर्तृनाम्नः स्मरणाभावादभिधानपदोपादानाच्च स्वयं दुर्गसिंहेनोणादिसूत्राणि प्रणीतानीति गुरुपदहालदारविचारः श्रद्धया भजनीयः ( द्र०—व्या० द० इति०, पृ० ५७० )। अत्र षट्पादात्मककातन्त्रोणादिसूत्राण्यधिकृत्य किञ्चित् प्रस्तोष्यते।

## शब्दसाधने केचिद् विशेषाः

१—कुलं टालयतीति कुलटा। टल ट्वल वैक्लव्ये, डप्रत्ययः। "कुले टालेरिलुक् डश्च" ( ५।४७ )।

पाणिनीयव्याकरणे "शकन्ध्वादिषु च' ( म० भा० ६।१।९४-वा० ४ ) इति वार्त्तिकेन पररूपे कृते कुलटाशब्दो निष्पाद्यते। अटतीत्यटा, कुलस्य अटा कुलटा। 'अट गतौ' ( भ्वा० २९५ ) इति धातोः कर्तरि "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" ( अ० ३।१।१३४ ) इत्यच्प्रत्ययेन निष्पन्नस्य 'अटा' शब्दस्य कुलशब्देन सह सम्बन्धः। कुलमटतीति व्युत्पत्तिरूपे "कर्मण्यण्" ( अ० ३।२।१ ) इत्यणि प्रत्यये सति 'कुलाटी' इत्यनिष्टं रूपं निष्पद्येत। बहुषु कुलेषु स्वेच्छया अटनशीला भिक्षुकी भवति दुष्कर्मप्रवृत्ता वा काचित् स्त्री।

कातन्त्रे 'कुल' इत्युपपदे इन्प्रत्ययान्तात् वैक्लव्यार्थकटलधातोः डप्रत्यये, इनो लुकि च कृते कुलटेति रूपं निष्पद्यते। न केवलं बहुषु कुलेषु अटनशीलैव स्त्री दुष्कर्मणि प्रवृत्ता भवति किं च गृहे स्थिताऽपि सङ्गदोषात् प्रवृत्तिदोषाद्वा दुष्कर्मणि प्रवर्तते। एवं सा स्वीयैर्दुराचरणैः कुलं व्याकुलं ( = विकारयुक्तम्, दूषितम् ) करोतीति भावो ग्रन्थकारस्याभिमतः।

---

१. द्र०—श्रीमद्गुरुनाथविद्यानिधिसम्पादितं कलिकातातः १३३२ बङ्गाब्दे प्रकाशितं कलापव्याकरणम्, चतुर्थखण्डम् पृ० ८०-९१।

२. डॉ० टी० आर० चिन्तामणिसम्पादितम्, मद्रासविश्वविद्यालयात् १९३४ खिष्टाब्दे प्रकाशितान्युणादिसूत्राणि, पृ० १-७२।

३. Uṇādi Sūtras in various recensions–Introduction, p. xiv.

मन्ये—वार्त्तिककारकात्यायनसमये बहुषु कुलेष्वटनशीलैव स्त्री कुलटापदवाच्या आसीत्, तादृश्या एव चरित्रेषु सन्देहसत्त्वात्। अटनशीलायाः स्त्रिया आचारे प्रतिपदं लोके सन्देहो वर्तते एव। दुर्गसिंहसमये तु कुलेष्वटनशीलताया अभावेऽपि कुलाचारान् या स्वीयेन कार्यजातेन दूषयति स्म सा कुलटाशब्देन व्यवह्रियते स्म। तदानीं गृहस्थास्वपि स्त्रीषु चरित्रदोषस्य सन्देह आसीदिति।

२—तस्यति परद्रव्यमिति तस्कर.। तसु उपक्षये, करप्रत्ययः। **"तसे करः"** **(६।३)**।

पाणिनीये 'चोर' इत्यर्थे विवक्षिते तत् करोतीति विग्रहे तस्करशब्दो निष्पन्नो भवति। अत्र निपातनाद् द्लोप. सुडागमश्च जायते—**"तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च"** ( अ० ६।१।१५७–ग० सू० )। तच्छब्देन निन्द्य चोरकर्म परामृश्यते। कातन्त्र-प्रक्रियानुसारेण यो हि परद्रव्य तस्यति उपक्षपयति स तस्करो भवति। लोके दृश्यते-परद्रव्यस्योपक्षयकारिण जनाः 'चौर' इति वदन्ति, सोऽर्थः कातन्त्रे सारल्येन ज्ञायते। पाणिनीये तु तच्छब्देन चोरकर्मण परामर्शमङ्गीकृत्य यो हि इष्टोऽर्थोऽवगम्यते तत्र किञ्चित्काठिन्य प्रतीयते।

३ —वन्दते उपाध्यायमिति छात्रः। वदि अभिवादनस्तुत्योः, त्रप्रत्ययः। **"वन्दे-रश्छादेशश्च"** **( ६।४२ )**।

पाणिनीयवाङ्मये व्याख्यानभेदो लक्ष्यते छात्रशब्दस्य। तत्र महाभाष्यकारादय.[1]— छत्रसदृशाचरणाद् गुरुश्छत्र भवति। छत्रमुष्णादि निवर्तयति, गुरुश्चाज्ञान निवर्तयति। गुरुविषय पालनमित्यर्थो गौण्या वृत्त्याऽऽङ्गीक्रियते छत्रशब्दस्य। गुरुविषयं पालन शील-मस्येत्यर्थे **"छत्रादिभ्यो णः"** ( अ० ४।४।६२ ) इत्यनेन णप्रत्यये कृते छात्रशब्दः साधु-र्भवतीति व्याचक्षते।

छादयति धर्मादिकमपवारयति यत्तच्छत्रमुच्यते, गुरुकार्यतत्परः शिष्योऽपि छत्रसह-चरिता छादनक्रियामाचरन् गुरोर्यानि छिद्राणि तेषामावरणाय प्रवृत्तश्छत्रशीलो भवति, अतः स शिष्यश्छात्र इत्युच्यते इति काशिकाकारादय आहुः। एतेन तदानीं गुरुणा पतन सूच्यते। उक्तव्याख्यानानुसारेण महाभाष्यकारादीना नायमर्थोऽभिप्रेतस्तेन तदानीं समाजे गुरूणा कश्चिन्महत्त्वातिशय आसीदिति ज्ञायते। कातन्त्रोणादिकारसमये तु उपाध्यायस्या-

---

१ गुरुश्छत्रम्, गुरुणा शिष्यश्छत्रवच्छाद्य, शिष्येण च गुरुश्छत्रवत्परिपाल्यः ( म० भा० ४।४।६२ )। अज्ञान शिष्यस्य छादयति निवर्तयति यतस्तत्र छत्र शीलमस्य, गुरुविषय पालन शीलमस्येत्यर्थः ( म० भा० प्र० ४।४।६२ )।
यथा छत्रमुष्णादि निवर्तयत्येवमज्ञान गुरुर्निवर्तयति, तत्सदृशत्वाद् गुरुश्छत्रम्। वृत्तौ तद्विषय-पालनादौ छत्रशब्दस्य वृत्ति.। तदुक्त भाष्ये-शिष्येण च गुरुश्छत्रमिव परिपाल्य इति ( म० भा० प्र० उ० ४।४।६२ )।

भिवादन-स्तुतिपरायणः शिष्यश्छात्रशब्देन व्यवह्रियते स्म। एतेन तदानीं शिष्यस्य गुरुं प्रति श्रद्धाभाव आसीदिति विज्ञेयम्।

छत्रशब्दस्य यो हि मुख्योऽर्थ आतपत्रमिति ततो णप्रत्ययो न भवति अभिधानाभावात् लोके तदर्थे प्रयोगस्यादर्शनात्।

४—सुखयत्यन्नादिखादनेनेति मुखम्। सुख दुःख तत्क्रियायाम्, कप्रत्ययः। "सुखेः को मुखिश्च" (६।६५)।

पाणिनिसम्प्रदाये अवदारणार्थक-खनुधातो अचि अलि वा प्रत्यये धातोर्मुडागमे, प्रत्यययोर्डित्वाट्टिलोपे मुखशब्दः साधुरिति मन्यते[1]—"डित्खनेर्मुट् स चोदात्तः" (उ० ५।२०)। खन्यते अवदीर्यते अन्नादिकमनेनेति मुखम्। कातन्त्रे तु न केवलमन्नादिकं यदवदारयति=खण्डितं करोति, किं चान्नादिखादनेन यः सुखमुत्पादयति तन्मुखमुदीर्यते इतीष्यते। एकत्रान्नादेः खननमपरत्र चान्नादिखादनेन सुखावाप्तिरिष्टेत्यर्थवैचित्र्यं द्रष्टव्यम्।

**ग्रन्थे केचिद् भ्रष्टपाठाः**

१—"इषेः किकः, तिन्तिडिकादयः" (२।६५, ६६)।

इषीका, मृद्वीकादिशब्दानां दीर्घमध्यत्वात् 'कीक' प्रत्ययो निर्देष्टव्यः।

२—"माया-छाया-सस्यादयः" (४।२६)।

पूर्वं येन प्रत्ययेन कश्चिच्छब्दः साध्यते तदनु तत्प्रत्ययान्ता अनेके शब्दा निपातनात् साधवो विज्ञाप्यन्ते इति निपातनकार्यस्य क्रमो दृश्यते। उक्तसूत्रात् पूर्वं यप्रत्ययविधायकस्य कस्यचित् सूत्रस्यासत्त्वादेव मायादिशब्दानां तदनन्तरं सन्ध्यादिशब्दानां च निपातनात् साधुत्वकथनं न सङ्गच्छते, तस्मादत्र वङ्गाक्षरेषु प्रकाशितपाठानुसारेण "माच्छाशशिभ्यो यः" इत्येव शुद्धः पाठः।

३—"कुरेः करकः" (६।४०)।

कुरकशब्दस्य साधनाय कुरधातोः करकप्रत्ययो विधीयते। अत्र रेफस्य नैरर्थक्येन 'कक' इत्येव प्रत्ययः पठनीयः।

अत्र प्रयुक्तानां पञ्चपञ्चाशदुत्तरशतद्वयमितप्रत्ययानां (२५५) मध्ये समानाकृतिष्वपि केषुचित् प्रत्ययेष्वनुबन्धयोजनायां किञ्चिदन्तरं दृश्यते। यथा—"ऋतृसृधृन्धृधम्य-श्यविवृतिग्रहिभ्योऽनिः" (२।४३) इत्यत्रानिप्रत्यये इकारो नास्त्यनुबन्धस्तेनारणिरित्यादयः प्रयोगा उपपद्यन्ते, परं पञ्चशब्दसिध्यर्थं "पञ्चेरनिः" (५।४३) इत्यनेन विहितेऽनिप्रत्यये इकारोऽनुबन्धः स्वीक्रियते। 'शण्ड' इत्यादिसिध्यर्थं "शमेर्डः" (१।३६) इत्यादिभिर्विहिते डप्रत्यये डकारो नानुबन्धः, परं 'कुलटा' शब्दसिध्यर्थं 'कुले टालेरिलुक् डश्च" (५।४७) इत्यनेन विहिते डप्रत्यये डकारोऽन्त्यस्वरादिलोपार्थमनुबन्धत्वेनाऽऽद्रियते। 'एकः' इत्यादिसिध्यर्थम् 'इण्भीकापाशल्यर्चिकृदाधाराभ्यः कः" (२।५७) इत्यादिभि-

१. द्र०—मा० धा० वृ०, भ्वा० ६०७।

विहिते कप्रत्यये ककारो नानुबन्धः, किं च मुखादिशब्देषु 'सुखेः को मुखिश्च" (६।६५) इत्यादिभिर्विहिते कप्रत्यये ककारोऽनुबन्धो विज्ञेयः। सत्यपि प्रकरणे क्वचिन् सूत्रेषु पुन प्रत्ययनिर्देशेन विशेषः कश्चिद विधीयते। यथोक्तम्—"पुनरुण्ग्रहणादुपधोपधस्याप्यकारस्य दीर्घः। पशि नाशने पंशतीति पाशू रेणुः" ( उ० वृ०, बहिरहितलिपशिभ्य उण् १।३ ) इति।

अत्र निदर्शनाय वर्णानुक्रमेण प्रतिप्रत्ययमेकैकमुदाहरण प्रस्तूयते—

### उणादिसूत्रनिर्दिष्टाः प्रत्ययाः, प्रतिप्रत्ययमेकैकमुदाहरणं च

| क्र० सं० | प्रकृतिः | प्रत्ययः | पादसूत्रसंख्या | उदाहरणम |
|---|---|---|---|---|
| १ | खजि मन्थे | अक. | ३।३६, ६।३४, ४६ | खञ्जकः |
| २ | कल गतौ सख्याने च | अङ्कः | ५।३४ | कलङ्कः |
| ३ | शॄ सॄ हिंसायाम् | अङ्गः | १।४७-४६, ५।२२, २३ | शारङ्गः |
| ४ | प्रीञ् तर्पणे | अङ्गुक् | ५।१२ | प्रियङ्गुः |
| ५ | णमु प्रह्वत्वे | अञ् | ६।४५ | नाम |
| ६ | शक्लृ गतौ | अट | ३।५७, ५८, ६।१३ | शकटः |
| ७ | कमु कान्तौ | अठः | १।३६ | कमठ |
| ८ | डु भृञ् धारण-पोषणयोः | अतः | ३।६, ७ | भरतः |
| ९ | वह प्रापणे | अतिः | ४।११, ५।३७ | वहतिः |
| १० | खल चलने | अतिक. | ६।२६ | खलतिकम् |
| ११ | ऋ गतौ | अतिः | ३।४१ | अरति. |
| १२ | अम रोगे | अत्र. | ३।५ | अमत्रम् |
| १३ | वस निवासे | अथ. | ३।८ | आवसथः |
| १४ | सृ गतौ | अथि. | ३।२६ | सारथि. |
| १५ | शॄ हिंसायाम् | अदि. | १।५०, ५१ | शरत् |
| १६ | उष दाहे | अधिः | ६।६३ | ओषधि. |
| १७ | उन्दी क्लेदने | अन. | ६।३५ | ओदनम् |
| १८ | ऋ गतौ | अनिः | २।४३ | अरणिः |
| १९ | पचि विस्तारे | अनिः | ५।४३, ४४ | पञ्च |
| | | ( अत्र इकारोऽनुबन्ध. ) | | |
| २० | णु स्तुतौ | अन् | ५।३७ | नव |
| २१ | ऋ गतौ | अन्यः | ३।२, ४ | अरण्यम् |
| २२ | सृ गतौ | अपः | ३।२०, २१ | सर्षपः |

नेय सञ्ज्ञा, तस्य विवक्षितसम्पूर्णस्पष्टार्थप्रतिपादकत्वात्[१]। कृदन्तस्य योग्यतयैव प्रयोगादत्र धातुविभक्ती वर्जयिष्यतीति मनसि कृत्वा तत्पूर्वदशायामपि योग्यतया धातुविभक्तिवर्जमित्युच्यते, अन्यथा प्रासिमन्तरेण प्रतिषेधस्यासम्भवात् अत्र च प्राप्तेरभावात् प्रतिषेधो नोपयुज्येत। महर्षिपाणिनिना प्रातिपदिकसञ्ज्ञाऽत्रार्थे प्रयुज्यते[२]। लिङ्गसञ्ज्ञाप्रदेशाः—"लिङ्गान्तनकारस्य" (२।३।५६) इत्येवमादयः।

२१—घुट्सञ्ज्ञा (पञ्चादौ घुट्, जश्शसौ नपुंसके २।१।३, ४)।

'सि-औ-जस्-अम्-औ' इत्येतेषां पञ्चप्रत्ययानां घुट्सञ्ज्ञा क्रियते, महर्षिपाणिनिना सर्वनामस्थानमिति[३] महती सञ्ज्ञा पूर्वाचार्योपहासार्थं प्रयुक्ता। जश्शसोर्नपुंसके एव घुट्सञ्ज्ञाया व्यवहाराय सूत्रान्तरं प्रणीय वारिणी, त्रपुनीत्यादौ दीर्घविधिर्वारितः। घुट्प्रदेशाः—"घुटि चासम्बुद्धौ" (२।२।१७) इत्येवमादयः।

२२—सम्बुद्धिसञ्ज्ञा (आमन्त्रिते सि सम्बुद्धिः २।१।५)।

आमन्त्रितार्थे विहितस्य सिप्रत्ययस्य सम्बुद्धिसञ्ज्ञा भवति। सम्बुध्यतेऽभिमुखो भवति यया सा सम्बुद्धिः। महर्षिपाणिनिनाऽपि आमन्त्रितप्रथमाया एकवचनस्य सम्बुद्धिसञ्ज्ञा[४] कृता। आमन्त्रितम्=सिद्धस्याभिमुखीकरणम्। सिद्धशब्दोऽत्र विद्यमानवचनः। अभिमुखीकरणम्=कार्योन्मुखीकरणम्। वृक्षाद्यचेतनपदार्थस्याऽऽमन्त्रणं तदधिष्ठातृदेवमभिलक्ष्य क्रियते। उक्तं च—

अचेतनस्य वृक्षस्य कथं सम्बोधनं विदुः।
तदधिष्ठातृदेवानां चेतनेत्यभिधीयते॥

(उद्धृत०, वं० भा० २।१।५) इति।

सम्बुद्धिप्रदेशाः—"सम्बुद्धौ च" (२।१।३९, ५६) इत्येवमादयः।

२३—अग्निसञ्ज्ञा (इदुदग्निः २।१।८)।

लिङ्गस्थयोरिकारोकारयोरग्निसञ्ज्ञा क्रियते। सञ्ज्ञेयमिकारोकारान्तस्य लिङ्गस्य नैव विज्ञेया, अन्यथा 'अग्नी, पटू' इत्यादावौकारः पूर्वरूपतामापद्यमानः 'अग्नि-पटु' इति शब्दाकृतिभावं प्राप्नुयात्। अग्निशब्दस्थ इकारोऽत्रोकारस्योपलक्षणम्। सूत्रे तपरकरणमसन्देहार्थम्, अन्यथा सेनानीत्यादावपि ईकारस्याग्निसञ्ज्ञायां सत्याममोऽकारलोपः प्रवर्तेत। महर्षिपाणिनिनाऽत्र घिसञ्ज्ञा[५] विधीयते। अग्निसञ्ज्ञाप्रदेशाः—"अग्नेरमोऽकारलोपः" (३।१।५०) इत्येवमादयः।

१. द्र०—पञ्जी २।१।१
२. अर्थवदधातुरप्रत्ययः प्रातिपदिकम्, कृत्तद्धितसमासाश्च (अ० १।२।४५, ४६)।
३. शि सर्वनामस्थानम्, सुडनपुंसकस्य (अ० १।१।४२, ४३)।
४. एकवचनं सम्बुद्धिः (२।३।४९)।
५. शेषो घ्यसखि, पतिः समास एव, षष्ठीयुक्तश्छन्दसि वा (अ० १।४।७-९)।

२४—नदीसञ्ज्ञा ( ईदूत्स्त्र्याख्यौ नदी २।१।६ ) ।

स्त्रीलिङ्गार्थे यौ 'ई-ऊ' इत्येतौ प्रत्ययौ विधीयेते तयोर्नदीसञ्ज्ञा क्रियते। "यू स्त्र्याख्यौ नदी" इत्येवरूपे सूत्रे कृते ह्रस्वयोरीकारोकारयोः सञ्ज्ञेयं प्रवर्तेत। आख्याग्रहणेन स्त्रीलिङ्गार्थे एव विहितयोरीकारोकारयो सञ्ज्ञा भवति, अन्यथा विशेष्यभूतेन ब्राह्मण्यादिस्त्रीलिङ्गान्तशब्देन सह सम्बन्धे सेनान्यादिशब्दानामपीकारादेर्नदीसञ्ज्ञा स्यात्। नदीप्रदेशाः—"नद्या ऐ आसासाम्" ( २।१।४५ ) ।

२५—श्रद्धासञ्ज्ञा ( आ श्रद्धा २।१।१० ) ।

नित्यस्त्रीलिङ्गार्थे विहितस्याऽऽकारस्य श्रद्धासञ्ज्ञा क्रियते। कीलालपाः सोमपाः स्त्रीत्यादावुपचारेणाप्याख्याग्रहणसामर्थ्यान्नेयं सञ्ज्ञा प्रवर्तते। एतास्तिस्रः सञ्ज्ञाः ( अग्नि-नदी-श्रद्धाः ) गणनिर्देशमनुसृत्य प्रयुक्ता इति प्रतीयते। श्रद्धासञ्ज्ञाप्रदेशाः—"श्रद्धायाः सिर्लोपम्" ( २।१।३७ ) इत्येवमादयः।

२६—उपधासञ्ज्ञा ( अन्त्यात् पूर्व उपधा २।१।११ ) ।

वर्णसमुदायस्य लिङ्गस्य ( प्रातिपदिकस्य ) धातोश्च योऽन्त्यो वर्णस्तस्मात् पूर्वस्य वर्णस्योपधासञ्ज्ञा क्रियते। उपधानम् = समीपे स्थितिरित्युपधा। समीपशब्दोऽन्त्यात् पूर्वमित्यर्थेऽत्राभीष्टः। लिङ्गधात्वोर्वर्णमयत्वात् पूर्वो वर्ण एव ग्रहीतुं शक्य इत्यभिप्रायेण सूत्रे वर्णशब्दस्य समावेशो न क्रियते। पाणिनीये[1] निरुक्तादौ[2] चोक्तार्थे एव सञ्ज्ञेयं प्रयुक्ता दृश्यते। उपधाप्रदेशा —"अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" ( ३।६।५ ) इत्येवमादयः।

२७—अनुषङ्गसञ्ज्ञा ( व्यञ्जनान्नोऽनुषङ्गः २।१।१२ ) ।

लिङ्गस्य धातोश्चान्त्ये यद् व्यञ्जनं तस्मात् पूर्वस्य नकारस्यानुषङ्गसञ्ज्ञा भवति। [3]काशकृत्स्नव्याकरणेऽनुनासिकवर्णानामनुषङ्गसञ्ज्ञा क्रियते। [4]भर्तृहरिन्यासकाराभ्यां[5] पूर्वाचार्यमते सञ्ज्ञेयं सङ्केतिता। अनुषङ्गप्रदेशाः—"अनुषङ्गश्चाक्रुञ्चेत्" ( २।२।३६ ) । इत्येवमादयः।

२८—धुट्सञ्ज्ञा ( धुड्व्यञ्जनमनन्तस्थानुनासिकम् ( २।१।१३ ) ।

अन्तस्थानुनासिकसञ्ज्ञकान् वर्णान् विहायान्येषां व्यञ्जनवर्णानां धुट्सञ्ज्ञा भवति। पाणिनीये एतेषां वर्णानां बोधो झल्प्रत्याहारेण क्रियते। अन्तस्थानुनासिकसाहचर्याद्

१. अलोऽन्त्यात् पूर्व उपधा ( अ० १।१।६५ ) ।

२ अथापि उपधालोपो भवति, जग्मतुर्जग्मुरिति। अथाप्युपधाविकारो भवति, राजा दण्डीति (२।१) ।

३. अनुनासिकोऽनुषङ्गः ( का० धा० व्या०, सू० ७ ) ।

४ पूर्वाचार्यसञ्ज्ञेयं नकारस्य ( म० भा० दी०, पृ० १३४ ) ।

५. नकारस्योपधाया 'अनुषङ्ग' इति पूर्वाचार्यैः सञ्ज्ञा कृता ( न्या० १।२।४७ ) ।

व्यञ्जनवर्णा एव ग्रहीतुं शक्यन्ते इति सूत्रे व्यञ्जनग्रहणं स्वार्थमवगन्तव्यम्। धुट्सञ्ज्ञा-प्रदेशाः –"धुटश्च धुटि" ( ३।६।५१ ) इत्येवमादयः।

२९.—अपादानसञ्ज्ञा ( यतोऽपैति भयमादत्ते वा तदपादानम्, ईप्सितं च रक्षार्थानाम् २।४।८, ९ )।

यस्माद् विभागः, भयम्, ग्रहणं च भवति तस्य, रक्षार्थानां धातूनां प्रयोगे ईप्सितानीप्सितयोश्च कारकयोरपादानसञ्ज्ञा भवति। अपकृष्य बुद्ध्या पृथक्कृत्य वस्तु आदीयते = बुद्ध्या गृह्यते यस्मात् तदपादानम्। अपादानं बाह्यं बौद्धं च। व्याकरणे लक्षण-प्रपञ्चयोराश्रयणात्[1] प्रपञ्चे च गौरवलाघवयोरनाश्रयणात्[2] पाणिनीये[3] प्रदर्शितापादानसूत्र-विस्तरोऽबुधबोधनाय विज्ञेयः। उक्तं च भर्तृहरिणा —

निर्धारणे विभक्तं यो भीत्रादीनां च यो विधिः।
उपात्तापेक्षितापायः सोऽबुधप्रतिपत्तये॥
( वा० प० ३।७।१४१ ) इति।

महर्षिपाणिनिना तानि पूर्वाचार्यकृतानि सूत्राणि प्रोक्तानि न तु तदुपज्ञानि। प्रत्याख्यानेन सम्यगवबोधाय यत्नस्य द्वैगुण्यमपेक्ष्यते, किं च सुदृढतरः संस्कारोऽपि न जायते इति धिया तानि सूत्राणि महर्षिपाणिनिना समादृतानीत्यत्र कातन्त्रविस्तरकारेण स्वीयमभिमतं प्रकाशयतोक्तम्—

प्रत्याख्यातुमिहाख्यातमिति तन्त्रान्तरोदितम्।
स्वीकर्तुमथवास्माकं पक्षपातो न विद्यते॥

किञ्च—

तन्त्रान्तरप्रणीतानां सूत्राणां परमाग्रहात्।
प्रत्याख्यानेन यत्नस्य द्वैगुण्यमुपजायते॥

संयुक्तस्यैव पदार्थस्य विभागो जायते, यस्माद् विभागः स एवावधिरूप इति तस्यापादानता[4]। रक्षणक्रियाया व्याप्यत्वात् कर्मसञ्ज्ञावारणाय "ईप्सितं च रक्षार्थानाम्" ( २।४।९ ) इति सूत्रमारब्धम्, अन्यथा बुद्धिनिबन्धनमवधिमात्रमादायात्राप्यपादान-

१. लक्षणप्रपञ्चाभ्यां हि व्याकरणम् ( वा० प०—प्र० प्र० ३।१।१४७ )।

२. न च प्रपञ्चे गुरुलाघवं चिन्त्यते ( न्या० १।४।२५ )।

३. ध्रुवमपायेऽपादानम्, भीत्रार्थानां भयहेतुः, पराजेरसोढः, अन्तर्धौ येनादर्शनमिच्छति, आख्यातोपयोगे, जनिकर्तुः प्रकृतिः, भुवः प्रभवः ( अ० १।४।२४-२६, २८-३१ )।

४. संयुक्तस्य हि विश्लिष्टक्रियारम्भो भवेद् यतः।
तदेवावधिभावेन अपादानमिति स्मृतम्॥
( कात० वृ० टी० २।४।८ )।

मुपपद्येत। नाप्यशास्त्रकारेण सञ्ज्ञेयं निर्दिष्टा[1]। अपादानसञ्ज्ञाप्रदेशाः—"अपादाने पञ्चमी" (२।४।१६) इत्येवमादयः।

३०—**सम्प्रदानसञ्ज्ञा** (यस्मै दित्सा रोचते धारयते वा तत् सम्प्रदानम् २।४।१०)।

यस्मै दातुमिच्छा, यस्मै रोचते, यस्मै धारयते वा तस्य कारकस्य सम्प्रदानसञ्ज्ञा भवति। सम्यक् प्रकर्षेण दीयते यस्मै तत् सम्प्रदानम्। प्रकर्षशब्दः पूजार्थं द्योतयति, तेन रजकस्य वस्त्रं ददातीत्यादौ न सम्प्रदानता। तदुक्तम्—

सम्प्रदानं तदेव स्यात् पूजानुग्रहकाम्यया।
दीयमानेन संयोगात् स्वामित्वं लभते यदि॥

(कात० वृ० टी० २।४।१०) इति।

हेलाराजमते रजकस्य वस्त्रं ददातीत्यादौ ददातेर्गौणः प्रयोग इति सम्प्रदानसञ्ज्ञाऽभावः। 'चपेटां ददाति' इत्यादिभाष्यकारप्रदर्शितप्रयोगाणां समाधानं चापि प्रस्तुतम्[2]। स्वस्वत्वपरित्यागपूर्वकपरस्वत्वापादनं सम्प्रदानमिति 'प्रदीयतां दाशरथाय मैथिली' इत्यत्र मैथिल्या रावणस्य स्वत्वाभावेऽपि स्वत्वविवक्षया सम्प्रदानं सङ्गच्छते। सम्प्रदानं त्रिविधं कीर्त्यते—

अनुमन्त्रनिराकर्तृ प्रेरकं त्यागकारणम्।
व्याप्येनाप्तं ददातेस्तु सम्प्रदानं प्रकीर्तितम्॥

(कात० वृ० टी० २।४।१०) इति।

यथा गुरवे गां ददाति, आदित्यायार्घ्यं ददाति ब्राह्मणाय वस्त्रं ददातीत्यादि। एताः सम्प्रदानादयः कारकसञ्ज्ञा लोकव्यवहारे सिद्धा अप्यत्र सुखार्थमुपन्यस्ताः[3]। सम्प्रदानसञ्ज्ञाप्रदेशाः—"सम्प्रदाने चतुर्थी" (२।४।१९) इत्येवमादयः।

---

१. तत् प्राहुः सप्तविधं पदकारकसंयुतं प्रथितसाम्यम्।
निर्देशः सम्प्रदानापादानप्रभृतिसञ्ज्ञाभिः॥
(२।४।१३)।

२. रजकस्य वस्त्रं ददाति, ऋत पृष्ठं ददातीत्यादौ च गौणो ददातेः प्रयोगः, ददात्यर्थाभावात् त्यागमात्रस्यावगमात्। शूद्राय मतिं दद्यादित्यत्रापि मतिसन्तानस्यापक्रामतोऽस्त्येव परोपयोगः। मतिसन्तानस्यैकदेशस्त्यज्यमान इति स्वत्वनिवृत्त्यङ्गपरस्वत्वापादनलक्षणो मुख्य एवात्र ददात्यर्थः। खण्डिकोपाध्यायस्तस्मै चपेटां ददातीत्यादौ वस्तुतोऽसत्यपि चपेटादिस्वाम्ये तदुपकारितया दातुः स्वामित्वाभिसन्धिरस्त्येव। यद्यपि प्रतिकूलरूपत्वाच्चपेटायास्तदानीमुपयोगो नास्ति, तथापि फलद्वारेणास्त्येव परोपयोगित्वम्। चपेटामहत्वे शास्त्राभ्यासयोग्यत्वात् फलावाप्तेः (वा० प०—प्र० प्र० ३।७।१२९) इति।

३. सम्प्रदानादयः सञ्ज्ञा हन्विधारिविवर्जिताः।
लोकोपचारतः सिद्धा सुखबोधाय दर्शिता॥
(कात० वृ० टी० २।४।१६)।

३१—अधिकरणसञ्ज्ञा ( य आधारस्तदधिकरणम् २।४।११ )।

कर्तृकर्मसमवायिन्याः क्रियाया यः परम्परयाऽऽधारस्तस्याधिकरणसञ्ज्ञा भवति। अधिक्रियते आश्रीयते इत्यधिकरणमाश्रय उच्यते, परम्परया क्रियाधारभूतत्वमधिकरणत्वमित्यर्थः। तदुच्यते—

क्रियाश्रयो हि कर्ता वा कर्म चेति व्यवस्थितम्।
तयोरन्यतरद्वारा क्रियाधारस्य संज्ञिता[1]॥

( द्र०—कवि० २।४।१७ ) इति।

अत्र टीकाकारमते आधारश्चतुर्विधः, १—औपश्लेषिकः, २—अभिव्यापकः, ३—वैषयिकः, ४—सामीपिकश्च। कटे आस्ते, तिलेषु तैलम्, दिवि देवा, गङ्गाया घोष इति क्रमेणोदाहरणानि। अत्र 'तिलेषु तैलम्, दिवि देवाः' इत्यत्रौपश्लेषिकमाधार ससाध्याभिव्यापकस्य 'घटे रूपम्' वैषयिकस्य च 'भूतले घटाभावः' इत्युदाहरण मनुते कविराजः। 'गङ्गाया घोषः' इत्यत्राप्यौपश्लेषिक एवाऽऽधारो न सामीपिको न चाप्यौपचारिक इति युक्त्या वररुचिमतमन्यथाकृत्य प्रायेण सर्वतन्त्रमतमाधारस्य त्रैविध्यमङ्गीकरोति। उच्यते च—

आधारस्त्रिविधो ज्ञेयः कटाकाशतिलेषु च।

( द्र०—व्या० द० इति०, पृ० २५० ) इति।

हेलाराजस्यापीद सम्मतम् ( द्र०—वा० प०-प्र० प्र० ३।७।१४६ )। सारस्वतमते 'सामीपिक-नैमित्तिक-औपचारिक' इत्येतदन्यदप्याधारत्रितय स्वीक्रियते[2]। एव षडाधारा इत्थमुदाह्रियन्ते—

कटे शेते कुमारोऽसौ वटे गावः सुशेरते।
तिलेषु विद्यते तैलं हृदि ब्रह्मामृतं परम्॥
युद्धे संनह्यते धीरोऽङ्गुल्यग्रे करिणां शतम्॥

( सिद्धा० च०, पृ० २४८, आधारे सप्तमी ) इति।

अधिकरणसञ्ज्ञाप्रदेशाः—"अधिकरणे सप्तमी" ( २।४।१६ ) इत्येवमादयः।

३२—करणसञ्ज्ञा ( येन क्रियते तत् करणम् २।४।१२ )।

क्रियासिद्धौ बहूना साधनाना मध्येऽनेनैतत् करोमीति कर्त्रा यत् प्रकृष्टोपकारकमन्तरङ्गं विवक्षित तस्य करणसञ्ज्ञेष्यते। तदुक्तम्—

---

भर्तृहरिणाप्युक्तम्-

१. कर्तृकर्मव्यवहितामसाक्षाद् धारयत् क्रियाम्।
उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरण स्मृतम्॥
( वा० प० ३।७।१४८ )।

२. निमित्तादिप्रभेदाच्च षड्विध कैश्चिदिष्यते॥
( द्र०—व्या० द० इति०, पृ० २५०-टि० )।

कारकाण्यवधानेन क्रियानिष्पत्तिकारणम् ।
यद् वै विवक्षितं तेषु करणं तत् प्रकीर्तितम् ॥

( कात० वृ० टी० २।४।१२ ) इति ।

एतच्च करण द्विविधम्—बाह्यमाभ्यन्तर च । बाह्य यथा—दात्रेण धान्यं लुनाति, आभ्यन्तरम्–मनसा मेरु गच्छतीत्यादि । 'प्रकृत्याऽभिरूपः' इत्यादौ भवतीति गम्यते, तेनाभिरूपभवने प्रकृत्यादिकरणं सम्पद्यते ( द्र०–पञ्जी २।४।१२ ) । करणसञ्ज्ञाप्रदेशाः—"करणे तृतीया" ( २।४।१६ ) इत्येवमादय ।

३३—कर्मसञ्ज्ञा ( यत् क्रियते तत् कर्म २।४।१३ ) ।

कर्त्रा क्रियमाणस्य कारकस्य कर्मसञ्ज्ञा क्रियते । कर्म द्विविधम्–ईप्सितमनीप्सित चेति । ईप्सित त्रिविधम्[१], १—निर्वर्त्यम्, २—विकार्यम्, ३—प्राप्य च । यथा—कट करोति, ओदन पचति, आदित्य पश्यतीत्यादि । अनीप्सित चतुर्विधम्[१], १—औदासीन्येन प्राप्यम्, २—कर्तुर्विपरीतफलशालित्वेनानीप्सितम्, ३—सञ्ज्ञान्तरैरनाख्यातम्, ४—अन्यपूर्वकमिति । यथा—ग्राम गच्छन् वृक्षमूलान्युपसर्पति, अहिं लङ्घयति, गा दोग्धि पय., ग्राममध्यास्ते इत्यादि । पाणिनीये "कर्तुरीप्सिततम कर्म" ( अ० १।४।४९ ) इत्यस्माद् भिन्न यत् कर्म व्याख्यातं (अ० १।४।५०-५३) तत् प्रपञ्चप्रदर्शनार्थमेवेत्युच्यते भर्तृहरिणा—

यथैवैकमपादान शास्त्रे भेदेन दर्शितम् ।
तथैकमेव कर्मापि भेदेन प्रतिपादितम् ॥

( वा० प० ३।७।७८ ) इति ।

सर्वो हि धात्वर्थ करोत्यर्थेनाभिव्याप्तः, तेन स्तोक पचतीत्यस्य स्तोक पचन करोतीत्यर्थः सम्पद्यते, क्रियायाश्चामूर्तत्वाल्लिङ्गसङ्ख्याभ्यामयोगात् तद्विशेषणस्य स्तोकस्य न लिङ्गसङ्ख्याभ्या योगः कर्तुं शक्यते इत्युत्सर्गसिद्ध नपुसकत्वमेकत्व च न्यायात् प्रवर्तते । कर्मप्रदेशा·—"कर्मणि द्वितीया" ( २।४।१९ ) इत्येवमादयः ।

३४—कर्तृसञ्ज्ञा ( यः करोति स कर्ता २।४।१४ ) ।

धातुवाच्यव्यापारे यत् स्वतन्त्र कारक तस्य कर्तृसञ्ज्ञेष्यते । प्राधान्येन धातुवाच्यव्यापारवत्त्व कर्तृत्वमित्यर्थः । उच्यते च पूर्वाचार्यैः—

धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते ।
व्यापारे च प्रधानत्वात् स्वतन्त्र इति चोच्यते ॥

( द्र०–पाणिनीय व्याकरण का अनुशीलन, पृ० १३६ ) इति ।

---

१. निर्वर्त्यं च विकार्यं च प्राप्य चेति त्रिधा मतम् ।
तत्रेप्सिततम कर्म चतुर्धाऽन्यत्तु कल्पितम् ॥
औदासीन्येन यत् प्राप्य यच्च कर्तुरनीप्सितम् ।
सञ्ज्ञान्तरैरनाख्यात यद्यच्चाप्यन्यपूर्वकम् ॥

( वा० प० ३।७।४५-४६ ) इति ।

प्रयोगाभावेऽपि कर्तृकर्मस्थक्रियाया मुख्यभावेन कारकत्वात् तस्य कर्तृत्वमुपपद्यते[1]। कर्तृसञ्ज्ञाप्रदेशाः—"कर्तरि च" ( २।४।३३ ) इत्येवमादयः।

३५—हेतुसञ्ज्ञा ( कारयति यः स हेतुश्च २।४।१५ )।

व्यापारे स्वतन्त्र कारक कर्तारं यो हि पुरुषः कारयति ( किञ्चित् कर्तुं प्रेरयति ) तस्य हेतुसञ्ज्ञा सम्पद्यते। उच्यते च—

प्रेषणाध्येषणे कुर्वंस्तत्समर्थानि वाचरन्।
कर्तैव विहिता शास्त्रे हेतुसंज्ञा प्रपद्यते॥

( वा० प० ३।७।१२५ ) इति।

भृत्यादेराज्ञापूर्वको व्यापार प्रेषणम्, यथा—हरति धन भृत्यः, यज्ञदत्तो भृत्येन धन हारयति। गुर्वादेः सत्कारपूर्वको व्यापारोऽध्येषणम्, यथा—गुरुः शिष्य पुनाति, यज्ञदत्तो गुरुणा शिष्य पावयति। भिक्षा—कारीषादिरचेतनोऽपि वासाध्ययनादौ समर्थ इति भिक्षा वासयति, कारीषोऽध्यापयतीत्यादयः प्रयोगाः साधुत्व भजन्ते। सूत्रे चकारात् कृतः प्रेरकस्य कर्तेत्यपि सञ्ज्ञा विज्ञेया। हेतुकर्तृप्रदेशाः—"धातोश्च हेतौ" ( ३।२।१० ) इत्येवमादयः।

३६—समाससञ्ज्ञा ( नाम्ना समासो युक्तार्थः २।५।१ )।

वस्तुवाचिना नाम्ना समूह एकार्थीभावमापन्नः सन् समाससञ्ज्ञा प्राप्नोति। अत्र नामपदेन स्याद्यन्त पद गृह्यते। युक्तम् = मिलितम्। विशेष्यपदस्य विशेषणपदेन सह यद् मिलनं तदेव युक्तशब्देनोच्यते[2]। समसनं समासः सङ्क्षेपः, स चानेकपदाना सम्भाव्यते। लोके हि कस्यचिद् वचनस्य विषये कदाचित् समासशैली समाद्रियते कदाचिच्च व्यासशैली। शास्त्रेऽपि तथैव दृश्यते, तदुच्यते—

विस्तीर्य हि महज्ज्ञानमृषिः सङ्क्षेपतोऽब्रवीत्।
इष्टं हि विदुषां लोके समासव्यासधारणम्॥

( म० भा० १।१।५१ ) इति।

समासशब्दाना प्रयोगस्य नियामको लोकव्यवहार एव। अर्थाल्लोकव्यवहारानुसारेणैव समासशब्दाः शास्त्रे प्रयुज्यन्ते। व्याकरणेन तत्साधनप्रकारस्य प्रदर्शनमबुधाना ( मन्दमतीनाम् ) कृते निदर्शनाय कृतमित्यवगन्तव्यम्। उक्त च हरिणा—

---

१ यः क्रिया कर्तृकर्मस्था कुरुते मुख्यभावतः।
अप्रयुक्तः प्रयुक्तो वा स कर्ता नाम कारकम्॥
( द्र०—कात० वृ० टी० २।४।१५ )।

१. यदाह विमलमतिः—
विशेष्यस्य विशेषेण मिलित युक्तमुच्यते।
समासाख्यं तदेव स्यात् तद्धितोत्पत्तिरेव च॥
( द्र०—पञ्जी २।५।१ )।

अबुधान् प्रत्युपायाश्च विचित्राः प्रतिपत्तये।
शब्दान्तरत्वादत्यन्तं भेदो वाक्यसमासयोः॥
उपायमात्रं नानात्वं समूहस्त्वेक एव सः।
भिन्नाः सम्बोधनोपायाः पुरुषेष्वनवस्थिताः॥

( वा० प० ३।१४।४६, ६८, ६९ ) इति।

स समासः क्वचिन्नित्य क्वचिद् विकल्पः क्वचिच्च न स्यात्। समासाद् भिन्न वाक्यमुच्यते, वाक्यस्यैव समाससत्त्वाद् वाक्यरूप एव वा समास. । अवान्तरभेदैः स समासोऽष्टाविंशतिधा सम्पद्यते। समासप्रदेशाः—"समासे भाविन्यनञः क्त्वो यप्" ( ४।६।५५ ) इत्येवमादयः।

३७—कर्मधारयसञ्ज्ञा ( पदे तुल्याधिकरणे विज्ञेयः कर्मधारय. २।५।५ )।

द्वयो पदयोर्यत्र समासे तुल्याधिकरणता भवति स कर्मधारयसञ्ज्ञकः समास उच्यते। 'कृष्णसर्पः' इत्यादौ तुल्याधिकरणयोः पदयोर्नित्यः समासः, 'रामो जामदग्न्यः' इत्यादावसमास एव। वाररुचसङ्ग्रहे षोढा, अग्निपुराणे च सप्तधाऽस्य समासो व्याख्यायते। अग्निपुराणे यथा—

कर्मधारयः सप्तधा नीलोत्पलमुखः स्मृतः।
विशेषणपूर्वपदो विशेष्योत्तरतस्तथा॥
वैयाकरणखसूचिः शीतोष्णं द्विपदं शुभम्।
उपमानपूर्वपदः शङ्खपाण्डुर इत्यपि॥
उपमानोत्तरपदः पुरुषव्याघ्र इत्यपि।
सम्भावनापूर्वपदो गुणवृद्धिरितीदृशम्॥
गुण इति वृद्धिर्वाच्या सुहृदेव सुबन्धुकः।
अवधारणपूर्वपदः ······ ··········॥

( ३५५।८-११ ) इति।

अत्र कर्मशब्दो धर्मपर इति केचिदामनन्ति। कृष्णसर्प., नीलोत्पलमित्यादौ कृष्णत्वादिधर्मविशिष्टस्य कृष्णादिपदस्य सर्पादिपदेन सह समाससत्त्वात् तद् युक्त प्रतीयते। कर्मधारयप्रदेशाः–"कर्मधारयसंज्ञे तु पुंवद्भावो विधीयते" (२।५।२०) इत्येवमादयः।

३८—द्विगुसञ्ज्ञा ( सङ्ख्यापूर्वो द्विगुरिति ज्ञेयः २।५।६ )।

सङ्ख्यापूर्वः कर्मधारयसमासस्तद्धितार्थोत्तरपदसमाहारेषु' द्विगुसञ्ज्ञको भवति। यथा—पञ्चसु कपालेषु सस्कृत ओदन. पञ्चकपाल ओदनः, द्वौ वेदावधीते द्विवेदः। पञ्च गावो धनमस्येति पञ्चगवधन·। पञ्चाना पूलाना समाहारः पञ्चपूलीति। अस्य भेदद्वय-

मुच्यते। एकत्रैकवद्भावः, अन्यत्र च तदभावः[1]। यथा—पञ्चपूलीत्यादौ समाहार एकवद्भावः, दशदिश इत्यादावनेकवद्भावः। बृहद्देवतादौ[2] स्मरणात् सञ्ज्ञेयं पूर्वाचार्यकृतेति विज्ञेयम्। अत्र प्रायेण द्वयोः पदयोः समासो भवतीत्यन्वर्था द्विगुसञ्ज्ञा, द्वौ गावौ शब्दौ (पदभूतौ) यस्मिन् स द्विगुः। अनयोः कर्मधारयद्विगुसमासयोस्तत्पुरुषसञ्ज्ञाऽपि क्रियते-"तत्पुरुषावुभौ" (२।५।७) इति। द्विगुसञ्ज्ञाप्रदेशा-"तथा द्विगोः" (२।५।१७)।

३९—तत्पुरुषसञ्ज्ञा (तत्पुरुषावुभौ,
विभक्तयो द्वितीयाद्या नाम्ना परपदेन तु।
समस्यन्ते समासो हि ज्ञेयस्तत्पुरुषः स च॥
२।५।७, ८)।

स्याद्यन्तेन परपदेन सह यत्र द्वितीयाद्या विभक्तयः समस्यन्ते स तत्पुरुषसञ्ज्ञकः समास उच्यते, 'कर्मधारय-द्विगु' इत्यनयोरपि तत्पुरुषत्वात् प्रथमाऽपि यत्र परपदेन समस्यते सोऽपि तत्पुरुषः। तस्य पुरुषस्तत्पुरुषः। तत्पुरुषशब्दे उत्तरपदस्थपुरुषशब्दस्य प्रधानत्वादुत्तरपदार्थप्रधानोऽयं समासः। निष्कौशाम्बिरित्यादौ 'निरादयो गताद्यर्थे पञ्चम्या' इति वार्त्तिकेन समासे कृते पश्चादभिधानाद् निरादीना पूर्वनिपातः। स चायमष्टधा स्मर्यते, सोदाहरण यथा—

प्रथमाद्यास्तत्पुरुषाः सप्त नञ्पूर्वकस्तथा।
अष्टौ तत्पुरुषा ज्ञेयास्तदुदाहरण यथा॥
पूर्वकायः सुतप्राप्तः शङ्कुलाखण्ड इत्यपि।
यूपदारु व्याघ्रभयं राजभृत्योऽक्षशौण्डिकः॥
अब्राह्मण इति ख्याता अष्टौ तत्पुरुषाः क्रमात्॥
(वार० स०-टी०, कारि० १०) इति।

निरुक्तादौ[3] स्मरणात् प्राचीनेय सञ्ज्ञा। तत्पुरुषसञ्ज्ञाप्रदेशाः—"नस्य तत्पुरुषे लोप्यः" (२।५।२२) इत्येवमादयः।

---

१. एकवद्भावी चानेकवद्भावीति द्विगुर्द्विधा।
पञ्चपूली दशदिश इत्युदाहरणद्वयम्॥
(वार० सं०-टी०, कारि १०)।

२ द्विगुर्द्वन्द्वोऽव्ययीभाव कर्मधारय एव च।
पञ्चमस्तु बहुव्रीहि षष्ठस्तत्पुरुष स्मृत॥
(२।१०५)।

३. तद्धितसमासेष्वेकपर्वसु चानेकपर्वसु च पूर्वं पूर्वमपरमपर प्रविभज्य निर्ब्रूयात। राज्ञ पुरुषो राजपुरुष., राजा राजतेः (२।१)।

४०—बहुव्रीहिसञ्ज्ञा ( स्याता यदि पदे द्वे तु यदि वा स्युर्बहून्यपि ।
तान्यन्यस्य पदस्यार्थे बहुव्रीहि. विदिक् तथा ॥
२।५।६. १० ) ।

विशेषणविशेष्यभावापन्ने द्वे बहूनि वा पदान्यन्यपदस्यार्थे यत्र समासे वर्तन्ते स समासो बहुव्रीहिसञ्ज्ञको भवति । दिग्वाचकयोः शब्दयोर्य. समास. सोऽपि बहुव्रीहिसञ्ज्ञको वेदितव्य. । स च सप्तविधः स्मर्यते, यथा—

द्विपदश्चानेकपदस्सङ्ख्योभयपदस्तथा ।
सङ्ख्योत्तरपदश्चैव सहपूर्वपदस्तथा ॥
दिगन्तरालचिह्नश्च व्यतिहारैकलक्षणः ।
सप्तधैवं बहुव्रीहिस्तस्योदाहरणं यथा ॥
आरूढो वानरो यं स वृक्ष आरूढवानरः ।
पराक्रमार्जितधनो द्वित्रा उपदशास्तथा ॥
समूलोद्धृतवृक्षश्च दिक् च दक्षिणपूर्विका ।
केशाकेशीति सप्तैता बहुव्रीहेर्भिदाः क्रमात् ॥

बहुव्रीहिप्रदेशाः—"बहुव्रीहौ" ( २।१।३५ ) इत्येवमादयः ।

४१—द्वन्द्वसञ्ज्ञा ( द्वन्द्वः समुच्चयो नाम्नोर्बहूना वापि यो भवत् २।५।११ ) ।

द्वयोर्बहूना वा नाम्ना समुच्चयस्य द्वन्द्वसञ्ज्ञा भवति । समुच्चितिः=समुच्चयः, राशीभाव इत्यर्थः । समुच्चयशब्देनात्र समाहार इतरेतरयोगश्च गृह्यते । इतरेतरयोगस्यावयवप्रधानत्वात् तत्र द्विवचनबहुवचने भवत., यथा—देवदत्तयज्ञदत्तौ, धवखदिरपलाशाः । समाहारस्य च संहतिप्रधानत्वात् तत्रैकवचनमुपपद्यते, यथा—वाग्दृशदम्, पीठच्छत्रोपानहम् । पाणिनीये "चार्थे द्वन्द्वः" ( अ० २।२।२९ ) इति निर्देशे चार्थाश्चत्वारोऽङ्गीक्रियन्ते, तत्रासमर्थत्वात् समुच्चयान्वाचययोर्न समासः, इतरेतरसमाहारयोश्च समर्थत्वात् समासः क्रियते । अत्र तु समुच्चये द्वन्द्वसमासस्य निर्देशेन समाहारेतरेतरयोगौ समुच्चयस्यैव भेदावङ्गीक्रियेते । बृहद्देवतादौ[1] स्मरणात् प्राचीनेय सञ्ज्ञा । उभयपदप्रधानत्वाद् द्वन्द्वस्य समासेषु प्रधानतेष्यते[2] । द्वन्द्वसञ्ज्ञाप्रदेशाः—"अल्पस्वरतरं तत्र पूर्वम्" ( २।५।१२ ) इत्येवमादयः ।

४२—अव्ययीभावसञ्ज्ञा ( पूर्वं वाच्यं भवेद् यस्य सोऽव्ययीभाव इष्यते २।५।१४ ) ।

---

१ २।१०५ ।

२. द्वन्द्व. सामासिकस्य च ( श्रीमद्भग० १०।३३ ) ।

यस्य समासस्य पूर्वपदार्थो विशेष्यरूपेण प्रतीयते सोऽव्ययीभावसञ्ज्ञको जायते। अनव्ययमव्ययं भवतीत्यव्ययीभावः। अत्र पूर्वपदमव्ययं परपदमनव्ययं तद्वशेन समुदायोऽनव्ययोऽप्यव्ययत्वं प्राप्नोति। अन्वर्थसञ्ज्ञायाः प्रायेण चरितार्थत्वात् क्वचिदनव्ययमपि पूर्वपदं भवति, यथा—शाकप्रति, द्वियमुनम्, लोहितगङ्गम् इत्यादि। तेनायं द्विविधः समास उच्यते—

**नामपूर्वपदश्चैवाव्ययपूर्वपदस्तथा ।**
**द्विधा स्यादव्ययीभावः क्रमेणोदाहृतिर्यथा ॥**
**शाकस्य मात्रा शाकप्रति उपकुम्भमितिद्वयम् ॥**

( वार० स०- टी०, का० ११ ) इति।

अव्ययीभावप्रदेशाः—"**अव्ययीभावादकारान्ताद् विभक्तीनामपञ्चम्याः**" (२।४।१) इत्येवमादयः।

**४३—विभक्तिसञ्ज्ञा** ( विभक्तिसञ्ज्ञा विज्ञेया वक्ष्यन्तेऽतः परं तु ये।
अद्व्यादेः सर्वनाम्नस्ते बहोश्चैव पराः स्मृताः ॥
२।६।२४ )।

'तस्-त्र-ह-अत्-दा-र्हि-अधुना-दानीम्-था-थमु' इत्येतेषां द्व्यादिभिन्नेभ्यः सर्वनामभ्यः सङ्ख्यावचनाद् बहुशब्दाच्च विधीयमानानां दशप्रत्ययानां विभक्तिसञ्ज्ञा क्रियते। सर्वनामकार्यार्थमेवेयं सञ्ज्ञा, तेन 'यदा, कदा' इत्यादौ "**त्यदादीनाम विभक्तौ**" ( २।३।२९ ) इत्यनेनाकारादेशो भवति, "**अकारो दीर्घं घोषवति**" ( २।१।१४ ) इत्यनेन दीर्घो न भवति। स्यादि[1]-त्यादि[2]विभक्तिभ्यां तु सङ्ख्याकर्मादयो विभज्यन्ते न त्वनयेति सा पृथक् क्रियते। महर्षिपाणिनिनाऽप्यधिकारनिर्देशपुरस्सरं सञ्ज्ञेयं निर्दिष्टा—"**प्राग्दिशो विभक्तिः**" ( अ० ५।३।१ ) इति। विभक्तिप्रदेशाः—"**त्यादादीनाम विभक्तौ**" ( २।३।२६ ) इत्येवमादयः।

**४४—परस्मैपदसञ्ज्ञा** ( अथ परस्मैपदानि ३।१।१ )।

त्यादिष्वाख्यातप्रत्ययेषु वर्तमानादिप्रतिविभक्तिप्राथमिकनवप्रत्ययानां परस्मैपदसञ्ज्ञा क्रियते। सामान्यनिर्देशेन सर्वेषां त्यादिप्रत्ययानां परस्मैपदसञ्ज्ञायाः प्राप्तौ "**नव पराण्यात्मने**" ( ३।१।२ ) इत्यनेन बाधितान् प्रत्ययान् परित्यज्य तदतिरिक्तस्थले सञ्ज्ञेयमुपपद्यते। परस्मै पद्यते यस्मात् तत् परस्मैपदमुच्यते। परस्मैभाषशब्दस्यापि पूर्वाचार्य-

---

1. तस्मात् परा विभक्तयः ( २।१।२ ) इत्यनेन लिङ्गात् ( प्रातिपदिकात् ) स्यादिप्रत्ययानां विधानात् तेषां विभक्तित्वमवगम्यते।
2. "नव पराणि० ( ३।२।१ ) इत्युक्तिबाधया पूर्वाणि नवैव वचनानि सर्वासां विभक्तीनाम्" ( कात० वृ० ३।१।१ ) इति वृत्तिकारवचनेन त्यादिप्रत्ययानां विभक्तित्वं विज्ञायते।

व्यवहारः क्रियते स्म[१]। अत्रोदात्तानुबन्धाः सर्वे धातवः परस्मैपदिनो विज्ञेया । परस्मैपदप्रदेशाः –"शेषात् कर्तरि परस्मैपदम्" ( ३।२।४७ ) इत्येवमादयः।

४५ –आत्मनेपदसञ्ज्ञा ( नव पराण्यात्मने ३।१।२ ) ।

परस्मैपदसञ्ज्ञकप्रत्ययातिरिक्ताना प्रतिविभक्ति परस्थ-ते-इत्यादिनवप्रत्ययानामात्मनेपदसञ्ज्ञा क्रियते। आत्मने स्वस्मै पद्यन्ते ज्ञायन्ते यानि तान्यात्मनेपदानि ज्ञेयानि। अनुदात्तानुबन्धा. ङानुबन्धाश्च धातवोऽत्रात्मनेपदिनो निर्दिष्टाः। काशकृत्स्नतन्त्रेऽपि सञ्ज्ञयोरनयो ( परस्मैपदात्मनेपदयोः ) व्यवहारो[२] दृश्यते। महर्षिपाणिनिनाऽपि सञ्ज्ञे इमे व्याख्याते। आत्मनेपदप्रदेशा.[३]—"आत्मनेपदानि भावकर्मणोः" ( ३।२।४० ) इत्येवमादय.।

४६-४८—प्रथम-मध्यम-उत्तमसञ्ज्ञाः (त्रीणि त्रीणि प्रथममध्यमोत्तमाः ३।१।३) ।

पूर्वमुक्तेषु प्रतिविभक्ति परस्मैपदात्मनेपदसञ्ज्ञकेषु प्रत्ययेषु क्रमेण त्रीणि वचनानि प्रथममध्यमोत्तमसञ्ज्ञकानि भवन्ति। "युगपद्वचने परः पुरुषाणाम्" ( ३।१।४ ) इति सूत्रे पुरुषशब्दस्योपादानेनैते प्रथमादयः पुरुषा विज्ञेया.। प्रथममध्यमोत्तमाना कृते पुरुषसञ्ज्ञाव्यवहारस्तु क्रियाकर्तृरूपपुरुषवाचकत्वाल्लोके प्रसिद्धः। क्रियानिरूपितकर्तृत्वस्य स्त्रीनपुंसकयोरपि सम्भवाद् भूयस्त्वेन व्यपदेशमादायात्र पुरुषसञ्ज्ञाव्यवहारो विज्ञेयः। मध्यमोत्तमपुरुषयो. प्रयोगश्चेतनविषये प्रथमपुरुषस्य चाचेतनविषये भवतीति भर्तृहरिणा साधूक्तम्—

सदसद् वापि चैतन्यमेताभ्यामेव गम्यते।
चैतन्यभागे प्रथमः पुरुषो न तु वर्तते॥

( वा० प० ३।१०।२ ) इति।

निरुक्तादावेतेषा[४] व्यवहारस्य सद्भावो दृश्यते। महर्षिपाणिनिनाऽपि पुरुषशब्द-

---

१. वर्णलोपागमह्रस्वदीर्घप्लुतात्मनेभाषापरस्मैभाषा अपि यन्त्यपि यन्ति ( अथ० वे० प्रा० ३।४।७ )। आत्मनेभाषपरस्मैभाषशब्दौ च न केषुचिद् व्याकरणेषु सञ्ज्ञात्वेन विनियुक्ताविल्यलुकोऽप्रसङ्गः। आत्मनेपदिनश्च धातवो वैयाकरणैरात्मनेभाषशब्देन व्यवह्रियन्ते परस्मैभाषशब्देनेत्युलक् सिद्धः ( म० भा० प्र० ६।३।८ )।

२. उदात्तानुबन्ध. परस्मैपदम्, अनुदात्तङानुबन्ध आत्मनेपदम् ( काश० धा० व्या०, सू० ९०, ८८ )।

३. लः परस्मैपदम् , तङानावात्मनेपदम् ( अ० १।४।९८, ९९ )।

४. तास्त्रिविधा ऋचः । परोक्षकृताः, प्रत्यक्षकृता., आध्यात्मिक्यश्च। तत्र परोक्षकृता. सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य। अथ प्रत्यक्षकृता मध्यमपुरुषयोगा.। त्वमिति चैतेन सर्वनाम्ना। अथाध्यात्मिक्य उत्तमपुरुषयोगा.। अहमिति चैतेन सर्वनाम्ना ( निरु० ७।१ )।

अत एव निर्दिष्टं बालमनोरमाकारेण-प्रथमादिषु पुरुषसञ्ज्ञा तु प्राचीनाचार्यशास्त्रसिद्धेति बोध्यम् ( वा० प० १।४।१०१ ) इति।

रहिता एवैते प्रथमादयः सञ्ज्ञाशब्दा व्याख्याताः[1]। प्रथममध्यमोत्तमप्रदेशाः—"**नाम्नि प्रयुज्यमानेऽपि प्रथमः युष्मदि मध्यमः, अस्मद्युत्तमः**" ( ३।१।५-७ ) इति।

४९—दासञ्ज्ञा ( अदाब् दाधौ दा ३।१।८ )।

पनुबन्धौ 'दाप्-दैप्' इति द्वौ धातू विहाय 'डुदाञ् दाने, दाण् दाने, दो अवखण्डने, देङ् पालने, धेट् पाने, डुधाञ् धारणपोषणयोः' इत्येतेषा षण्णा धातूना दासञ्ज्ञा क्रियते। दाधातुरत्रान्येषा 'दो' इत्यादिधातूनामुपलक्षणम्। महर्षिपाणिनिनाऽत्र लोके यथा हस्तचेष्टया किञ्चित् सङ्केत्यते तथैव दा धाधात्वोरवबोधनार्थं 'घु' इति सञ्ज्ञाशब्दस्य[2] व्यवहारः कृतः। उदाहरणानि यथा डुदाञ्-प्रणिददाति, दाण्-प्रणिदाता, दो-प्रणिद्यति, देङ्-प्रणिदयते, डुधाञ्-प्रणिदधाति, धेट्-प्रणिधयतीति। दासञ्ज्ञाप्रदेशा—"**दा-मा-गायति-पिबति-स्था-स्यति-जहातीनामीकारो व्यञ्जनादौ** ( ३।४।२१ ) इत्येवमादयः।

५०—धातुसञ्ज्ञा ( क्रियाभावो धातुः, ते धातवः ३।१।६, २।१६ )।

य शब्द क्रिया भावयति प्रतिपादयति स धातुसञ्ज्ञः प्रतिज्ञायते। क्रियते इति क्रिया, सा च पूर्वापरीभूतावयवत्वेन प्रतीयमानत्व क्रियात्वमित्यर्थः। क्रियाकारकव्यवहारस्य बुद्ध्यवस्थानिबन्धनादस्ति, नश्यतीत्यादौ सत्ताया नित्यत्वात्, नाशस्य चाभावरूपत्वाद् यद्यपि क्रियाया पूर्वापरीभूतावयवत्व न लक्ष्यते तथापि साधनाधीनत्वात् सर्वस्व सिद्धमपि वस्तु क्रियात्वेनावभासते। उच्यते चापि—

> यावत् सिद्धमसिद्धं वा साध्यत्वेन प्रतीयते।
> आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते॥
>
> ( वा० प० ३।८।१ ) इति।

'सन्-यिन्-काम्य-आयि-इन्-य-आय' इति सप्तप्रत्ययान्ताना शब्दानामपि धातुसञ्ज्ञा क्रियते। यिन्नादयः केचित् प्रत्यया लिङ्गेभ्यः ( प्रातिपादिकेभ्यः ) जायन्ते इति गणेऽप्रसिद्धत्वात् तेषा सन्नाद्यन्तशब्दाना धातुगणे पाठाभावादशुद्धक्रियारूपाणा तेषा च शब्दाना धातुसञ्ज्ञा न सम्भाव्यते इति तत्र धातुकार्यविधानाय धातुसञ्ज्ञा निर्दिश्यते। दधाति विविधानर्थान् स धातु। गणेऽर्थनिर्देशो निदर्शनाय क्रियते, अत एवोच्यते—

> क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्शितः।
> प्रयोगतोऽनुसर्तव्या अनेकार्था हि धातवः॥
>
> ( क्षीरत०, पृ० १। व्या० सि० सु०, पृ० ६४४ ) इति।

महर्षिपाणिनिनाऽपि "**भूवादयो धातवः, सनाद्यन्ता धातवः**" ( अ० १।३।१, ३।१।३२ ) इति सूत्रद्वयेन सञ्ज्ञेय व्यवहृता। धातुसञ्ज्ञाप्रदेशाः—"**धातोश्च हेतौ**" ( ३।२।१० ) इत्येवमादय।

१. तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ( अ० १।४।१०४ )।

२. दा धा घ्वदाप् ( अ० १।१।२० )।

५१—वर्तमानासञ्ज्ञा ( वर्तमाना ३।१।२४ ) ।

'ति-तस्-अन्ति-सि-थस्-थ-मि-वस्-मस्-ते-आते-अन्ते-से-आथे-ध्वे-ए-वहे-महे' इत्येतेषामष्टादशप्रत्ययानां वर्तमानासञ्ज्ञा क्रियते। वर्तते इति वर्तमाना। महर्षिपाणिनिनाऽत्र लट्लकारः प्रयुज्यते[१]। वर्तमानादिद्गसञ्ज्ञानामत्रोपस्थापनं पूर्वाचार्यमतप्रदर्शनार्थं कृतमिति विज्ञेयम्[२]। वर्तमानाप्रदेशाः—"सम्प्रति वर्तमाना" ( ३।१।११ ) इत्येवमादयः।

५२—सप्तमीसञ्ज्ञा ( सप्तमी ३।१।२५ ) ।

'यात् यातां-युस्-यास्-यातम्-यात-याम् याव-याम-ईत-ईयाताम्-ईरन्-ईथास्-ईयाथाम्-ईध्वम्-ईय-ईवहि-ईमहि' इत्येतेषामष्टादशप्रत्ययानां सप्तमीसञ्ज्ञा क्रियते। पाणिनीयेऽत्र लकारेषु सप्तमो लिङ्लकारः[३] ( छन्दोमात्रगोचरं लेट्लकारं विहाय ) प्रयुज्यते। सप्तमीप्रदेशाः—' विध्यादिषु सप्तमी च' ( ३।१।२० ) इत्येवमादयः।

५३—पञ्चमीसञ्ज्ञा ( पञ्चमी ३।१।२६ ) ।

'तु ताम्-अन्तु-हि-तम्-त-आनि-आव-आम-ताम्-आताम्-अन्ताम्-स्व-आथाम्-ध्वम्-ऐ-आवहै-आमहै' इत्येतेषामनुमत्याद्यर्थकानामष्टादशप्रत्ययानां पञ्चमीसञ्ज्ञा क्रियते। पाणिनीये पञ्चमो लोट्लकारः ( लेट् विहाय ) अत्रार्थे प्रयुक्तः[४]। पञ्चमीप्रदेशाः—"पञ्चम्यनुमतौ" ( ३।१।१८ ) इत्येवमादयः।

५४—ह्यस्तनीसञ्ज्ञा ( ह्यस्तनी ३।१।२७ ) ।

'दि-ताम्-अन्-सि-तम्-त-अम्-व-म-त- आताम्-अन्त-थास्-आथाम् ध्वम्-इ-वहि-महि' इत्येतेषामतीतानद्यतनार्थकानामष्टादशप्रत्ययानां ह्यस्तनीसञ्ज्ञा क्रियते। पाणिनीये भूताधिकारे लङ्लकारो[५] व्यवह्रियते। ह्यस्तनीशब्देन भूताधिकारमन्तरैवातीतकालस्यावबोधो जायते। ह्यस्तनीप्रदेशाः—"मास्मयोगे ह्यस्तनी च" ( ३।१।२३ ) इत्येवमादयः।

५५—अद्यतनीसञ्ज्ञा ( एवमेवाद्यतनी ३।१।२८ ) ।

"दि-ताम्-अन्-सि-तम्-त-अम्-व-म-त-आताम्-अन्त-थास्-आथाम्-ध्वम्-इ-वहि-महि' इत्येतेषां सामान्यभूतार्थकानामष्टादशप्रत्ययानामद्यतनीसञ्ज्ञा क्रियते। पाणिनीयेऽत्र लुङ्लकारः[६] प्रयुज्यते। अद्यतनशब्देनाद्यापि यत् किञ्चित् कार्यं सम्पन्नं तत्राद्यतनीव्यवहारः करणीय इति विज्ञेयम्। युगपद् ह्यस्तनी-अद्यतनीत्युभयसञ्ज्ञानिरासार्थं विचित्रार्थं वाऽस्य

१. वर्तमाने लट् ( अ० ३।२।१२३ )।
२. एताः पूर्वाचार्यप्रसिद्धा अन्वर्था इह ज्ञाप्यन्ते ( का० वृ० ३।१।३३ )।
३. विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ् ( अ० ३।३।१६१ )।
४ लोट् च ( अ० ३।३।१६२ )।
५. अनद्यतने लङ् ( अ० ३।२।१११ )।
६. लुङ् ( अ० ३।२।११० )।

सञ्ज्ञासूत्रस्य पृथक्करणमिष्टम् । अद्यतनीप्रदेशाः-"**माङ्योगेऽद्यतनी**" ( ३।१।२२ ) इत्येवमादयः ।

**५६—परोक्षासञ्ज्ञा** ( परोक्षा ३।१।२६ ) ।

अट्-अतुस्-उस्-थल्-अथुस्-अ-अट्-व-म-ए-आते-इरे-से-आथे-ध्वे-ए-वहे-महे' इत्येतेषां परोक्षाकार्यसम्पन्नताया द्योतकानामष्टादशप्रत्ययानां परोक्षासञ्ज्ञा क्रियते। पाणिनीयेऽत्र लिट्लकारो[१] व्यवह्रियते। सञ्ज्ञाशब्दस्य विशेषणत्वादत्र वर्तमानादयः शब्दाः स्त्रीलिङ्गान्ता उपात्ताः ( सञ्ज्ञा विशेष्यम्, वर्तमाना विशेषणम् ), पाणिनीये तु कालस्य विशेषणत्वाद् 'वर्तमाने'[२] इत्यादिरूपाणि सप्तम्यासुक्तानि ( कालो विशेष्यम्, वर्तमानो विशेषणम् ) । परोक्षाप्रदेशाः-"**परोक्षा**" ( ३।१।१३ ) इत्येवमादयः ।

**५७—श्वस्तनीसञ्ज्ञा** ( श्वस्तनी ३।१।३० ) ।

ता तारौ-तारस्-तासि-तास्थस्-तास्थ-तास्मि-तास्वस्-तास्मस्-ता-तारौ-तारस्-तासे-तासाथे-ताध्वे-ताहे-तास्वहे-तास्महे' इत्येतेषामनागतानद्यतनार्थेऽष्टादशप्रत्ययानां श्वस्तनीसञ्ज्ञा क्रियते। पाणिनीयेऽत्र भविष्यदधिकारे लुट्लकारो[३] व्यवहृतः। श्वस्तनीप्रदेशाः-"**भविष्यति भविष्यन्त्याशीःश्वस्तन्यः**" ( ३।१।१५ ) इत्येवमादयः ।

**५८—आशीःसञ्ज्ञा** ( आशीः ३।१।३१ ) ।

'यात्-यास्ताम्-यासुस्-यास्-यास्तम्-यास्त-यासम्-यास्व-यास्म सीष्ट-सीयास्ताम् सीरन्-सीष्ठास्-सीयास्थाम्-सीध्वम्-सीव-सीवहि-सीमहि इत्येतेषामाशिषाद्यर्थकाष्टादशप्रत्ययानामाशीःसञ्ज्ञा क्रियते। पाणिनीयेऽत्र लिङ्लोट्[४]लकारयोः प्रयोगः। आशीःप्रदेशाः-"**आशिषि च परस्मै**" ( ३।५।२२ ) इत्येवमादयः ।

**५९—भविष्यन्तीसञ्ज्ञा** ( स्यसहितानि त्यादीनि भविष्यन्ती ३।१।३२ ) ।

'स्यति-स्यतम् स्यन्ति-स्यसि-स्यथस्-स्यथ-स्यामि-स्यावस्-स्यामस्-स्यते-स्येते-स्यन्ते स्यसे-स्येथे-स्यध्वे-स्ये-स्यावहे-स्यामहे' इत्येतेषां सामान्यभविष्यदर्थेऽष्टादशप्रत्ययानां भविष्यन्तीसञ्ज्ञा क्रियते। पाणिनीयेऽत्र लृट्लकारः[५] प्रयुज्यते। भविष्यन्तीप्रदेशा -"**भविष्यति भविष्यन्त्याशीःश्वस्तन्यः**" ( ३।१।१५ ) इत्येवमादयः।

**६०—क्रियातिपत्तिसञ्ज्ञा** ( द्यादीनि क्रियातिपत्तिः ३।१।३३ )।

'स्यत्-स्यताम् स्यन् स्यस्-स्यतम् स्यत-स्यम्-स्याव-स्याम-स्यत-स्येताम्-स्यन्त-स्यथास्-स्येथाम-स्यध्वम्-स्ये-स्यावहि-स्यामहि' इत्येतेषां स्येन सहितानां द्यादीनामष्टादश-

१. परोक्षे लिट् ( अ० ३।२।११५ ) ।
२. वर्तमाने लट् ( अ० ३।२।१२३ ) इत्यादिसूत्रेषु ।
३. अनद्यतने लुट् ( अ० ३।३।१५ ) ।
४ आशिषि लिङ्लोटौ ( अ० ३।३।१७३ ) ।
५. लृट् शेषे च ( अ० ३।३।१३ ) ।

प्रत्ययाना क्रियातिपत्तिसञ्ज्ञा जायते। क्रियातिपत्तिः = कुतश्चिद् वैगुण्यात् क्रियाया अनभिनिर्वृत्तिः। पाणिनीयेऽत्रार्थे लृङ्लकारः[१] प्रयुज्यते। क्रियातिपत्तिप्रदेशाः— "अड् धात्वादिर्ह्यस्तन्यद्यतनीक्रियातिपत्तिषु" ( ३।८।१६ ) इत्येवमादयः।

एतासु कालबोधिकासु वर्तमानादिदशसञ्ज्ञासु स्वीकृता अशीत्यधिकशतमिताः प्रत्ययाः शर्ववर्माचार्येण सूत्रे न पठिताः किं च पूर्वाचार्याभिमतास्ते वृत्तिकारेण ( १८० ) दुर्गसिंहेन वृत्तौ सङ्कलिता। अस्मिन् क्रमे आदेशागमविधानाय पाणिनीयप्रक्रियावत् सूत्राणि नापेक्ष्यन्ते। सञ्ज्ञाशब्दैरेव तेषा कालविशेषः परिलक्षयितु शक्यते इति पूर्वाचार्यानुकरणमर्थबोधे लाघवायालम्।

**६१—सार्वधातुकसञ्ज्ञा** ( षडाद्याः सार्वधातुकम् ३।१।३४ )।

'वर्तमाना, सप्तमी, पञ्चमी, ह्यस्तनी' इति चतसृणा विभक्तीना सार्वधातुकसंज्ञा क्रियते। सर्वधातुषु भवम्, सर्वधातून् व्याप्नोतीति वा सार्वधातुकम्। अद्यतनीसञ्ज्ञका अपि प्रत्यया सर्वधातुभ्यो विधीयन्ते इति सञ्ज्ञेय नान्वर्थेति व्याख्याकाराः[२]। पाणिनीये "तिङ्शित् सार्वधातुकम्" ( अ० ३।४।११३ ) इत्यनेन तिङ्शित्प्रत्ययाना सार्वधातुकत्व विज्ञाप्यते। केचित् तत्र विकरणसहिततिङ्प्रत्ययैर्धातूना पूर्णतामङ्गीकुर्वन्तस्तद्विशिष्टतिङ्प्रत्ययाना सार्वधातुकत्वमङ्गीकुर्वन्ति। विकरणरहिताना च लिडादावार्धधातुकत्व मन्यन्ते ( आर्धधातुक शेष., अ० ३।४।११४ )। अत्र चान्नादिविकरणाना सार्वधातुकत्व नो निर्दिष्टमिति सञ्ज्ञायास्तस्या निरन्वयत्वमुपदिष्टम्, पाणिनीयप्रक्रियायामत्र वैशिष्ट्य दृश्यते। पाणिनीये शिदनुबन्धाना शबादिविकरणाना सार्वधातुकसञ्ज्ञा निर्दिश्यते, अत्र तु "अस्तेर्भूरसार्वधातुके" ( ३।४।८७ ) इत्यत्रासार्वधातुकग्रहणेनानादीना सार्वधातुकत्व विज्ञाप्यते ( द्र०—कवि० ३।२।३२ )। सार्वधातुकप्रदेशाः— "जुहोत्यादीनां सार्वधातुके" ( ३।३।८ ) इत्येवमादयः।

**६२—कारितसञ्ज्ञा** (इन् कारितं धात्वर्थे, धातोश्च हेतौ, चुरादेश्च ३।२।९-११)।

धात्वर्थे नामभ्यः, हेतुकर्तृव्यापारार्थं धातुभ्यः, स्वार्थे चुरादिधातुभ्यश्च य इन्प्रत्ययो विधीयते तस्य कारितसञ्ज्ञा क्रियते। प्रेरणार्थकः कारितशब्दो हेतुकर्तृव्यापारार्थे यौगिकः, अन्यत्र च रूढ इत्यन्वर्थता कारितसञ्ज्ञायाः। कारितप्रदेशाः- "**कारितस्यानामिड्विकरणे**" ( ३।६।४४ ) इत्येवमादयः।

---

१ लिङ्निमित्ते लृङ् क्रियातिपत्तौ ( अ० ३।३।१३९ )।

२. सार्वधातुकमिति नपुंसकं लोकतः सिद्धम्, पूर्वाचार्यसञ्ज्ञा निरन्वयेयम् ( कात० वृ० टी० ३।१।३४ )।
सार्वधातुकमिति पूर्वाचार्यप्रसिद्धेय सञ्ज्ञा निरन्वया, स्वभावतो नपुंसकलिङ्गमिति ( कात० वृ० प० ३।१।३४ )।

**६३—चेक्रीयितसञ्ज्ञा** ( धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे ३।२।१४ ) ।

क्रियासमभिहारार्थे धातुभ्यो विधीयमानस्य यशब्दस्य[1] पूर्वाचार्याभिमता चेक्रीयितसञ्ज्ञाऽत्रापि कृता[2] । पुनः पुनरतिशयेन वा क्रीतं चेक्रीयितम्, आवृत्तमिति क्रीतपदार्थः । तेन चेक्रीयितशब्दः क्रियासमभिहारार्थेऽन्वर्थतामभिव्यनक्ति । चेक्रीयितप्रदेशाः—"**गुणश्चेक्रीयिते**" ( ३।३।२८ ) इत्येवमादयः ।

**६४—विकरणसञ्ज्ञा** ( अन् विकरणः कर्तरि ( ३।२।३२ ) ।

कर्तरि विहितेषु सार्वधातुकसञ्ज्ञकप्रत्ययेषु परतो धातुभ्यः पर विहितानाम् 'अन्-यन्-नु-न-उ-ना-आन' इत्येतेषा सप्तप्रत्ययाना विकरणसञ्ज्ञा क्रियते, सेयं सञ्ज्ञा पूर्वाचार्याभिमता[3] । प्रकृतिप्रत्ययमध्यपतितत्व विकरणत्वम् । प्रकृतिप्रत्यययोर्मध्ये उपस्थाय येन किञ्चिद् वैशिष्ट्यमाधीयते तद् विकरणमुच्यते । विकरणप्रदेशाः—"**अनि च विकरणे**" ( ३।५।२ ) इत्येवमादयः ।

**६५—अभ्याससञ्ज्ञा** ( पूर्वोऽभ्यासः ३।३।८५ ) ।

धातूना द्वित्वे सति तत्पूर्वरूपस्याभ्याससञ्ज्ञा क्रियते, धातुशब्देन धात्वेकदेशोऽपि गृह्यते । अभ्यस्यते द्विरुच्चार्यते इत्यभ्यासः । यत् कार्यं पूर्वमारभ्यते तस्यैवाऽऽवृत्तिरभ्यासशब्देनोच्यते । एवमत्र शास्त्रेऽपि पूर्वभागस्याभ्याससञ्ज्ञा क्रियते । निरुक्ते[4] एतदर्थे अभ्यासशब्दः प्रयुक्तः, [5]काशकृत्स्नव्याकरणेऽपि शब्दस्यास्य प्रयोगो दृश्यते । अभ्यासप्रदेशाः-"**अभ्यासस्याऽऽदिर्व्यञ्जनमवशेष्यम्**" ( ३।३।९ ) इत्येवमादयः ।

**६६—अभ्यस्तसञ्ज्ञा** ( द्वयमभ्यस्तम , जक्षादिश्च ३।३।५, ६ ) ।

धातोर्द्वित्वे सति जातस्य रूपद्वयस्य, अभ्यस्तकार्यकरणाय द्विरुक्ताभावेऽपि 'जक्ष-जागृ-दरिद्रा-चकास्-शास्' इत्येतेषा पञ्चधातूना चाभ्यस्तसञ्ज्ञा क्रियते । लोकेऽनेकशोऽभ्यासकर्मणा क्रियमाणं कृतं वा किञ्चिदपि कार्यमभ्यस्तमुच्यते, अत्र शास्त्रे धातोर्द्विरुक्तमभ्यासकर्माभ्यस्तसञ्ज्ञात्वेनाभिप्रेयते । पर्याप्त्याऽभ्यासकर्मत्वपरोऽयमभ्यस्तशब्दः सञ्ज्ञात्वेन प्रयुक्तः स्वीयामन्वर्थता द्योतयति । निरुक्ते[6] 'एरिर' इत्यादिपदाना साधने धातोर्द्विरुक्तस्याभ्यस्तसञ्ज्ञाऽनुमता । अभ्यस्तप्रदेशाः—"**अभ्यस्तानामाकारस्य**" ( ३।४।४२ ) इत्येवमादयः ।

---

१. शब्दग्रहणं सस्वरार्थप्रत्ययबोधनार्थं वृत्तिकारेण कृतम् ।

२ धातोर्यङिति सिद्धे चेक्रीयितग्रहण पूर्वाचार्यसञ्ज्ञाऽऽविर्भावनार्थम् ( कात० वृ० टी० ३।२।१४ ) । यङः पूर्वाचार्यसञ्ज्ञा—चेक्रीयितमिति ( म० भा० प्र० ४।१।७८ ) ।

३. अनि च विकरणे, शानुबन्धे शनीति न विदध्यात्—विकरणस्य पूर्वाचार्यप्रसिद्धत्वात् ( कात० वृ० टी० ३।२।३२ ) ।

तिङि परे धातोर्विहिताना प्रत्ययाना शबादीना विकरणसञ्ज्ञा प्राचीनाचार्यसिद्धा ( बा० म० ३।१।६८ ) ।

४. अभ्यासे भूयासमर्थं मन्यन्ते, यथाहो दर्शनीयाहो दर्शनीयेति ( १०।२७ ) ।

५. पूर्वोऽभ्यासः ( काश० धा० व्या०, सू० ७७ ) ।

६. रराणो रातिरभ्यस्तः, एरिर इतीर्तिरुपसृष्टोऽभ्यस्तः, ररिवान् रातिरभ्यस्तः ( २।३, ४।४, ४।६१-६२ ) ।

**६७—अनुबन्धसञ्ज्ञा** ( योऽनुबन्धोऽप्रयोगी ३।८।३१ ) ।

सूत्रे 'यः' इति पदं ये न पठन्ति तन्मतेऽनुबन्धसञ्ज्ञाऽत्रेष्यते। अनुपूर्वो बन्धिधातुर्विलोपनार्थे वर्तते। अनुबध्यते विलुप्यते इत्यनुबन्ध,, कर्मणि घञ्। अप्रयोगोऽस्यास्तीत्यप्रयोगी ( गमकत्वात् तत्पुरुषादपि इनिप्रत्ययः ), सोऽनुबन्धसञ्ज्ञको वेदितव्यः। परिभाषावृत्तिकारदुर्गसिंहस्य मते इद विधिसूत्रम्, **"उच्चरितप्रध्वंसिनो ह्यनुबन्धाः"** ( परि० ५५ ) इति परिभाषावचनेनानुबन्धसञ्ज्ञाया वर्तमानत्वात्[1]। अनुबन्धसञ्ज्ञाया अन्वर्थत्वबलादेवाप्रयुक्तत्वे विज्ञापितेऽप्रयोगीतिग्रहण मन्दमतिबोधनार्थमवगन्तव्यम्। अनुबन्धाः शब्दव्यवहारिभिः कार्यार्थमुपादीयन्ते, पर तत्र कार्यं न किञ्चित् क्रियते इत्यप्रयुक्तत्व तेषाम्। अनुबन्धप्रदेशाः—**"कर्तरि रुचादिङानुबन्धेभ्यः"** ( ३।२।४२ ) इत्येवमादयः।

**६८—शिट्सञ्ज्ञा** ( शिडिति शादय' ३।८।३२ ) ।

'श-ष-स-ह' इत्येतेषा चतुर्णां वर्णाना पूर्वाचार्याभिमता ऊष्मसञ्ज्ञा पूर्वं प्रदर्शिता ( शषसहा ऊष्माणः १।१।१५ ) । लाघवेन तेषा वर्णानामवबोधायाऽऽचार्येण साङ्केतिकी शिट्सञ्ज्ञा प्रयुज्य तयैव व्यवह्रियते। अत्र प्रायेणार्थकृतलाघवस्याभिप्रेतत्वात् स्वरादिसञ्ज्ञाना शब्दलाघवं न क्रियते। शादिवर्णाना बोधनाय शिट्सञ्ज्ञा शर्ववर्माचार्येण कृतेति प्रतिभाति[2]। **"स्वाङ्गशिटामदन्तानाम्"** ( फि० सू० २।६ ) इत्यत्र सर्वनाम्न· कृते शिट्शब्दः[3] प्रयुक्तः। शिट्प्रदेशा·—**"शिट्परोऽघोषः"** ( ३।३।१० ) इत्येवमादयः।

**६९—सम्प्रसारणसञ्ज्ञा** ( सम्प्रसारण य्वृतोऽन्त.स्थानिमित्ता ३।८।३३ ) ।

यकारस्य स्थाने जायमानः इकारः, वकारस्य स्थाने उकारः, रकारस्य च स्थाने ऋकारो वर्णस्तस्य सम्प्रसारणसञ्ज्ञा क्रियते। सम्प्रसार्यतेऽनेनेति सम्प्रसारणम्। व्यञ्जनस्यार्धमात्रिकत्वाद् ह्रस्वस्वरस्य च मात्रिकत्वाद् यकारादीनामिकारादिषु सत्सु मात्रावृद्ध्या सम्प्रसारणमिति नामान्वर्थं संजायते। लकारस्य लृकारो वर्णः सम्प्रसारणत्वेनोपपन्नः कस्मिंश्चित् प्रयोगे न दृश्यते, तेन **"इग्यणः सम्प्रसारणम्"** (अ० १।१।४५) इति पाणिनीयसूत्रस्य व्याख्यानेषु तदुदाहरणं न प्रस्तूयते इति व्याख्यानतोऽवगम्यते। गोपथब्राह्मणे ओम्-शब्दसाधनस्य प्रकथनावसरे प्रसारणशब्दः[4] प्रयुक्त। अत एव पूर्वाचार्यसञ्ज्ञेयमिति कातन्त्रवृत्तिटीकाकारेणोक्तम् ( द्र०—कात० वृ० टी० ३।८।३३ )। सम्प्रसारणप्रदेशाः—**"सपरस्वरायाः सम्प्रसारणमन्तस्थायाः"** ( ३।४।१ ) इत्येवमादयः।

---

१. योऽनुबन्धोऽप्रयोगी ( ३।८।३१ ) इत्यनेन सहास्य को भद इति चेत्, सत्यम्, तत्र विधान प्रतिपाद्यते, अनेन तत्सञ्ज्ञेति ( परि० वृ०, परि ५५ )।

२. ननूष्मसञ्ज्ञामपनयन्ती शर्ववर्मसामर्थ्यं प्रतिपादयन्ती शिट्सञ्ज्ञा कथ न क्रियते? ऊष्मसञ्ज्ञैव व्यवह्रियतामिति चेत्, न, आचार्यसामर्थ्यप्रकाशनार्थमवश्य शिट्सञ्ज्ञाया वक्ष्यमाणत्वात् ( कवि० १।१।१५ )।

३. शिट् सर्वनाम ( सि० कौ०, फि० सू० २।६ )।

४ को विकारी च्यवते सम्प्रसारणमाप्नोति ( १।१।२६ )।

**७०—गुणसञ्ज्ञा** ( अर् पूर्वे द्वे सन्ध्यक्षरे च गुण. ३।८।३४ ) ।

रेफसहितस्याकारस्य 'अर्' इत्यस्य सन्ध्यक्षरेष्वेकारौकारयोश्च वर्णयोर्गुणसञ्ज्ञा क्रियते। सूत्रे पूर्वशब्द ऐकारमौकारं चापेक्ष्य वर्तते। पाणिनीये रपरत्वविधान सूत्रान्तरेण[1] निर्दिश्यते इति रेफरहितोऽकारो गुणसञ्ज्ञक उच्यते। गुणशब्दोऽत्राप्राधान्यार्थकः, अप्राधान्यं च वृद्धिसञ्ज्ञक-आकारादिवर्णापेक्षया विज्ञेयम्। सन्ध्यक्षराणा चतुर्णामेव वर्णाना दीर्घरूपत्वेऽपि **"तेभ्योऽपि विवृतावेडौ ताभ्यामैचौ तथैव च"** (पा० शि०, श्लो० **२१)** इति शिक्षानुरोधेन एकारौकारयोरुच्चारणे ऐकारौकारयोरुच्चारणापेक्षया सादृश्यमतिशयो वा नापेक्ष्यते इत्यप्राधान्यमुपपद्यते। निरुक्तादावेतेषा[2] वर्णानामवबोधाय गुणशब्द. प्रयुक्तो दृश्यते। महाभाष्यकारेण **"इहापि सञ्ज्ञासञ्ज्ञिनोः पूर्वाचार्यैः कृतोऽभिसम्बन्धः"** **( १।१।१ )** इति निर्दिश्य पूर्वाचार्यकृतत्वमस्या द्योतितम्। गुणसञ्ज्ञाप्रदेशा.—**"नाम्यन्तयोर्धातुविकरणयोर्गुणः"** ( **३।५।१** ) इत्येवमादयः।

**७१—वृद्धिसञ्ज्ञा** ( आरुत्तरे च वृद्धिः ३।८।३५ ) ।

रेफसहितस्याऽऽकारस्य 'आर्' इत्यस्य सन्ध्यक्षरसञ्ज्ञकयोरैकारौकारयोश्च वर्णयोर्वृद्धिसञ्ज्ञा क्रियते। वर्धनं वृद्धिः, अभेदोपचारेणाऽऽरादिषु वृद्धेः सामर्थ्यमवगन्तव्यम्। **"इहापि कृतः पूर्वैरभिसम्बन्धः। कैः? आचार्यैः"** ( म० भा० १।१।१ ) इति भाष्यकारनिर्देशेन पूर्वाचार्यकृतेयं सञ्ज्ञा प्रतीयते, काशकृत्स्नव्याकरणे[3] प्रयुक्ताऽपि दृश्यते। पूर्वं गुणसञ्ज्ञका ये वर्णा उक्तास्तदपेक्षयाऽऽकाराद्युच्चारणे प्रयत्नातिशयरूपा वृद्धिर्जायते इत्यन्वर्थत्वमस्या विज्ञेयम्। महर्षिपाणिनिना ग्रन्थादौ शर्ववर्माचार्येण च ग्रन्थान्ते वृद्धिसञ्ज्ञया मङ्गलमाचरितम्। वृद्धिसञ्ज्ञाप्रदेशाः—**"वृद्धिरादौ सणे"** ( २।६।४९ **)** इत्येवमादय.।

**७२—निष्ठासञ्ज्ञा** ( क्तक्तवन्तू निष्ठा ४।१।८४ ) ।

भूतार्थे 'क्त क्तवन्तु' इति प्रत्यययोर्निष्ठासञ्ज्ञा क्रियते। निष्ठा=परिसमाप्तिः, तेनातीतकाल उपलक्ष्यते। उक्तं च नारायणभट्टेन—

**निष्ठा परिसमाप्तिः स्यात् सा च भूतार्थयोर्द्वयोः।**
**अर्थः स्यादित्यभेदेन निष्ठाख्यौ प्रत्ययावपि॥**

**( प्र० सर्व०, स० ख० ) इति।**

पाणिनीये नकाररहितः क्तवतुप्रत्ययो[4] निष्ठासञ्ज्ञको निर्दिश्यते। अत्र तु सनकारं प्रत्ययमुक्त्वा कृतवानित्यादौ नकारागमाभावप्रक्रियया लाघवं प्रदर्शितम्। काशकृत्स्नव्याकरणे[5]

---

१ उरण् रपरः ( अ० १।१।५१ ) ।

२. शेव इति सुखनाम। शिष्यतेर्वकारः नामकरणोऽन्तस्थान्तरोपलिङ्गी विभाषितगुण.। शिवमित्यप्यस्य भवति ( १०।२।९ ) ।

३. वृद्धिरादौ सणे ( का० धा० व्या०, सू० १२६ ) इत्यादि।

४. क्तक्तवतू निष्ठा ( अ० १।१।२६ ) ।

५ क्तक्तवतू निष्ठा ( का० धा० व्या०, सू० १११ ) ।

प्रयुक्तत्वात् सञ्ज्ञेयं पूर्वाचार्यसम्मतेति विज्ञायते। निष्ठाप्रदेशाः—"निष्ठा" (४।१।६३) इत्येवमादयः।

७३—उपपदसञ्ज्ञा ( सप्तम्युक्तमुपपदम् ४।२।२ )।

धात्वधिकारे ( कृत्प्रकरणे ) सप्तम्यन्तं यत् पदं सूत्रे उक्तं तदुपपदसञ्ज्ञं स्यात्। अत्रोक्तपदोपन्यासेन 'स्तम्बेरमः, कुरुचरः' इत्यादौ सप्तम्यन्तानामेव पदानां केवलं नोपपदसञ्ज्ञा, किं च "कर्मणि चाण्" (४।४।७१) इति निर्देशेन 'कुम्भकार' इत्यादौ कर्मान्तकुम्भादिपदानामप्युपपदसञ्ज्ञा सम्पद्यते। पदस्य समीपमुपकारि पदं वेत्युपपदम्। पाणिनीयेऽप्युक्तम्—"तत्रोपपदं सप्तमीस्थम्" (अ० ३।१।९२) इति। उपपदप्रदेशाः—"दीर्घस्योपपदस्यानव्ययस्य खानुबन्धे" (४।१।२०) इत्येवमादयः।

७४—कृत्सञ्ज्ञा ( कृत् ४।२।७ )।

अधिकारेण तव्यानीयादिप्रत्ययानां कृत्सञ्ज्ञा निर्दिश्यते। करोतीति कृत्, कर्तरि क्विप्। एतेन कृत्सञ्ज्ञकाः प्रत्ययाः कर्तरि भवन्तीति ज्ञायते, भावाद्यर्थे विधीयमानानां प्रत्ययानां छत्रिन्यायात् कृत्सञ्ज्ञा विज्ञेया। तदुक्तं च—

कर्तरि क्विपि कृच्छब्दो येषां मध्ये च दृश्यते।
छत्रिन्यायात् कृतस्ते स्युरेवं कृत्यसमाख्यया॥

( प्र० सर्व०, स० ख०, पृ० ८६ ) इति।

निरुक्तादौ[1] प्रयुक्तत्वात् पूर्वाचार्याभिमतेयं सञ्ज्ञा। कृत्प्रदेशाः—"कर्तरि कृतः" (४।६।४६) इत्येवमादयः।

७५—कृत्यसञ्ज्ञा ( ते कृत्याः ४।२।४६ )।

कृत्प्रत्ययानां मध्ये 'तव्य-अनीय-क्यप्-घ्यण्-य' इत्येतेषां पञ्चप्रत्ययानां कृत्यसञ्ज्ञा क्रियते। कर्तुं योग्यं कृत्यम्। कृत्यप्रत्यया भावकर्मणोर्विधीयन्ते इति ते क्रियायाः कारकस्य च वाचका भवन्ति, कृत्प्रत्ययाश्च कारकस्यैवेति कृत्कृत्ययोर्भेदः। भेदोऽयं पूर्वं महर्षिपाणिनिनैवोद्भावित इति प्रतीयते, तदीयं च सूत्रम्— "कृत्याः" (अ० ३।१।९५) इति। कृत्यप्रदेशाः—"भावकर्मणोः कृत्यक्तखलर्थाः" (४।६।४७) इत्येवमादयः।

कातन्त्रे प्रयुक्ता द्वात्रिंशत् सञ्ज्ञाशब्दा ये न व्याख्यातास्तेषामत्र सूत्राणि केषाञ्चिच्च सम्बद्धवचनान्यपि प्रस्तूयन्ते।

## अव्याख्यातानां वर्णादिसञ्ज्ञानां निर्देशवाक्यानि

१—वर्णः ( सिद्धो वर्णसमाम्नायः १।१।१ )।

"इह तु पृथक्प्रयत्नसाध्य एव वर्ण उच्यते, वर्णैकदेशास्तु वर्णच्छायानुकारिणो न पुनस्त एव। यथा मरुमरीचयो जलच्छायामनुकुर्वते न तु जलम्" (कात० वृ० टी० १।१।८) इति।

---

१. अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते, दमूनाः क्षेत्रसाधा इति ( २।२ )।

२—लोपः ( समानः सवर्णे दीर्घीभवति परश्च लोपम्, एदोत्परः पदान्ते लोपमकारः १।२।१,१७ ) ।

तथा चापिशलीयश्लोकः—

आगमोऽनुपघातेन विकारश्चोपमर्दनात् ।
आदेशस्तु प्रसङ्गेन लोपः सर्वापकर्षणात् ॥

( कात० वृ० टी० १।२।१ ) इति ।

३—निपातः ( ओदन्ता अ-इ-उ-आ निपाताः स्वरे प्रकृत्या १।३।१ ) ।

"निश्चितः पातो येषामिति निपाताः । अर्थाभिधानेषु स्वक्रियायामसमर्थाश्चादयोऽव्ययाः सिद्धाः । तथा चाह—नामाख्यातप्रयोगेष्वर्थादभिन्ना निपतन्तीति निपाताः" (कात० वृ० टी० १।३।१ ) इति ।

४—द्विवचनम् ( द्विवचनमनौ १।३।२ ) ।

५—बहुवचनम् ( बहुवचनममी १।३।३ ) ।

६—अनुस्वारः ( नोऽन्तश्चछयोः शकारमनुस्वारपूर्वम् १।४।८ ) ।

७—सन्धिः ( न विसर्जनीयलोपे पुनः सन्धिः १।५।१६ ) ।

८—आगमः ( आगम उदनुबन्धः स्वरादन्त्यात् परः २।१।६ ) ।

"प्रकृतिप्रत्यययोरनुपघातेनाऽऽगच्छन्तीत्यागमाः" (कात० दु० परि० वृ०, परि० १४) ।

९—वा ( भिसैस् वा २।१।१८ ) ।

१०—विभाषा ( विभाष्येते पूर्वादेः २।१।२८ ) ।

११—सर्वनाम ( स्मै सर्वनाम्नः, आ सर्वनाम्नः २।१।२५, ४।६।६६ ) ।

१२—सङ्ख्या ( सङ्ख्यायाः ष्णान्तायाः २।१।७५ ) ।

१३—लुक् ( कतेश्च जश्शसोर्लुक् २।१।७६ ) ।

१४—अव्ययम् (अव्ययसर्वनाम्नः स्वरादन्त्यात् पूर्वोऽक् कः, अव्ययाच्च २।२।६४, ४।४ ) ।

"अव्ययम् असङ्ख्यम्" ( कात० वृ० २।४।४ ) ।

"न व्येतीत्यव्ययम् ।

निपाताश्चादयो ज्ञेया उपसर्गाश्च प्रादयः ।
द्योतकत्वात् क्रियायोगे लोकादवगता इमे ॥"

( कात० वृ० टी० २।४।४ ) इति ।

१५—प्रत्ययः ( के प्रत्यये स्त्रीकृताकारपरे पूर्वोऽकार इकारम्, इवर्णावर्णयोर्लोपे स्वरे प्रत्यये ये च, प्रत्ययः परः २।२।६५, ६।४४, ३।२।२ ) ।

"प्रतीयते येनार्थः स प्रत्यय इति रूढिः । प्रत्ययात् प्रथम क्रियते इति प्रकृतिः" ( कात० वृ० ३।२।१ ) इति ।

१६—विरामः ( विरामव्यञ्जनादिष्वनडुन्नहिवन्सीना च, वा विरामे २।३।३४, ६२ ) ।

१७—संयोगः ( संयोगान्तस्य लोपः, संयोगादेर्धुटः २।३।५४, ५५ )।
१८—प्रथमा ( प्रथमा विभक्तिर्लिङ्गार्थवचने २।४।१७ )।
१९-२४—द्वितीया-तृतीया-चतुर्थी-पञ्चमी-षष्ठी-सप्तम्यः (शेषाः कर्मकरणसम्प्रदानापादानस्वाम्याद्यधिकरणेषु २।४।१९ )।
२५—कर्मप्रवचनीयः ( कर्मप्रवचनीयैश्च २।४।२३ )।
२६—कारकम ( बहुलार्थात् कारकाच्छस् वा मङ्गले गम्यमाने २।६।४०-८ )।
२७—विसृष्टः ( अनव्ययविसृष्टस्तु सकार कपवर्गयोः, रसकारयोर्विसृष्टः २।५।२९, ३।८।२ )।
२८—आख्यातम् ( आख्याताच्च तमादय ( २।६।४० )।
२९—एकवचनम् ( क्रियासमभिहारे सर्वकालेषु मध्यमैकवचनं पञ्चम्याः ३।१।२१)।
३०—लघु ( रशब्द ऋतो लघोर्व्यञ्जनादे. ३।२।१३ )।
३१—गुरु ( नाम्यादेर्गुरुमतोऽनृच्छ. ३।२।१९ )।
३२—अपृक्तः ( वेर्लोपोऽपृक्तस्य ४।१।३४ )।

वर्णानुक्रमेण व्याख्यातसञ्ज्ञाना सूची

| क्र०सं० | सं०ज्ञा० | अ० पा० सू० सं० | क्र०सं० | सं० ज्ञा० | अ० पा० सू० सं० |
|---|---|---|---|---|---|
| १ | अग्निः | २।१।८ | १८ | उपध्मानीयः | १।१।१८ |
| २ | अघोष· | १।१।११ | १९ | उपपदम् | ४।२।२ |
| ३ | अद्यतनी | ३।१।२८ | २० | ऊष्मा | १।१।१५ |
| ४ | अधिकरणम् | २।४।११ | २१ | करणम् | २।४।१२ |
| ५ | अनुनासिक. | १।१।१३ | २२ | कर्ता | २।४।१४ |
| ६ | अनुबन्धः | ३।८।३१ | २३ | कर्म | २।४।१३ |
| ७ | अनुषङ्गः | २।१।१२ | २४ | कर्मधारयः | २।५।५ |
| ८ | अनुस्वार. | १।१।१९ | २५ | कारितम् | २।२।९-११ |
| ९ | अन्तस्था | १।१।१४ | २६ | कृत् | ४।२।७ |
| १० | अपादानम् | २।४।८, ९ | २७ | कृत्यः | ४।२।४६ |
| ११ | अभ्यस्तम् | ३।३।८६, ८७ | २८ | क्रियातिपत्ति. | ३।१।३३ |
| १२ | अभ्यासः | ३।३।८५ | २९ | गुणः | ३।८।३४ |
| १३ | अव्ययीभाव. | २।५।१४ | ३० | धुट् | २।१।३, ४ |
| १४ | आत्मनेपदम् | ३।१।२ | ३१ | घोषवान् | १।१।१२ |
| १५ | आशीः | ३।१।३१ | ३२ | चेक्रीयितम् | ३।२।१४ |
| १६ | उत्तमः ( पुरुषः ) | ३।१।३ | ३३ | जिह्वामूलीयः | १।१।१७ |
| १७ | उपधा | २।१।११ | ३४ | तत्पुरुषः | २।५।७, ८ |

| क्र०सं० | सं०श० | अ० पा० सू० सं० | क्र०सं० | सं०श० | अ० पा० सू० सं० |
|---|---|---|---|---|---|
| ३५ | दा | ३।१।८ | ५६ | विभक्ति. | २।६।२४ |
| ३६ | दीर्घ· | १।१।६ | ५७ | विसर्जनीयः | १।१।१६ |
| ३७ | द्वन्द्व. | २।५।११ | ५८ | वृद्धि. | ३।८।३५ |
| ३८ | द्विगु | २।५।६ | ५९ | व्यञ्जनम् | १।१।९ |
| ३९ | धातुः | ३।१।९, २।१६ | ६० | शिट् | ३।८।३२ |
| ४० | धुट् | २।१।१३ | ६१ | श्रद्धा | २।१।१० |
| ४१ | नदी | २।१।९ | ६२ | श्वस्तनी | ३।१।३० |
| ४२ | नामी | १।१।७ | ६३ | सन्ध्यक्षरम् | १।१।८ |
| ४३ | निष्ठा | ४।१।८४ | ६४ | सप्तमी | ३।१।२५ |
| ४४ | पदम् | १।१।२० | ६५ | समानः | १।१।३ |
| ४५ | पञ्चमी | ३।१।२६ | ६६ | समास | २।५।१ |
| ४६ | परस्मैपदम् | ३।१।१ | ६७ | सम्प्रदानम् | २।४।१० |
| ४७ | परोक्षा | ३।१।२९ | ६८ | सम्प्रसारणम् | ३।८।३३ |
| ४८ | प्रथमः | ३।१।१३ | ६९ | सम्बुद्धिः | २।१।५ |
| ४९ | बहुव्रीहि. | २।५।९, १० | ७० | सवर्णम् | १।१।४ |
| ५० | भविष्यन्ती | ३।१।३२ | ७१ | सार्वधातुकम् | ३।१।३४ |
| ५१ | मध्यम. ( पुरुषः ) | ३।१।३ | ७२ | स्वरः | १।१।२ |
| ५२ | लिङ्गम् | २।१।१ | ७३ | हेतुः | २।४।१५ |
| ५३ | वर्ग. | १।१।१० | ७४ | ह्यस्तनी | ३।१।२७ |
| ५४ | वर्तमाना | ३।१।२४ | ७५ | ह्रस्वः | १।१।५ |



## अव्याख्यातसञ्ज्ञाशब्दानां वर्णानुक्रमेण सूची

| | | | | | |
|---|---|---|---|---|---|
| १ | अनुस्वारः | १।४।८ | ८ | कारकम् | २।६।४८ |
| २ | अपृक्तः | ४।१।३४ | ९ | गुरु | ३।२।१९ |
| ३ | अव्ययम् | २।२।६४, ४।४ | १० | चतुर्थी | २।४।१९ |
| ४ | आख्यातम् | २।६।४० | ११ | तृतीया | २।४।१९ |
| ५ | आगम. | २।१।६ | १२ | द्वितीया | २।४।१९ |
| ६ | एकवचनम् | ३।१।२१ | १३ | द्विवचनम् | १।३।२ |
| ७ | कर्मप्रवचनीयः | २।४।२३ | १४ | निपातः | १।३।१ |

| | | | | | |
|---|---|---|---|---|---|
| १५ | पञ्चमी | २।४।१६ | २४ | विभाषा | २।१।२८ |
| १६ | प्रत्ययः | २।२।६५, ६।४४; ३।२।१ | २५ | विरामः | २।३।४४, ६२ |
| १७ | प्रथमा | २।४।१७ | २६ | विसृष्टः | २।५।२६; ३।८।२ |
| १८ | बहुवचनम् | १।३।३ | २७ | षष्ठी | २।४।१६ |
| १९ | लघु | ३।२।१३ | २८ | संयोगः | २।३।५४, ५५ |
| २० | लुक् | २।१।७६ | २९ | सङ्ख्या | २।१।७५ |
| २१ | लोपः | १।२।१, १७ | ३० | सन्धिः | १।५।१६ |
| २० | वर्णः | १।१।१ | ३१ | सप्तमी | २।४।१६ |
| २३ | वा | २।१।१८ | ३२ | सर्वनाम | २।१।२५; ४।६।६९ |

इति कातन्त्रव्याकरणविमर्शाभिधे शोधप्रबन्धे पञ्चमः सञ्ज्ञाविमर्शाध्यायः ।



# षष्ठोऽध्यायः=कातन्त्रीयपरिभाषाविमर्शः

**परिभाषाया अर्थः, आवश्यकता, भेदाश्च**

प्रतिव्याकरणमाचार्यैः शास्त्रीयप्रक्रियायाः सङ्गतिं प्रदर्शयितु कानिचिन्नियमवचनानि स्वीक्रियन्ते, तानि च परिभाषाशब्देन व्यवह्रियन्ते। विधिसूत्राणा पूर्वत्र परत्र च यत् सूत्रवचन प्रवर्तते तदित्यर्थ.। उच्यते च—"भाष्यन्ते परितो यस्मात् परिभाषास्ततः स्मृताः" ( कात० परि० वृ०, भाव०, प्रारम्भे ) इति। परितः सर्वतो भाष्यन्तेऽर्था अनयेति परिभाषा। तत्र कानिचिद् वचनानि शास्त्रव्यवहारमनुसरन्ति, कानिचिल्लोकव्यवहारमपि—लोकवच्छास्त्रेऽपि व्यवहारस्य दर्शनात्। शास्त्रे लौकिकी विवक्षा समाद्रियते। न हि कोऽपि शिष्ट· शास्त्रव्यवहारे लौकिकी[1] विवक्षामतिक्रम्य प्रवर्तते।

शास्त्रीयाः परिभाषा द्विविधा·—लिङ्गवत्यो विध्यङ्गशेषभूताश्च। किञ्चिल्लिङ्ग विद्यते यासा ता लिङ्गवत्य·, ताश्चैकत्रैव विद्यमानाः स्वैः स्वैर्लिङ्गै· प्रदीपवत् सर्वं शास्त्रमभिज्वलयन्ति, यथा सुप्रज्वलितः प्रदीप एकत्रैव विद्यमानः स्वप्रकाशकिरणावलीभिर्भवनस्यापरोक्षभागान् प्रकाशयति। लिङ्गवत्यः परिभाषा यथा—"आगम उदनुबन्धः स्वरादन्त्यात् परः" ( २।१।६ ) इत्यादय·। अय भावः—शास्त्रे क्वचिदपि वर्तमान उकारानुबन्धविशिष्टो यो हि न्वादिरागम· सोऽन्त्यात् स्वरात् परमेव प्रवर्तते इति। अत एवोक्तम्—

> एकस्थः सविता देवो यथा विश्वप्रकाशकः।
> तथा लिङ्गवती शास्त्रमेकस्थाऽपि प्रदीपयेत्॥ इति।

कस्यचिद् विधेः प्रवर्तनाय या नियम प्रवर्तयन्ती प्रत्येक तद्विधिसूत्रै· सह पृथगुपतिष्ठते सा विध्यङ्गशेषभूता, यथा—यावन्तः प्रत्ययाः शास्त्रे विधीयन्ते ते प्रकृतेः पूर्व पर वा भवेयुरिति सन्देहस्य निराकरणायोच्यते—"प्रत्ययः परः" (३।२।१) इति। अय भावः—कश्चिदपि प्रत्ययः प्रकृतेः परमेव स्यान्न तु पूर्वमिति। तेनाय नियम· प्रत्येक "गुप्तिज्किद्भ्यः सन्" ( ३।२।२ ) इति प्रत्ययविधायक सूत्रमुपतिष्ठते। उच्यते चापि—

> एकाऽपि पुंश्चली पुंसां यथैकैक प्रयाति हि।
> विध्यङ्गशेषभूता तद्विधिं प्रत्यनुगच्छति॥ इति।

विधीना नित्यप्रवृत्तौ सत्या क्वचिद् येन नियम्यते स नियमः, विधीनां पाक्षिकप्रवृत्तौ सत्या यया नियम्यते सा परिभाषेति नियमपरिभाषयोर्भेदः क्रियते आचार्यैः, तेन पृथक् परिभाषा स्थाप्यते। कैश्चित् परिभाषादिसूत्रैः कानिचिद् वचनानि ज्ञाप्यन्ते, तान्यपि सूत्रवत्

---

१. यत्र प्रायस्य सम्प्रत्ययः सा लौकिकी विवक्षेति महाभाष्यकार·।
( द्र०—म० भा० ५।१।१६ )।

प्रमाण भवन्ति । वृत्तिकारादिभिर्यथावश्यक यद् न्यायवचन समाद्रियते तद् वाचनिक-परिभाषाशब्देनोच्यते ।

यानि न्यायसिद्धानि वचनानि तान्येव लौकिकन्यायः परिभाषा इति विज्ञेयम् । पूर्वाचार्याणा सूत्रवचनानि व्याख्यानवचनानि च व्याकरणशास्त्रे परिभाषारूपेण स्वीकृतानीति वक्तु शक्यते । आचार्यै. सूत्रोक्ता परिभाषाः पृथग् न व्याख्याता., किं च तैर्ज्ञापितास्तद्-व्याकरणे कार्यसिद्ध्यै अपेक्षिताश्चेति ।

**कातन्त्रीयपरिभाषाणां तद्व्याख्यानानां च परिचयः**

कातन्त्रसम्प्रदाये चतुरध्यायाना 'सन्धि-नाम-आख्यात-कृत्' इत्येतेषा सूत्रपाठे कानिचित् परिभाषासूत्राणि दृश्यन्ते, येषा सङ्क्षेपेण तात्पर्यं सूत्रक्रमसङ्गतिविचारे प्रदर्शितम् । सूत्रैर्ज्ञापिता अस्मिन् व्याकरणेऽपेक्षिताश्च काश्चित् परिभाषा दुर्गसिंहेन भावशर्मणा च व्याख्याताः । दुर्गसिंहेन पञ्चषष्टिः ( ६५ ) भावशर्मणा च द्वाषष्टिः ( ६२ ) व्याख्याताः परिभाषाः श्रीकाशीनाथाभ्यङ्करसम्पादिते परिभाषासङ्ग्रहाख्ये ग्रन्थे प्रकाशिता दृश्यन्ते । परिभाषासूत्रसन्दोहाख्ये हस्तलेखे दृष्टा अन्या अपि सप्त परिभाषास्तत्रोद्धृता. ( द्र०-पृ० ६६, टि० १ )।

कातन्त्रवृत्त्यादिग्रन्थेषु तत्तत्कार्यविधानाय स्मृताः पञ्चनवतिः ( ९५ ) परिभाषा दृश्यन्ते, ताश्चैतत्प्रकरणान्ते वर्णानुक्रमेण सङ्गृहीताः सन्ति । परिभाषासङ्ग्रहे तावतीना परिभाषाणा व्याख्यानस्यादर्शने मूलग्रन्थाभाव प्रथम कारण मन्ये, वृत्तिकारविचारेणा-व्याख्यातानामवशिष्टाना व्याख्यानस्य विशेषावश्यकताभावो पि सम्भाव्यते ।

कातन्त्रपरिभाषावृत्तिकारो दुर्गसिंह कातन्त्रवृत्तिटीकाकार परिलक्ष्यते यतो हि **"अन्त्याभावेऽन्त्यसदेशस्यापि ग्रहणम्"** ( ३६ ) इति परिभाषाया व्याख्याने स ब्रूते— **"सणनिटः (३।२।२५) इत्यत्रोपधाग्रहणं सुखार्थमिति व्याख्यातमस्मादेव वचनात्"** इति । अत्राऽऽचार्यस्य कस्यचिद् व्याख्यानग्रन्थस्य वा स्मरण न क्रियते, परमुपधाग्रहण सुखार्थमिति वचन टीकाया[1] दृश्यते । तेन 'व्याख्यातम्' इति क्रियायाः कर्ता टीकाकारो दुर्गसिंह इति वक्तु शक्यते[2] । टीकाकारवृत्तिकारयोरैक्यात् सूत्रवृत्तिकार एव दुर्गसिंह-परिभाषावृत्तिकारोऽपि भवितुमर्हति । तेन च दुर्गसिंहेन परिभाषावृत्तौ मतान्तरप्रदर्शन-प्रसङ्गेऽन्येऽप्याचार्या स्मृता. । यथा—**"कश्चित् कर्तरीति ज्ञापकं मन्यते"** ( परि० ७ ), **उक्तं च—**

**तिबनुबन्धगणैरुक्ते सङ्ख्ययैकस्वरेण च ।**
**चेक्रीयितलुगन्तानां नैतानि स्युः कदाचन ॥**
( परि० १३ ),

१. अन्तग्रहण सुखार्थमेव । अन्तग्रहणे सत्युपधाग्रहणमपि तथैव ( कात० वृ० टी० ३।२।२५ ) ।

२ "ननु तर्हि युक्तिसिद्धानामपि टीकाकृता तत्र तत्र शास्त्रे प्रस्तावात् सयुक्तिक प्रयोजनमुक्तमेव" इति वचने दुर्गसिंहेन स्वीयपरिभाषावृत्त्यारम्भे टीकाकार स्मर्यते इति नानौचित्यं मन्तव्यम्, आत्मनोऽपि स्मरणस्य प्रथमपुरुषरूपेण सम्भवात्, एतदभिप्रेत्यैवोक्तो विचार. प्रदर्शितः ।

केचिद् "दोऽद्धेर्मः" ( २।३।३१ ) इति वचनं ज्ञापकं मन्यते ( परि० ३६ ), कश्चिदत्र न वर्णाश्रये प्रत्ययलोपलक्षणमिति पठति" ( परि० ५२ ) इति । एतेन लक्षणेनानुमीयते—दुर्गसिंहात् पूर्वमपि कैश्चिदाचार्यैं कातन्त्रपरिभाषा व्याख्याता आसन्निति ।

कवीन्दुजयदेवेन पञ्चपञ्चाशत्परिभाषाणा ( ५५ ) व्याख्यानाय कृत. सङ्कल्प. । ग्रन्थस्यास्य हस्तलेखो भुवनेश्वरे ( उत्कलप्रान्ते ) सुरक्षितो दृश्यते । ग्रन्थादौ तेन मङ्गलानन्तरं ग्रन्थकरणस्य प्रयोजनादि निर्दिष्टम् । तथा हि—

प्रणम्य सदसद्वादध्वान्तविध्वंसभास्करम् ।
वाग्नाथं परिभाषार्थं वक्ष्ये बालविबुद्धये ॥

. ..

तत्र सूत्रकारयोः शर्ववर्मकात्यायनयोः सूत्राणां चतुःशत्यां पञ्चपञ्चाशदधिका[१] याः परिभाषा नोक्ताः । अथ वृत्तिटीकाकारैस्तु तत्र तत्र कार्येषु प्रयुक्ता दृश्यन्ते, तासां युक्तितः ससिद्धिरुच्यते । इत्यादि ।

एतद् वचन दुर्गसिंहस्य कवीन्दुजयदेवस्य च समानमेव वर्तते । प्रतापरुद्रीयनगरस्य यात्राप्रसङ्गे एताः परिभाषा विचारिता इति ग्रन्थान्ते निर्दिष्टम्—

प्रतापरुद्रीयपुरं गच्छता कार्यहेतवे ।
कवीन्दुजयदेवेन परिभाषाः समापिताः ॥ इति ।

भावमिश्रेण व्याख्यातासु परिभाषासु काश्चित् परिभाषा दुर्गसिंहव्याख्यातपरिभाषाभ्यो भिन्नाः, ताश्चान्तेऽनुक्रमणिकाया प्रदर्शिताः । कातन्त्रपरिभाषासूत्रनाम्ना सप्तषष्टि. ( ६७ ) परिभाषा., एकोनत्रिंशद् ( २९ ) बलाबलसूत्राणि, कालापपरिभाषासूत्रनाम्नाऽष्टादशोत्तरशतमिताश्च ( ११८ ) परिभाषासङ्ग्रहे प्रकाशिताः । तत्र कालापपरिभाषासूत्रेषु "श्तिबनुबन्धगणशबेकाजुक्तषु" ( २० ) इति सूत्र न युक्तम्, कातन्त्रे शबादीना शकारानुबन्धविशिष्टविकरणानामभावात्, अजादिप्रत्याहाराणा चाप्रयोगात्। अत्र "न श्तिबनुबन्धगणसङ्ख्यैकस्वरोक्तेषु" ( १४ ) इति कातन्त्रपरिभाषासूत्र शकारानुबन्धरहित समीचीनम् । "अन्यकार्यात् परा द्विरुक्तिः परोक्षालिडादिषु" ( ४७ ) इति पाठो न युक्तः । त्याद्याख्यातप्रत्यया अत्र न वर्तमानादेरादेशाः किन्तर्हि वर्तमानादिसञ्ज्ञका एव कालविशेषबोधनाय वर्तमानादयः पूर्वाचार्यकृताः सञ्ज्ञाः स्मृता न तु पाणिनिवल्लडादय. प्रकल्पिताः, तेन "अनन्यपूर्वा लादेशाः" ( ५५ ) इत्यपि सूत्र न युक्तम्। पाणिनीयाया इत्सञ्ज्ञायाः कृतेऽत्रानुबन्धशब्दः प्रयुज्यते इतीत्सञ्ज्ञाया अभावाद् "बहुषु च शितः" ( ५६ ) इत्यस्याप्ययुक्तत्वमवगम्यते । "एच इण् ह्रस्वत्वे" ( ६० ) इत्युपात्त सूत्रमसङ्गतम्, कातन्त्रेऽ-

---

१. पाठान्तरमपि दुर्गसिंहीयपरिभाषावृत्तौ दृश्यत-पञ्चपञ्चाशदधिकायाम् इति । चतु.शत्यामिति पाठ मध्ये दशशब्दस्त्रुटित इति प्रतीयते ।

जादिप्रत्याहारव्यवहारस्याभावात्, तन्नियमाय तदुत्तर "सन्ध्यक्षराणामिदुतौ ह्रस्वादेशे" (६५) इति सूत्रस्य दर्शनाच्च।

कश्चित् पाठक्रमोऽपि सूत्राणामयुक्त• प्रतिभाति। यथा— "पूर्वपरयोः परो विधिर्बलवान्, परान्नित्यम्, नित्यादन्तरङ्ग बलवत्" (५०-५२) इति सूत्रक्रमः। अत्र बलवच्छब्दस्यानुवृत्तिश्चेदिष्यते पश्चाद्वर्तिनि सूत्रद्वये, तर्हि तृतीये सूत्रे बलवच्छब्दो न पठनीय•। अत्र प्रायेणानुवृत्तिर्नेष्यते इति "सप्तम्या निर्दिष्टे पूर्वस्य" (३०) इति सूत्रानन्तर "पञ्चम्या निर्दिष्टे परस्य, षष्ठ्या निर्दिष्टे स्वस्य" (३१, ३२) इति सूत्रद्वये 'निर्दिष्टे' इति पदस्य "सर्वविधिभ्यो लोपविधिर्बलवान्" (४३) इत्यनन्तर "लोपस्वरादेशयोः स्वरादेशविधिर्बलवान्, आगमादेशयोरागमविधिर्बलवान्, आगमात् सर्वादेशविधिर्बलवान्" (४४-४६) इति सूत्रत्रितये 'बलवान्' इति पदस्य च पाठाद् विज्ञायते। परं "प्रकृतिग्रहणे चेक्रीयितलुगन्तस्यापि ग्रहणम्" (१६) इत्यनन्तर "न श्तिबनुबन्धगणशबेकाजुक्तेषु" (२०) इत्यत्र चेक्रीयितलुगन्तस्यानुवृत्तिर्दृश्यते, तेनोभयमपि सम्भवमिति विज्ञायते। कातन्त्रपरिभाषासूत्रेषु पठितासु सप्तषष्टिपरिभाषासु (६७) "एकवर्णो विधिरन्ते प्रवर्तते, चानुकृष्टं नोत्तरत्र, नित्योऽवश्यंभावी भवति, प्रकृतेरन्त्यापहारी लोपः" (६, २२, ४१, ५६) इति परिभाषाचतुष्टय विहायान्या• सर्वा दुर्गसिंहेन व्याख्याता•। तत्र "अभ्यासविकारेष्वपवादो नोत्सर्गान् बाधते" (६४) इत्येक परिभाषावचनमितोऽधिक दृश्यते, "य विधि प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमस्ति नासौ बाध्यते" (४७, ४८) इत्यनयोर्भिन्नसङ्ख्यकत्व विज्ञेयम्। एव याः पञ्चषष्टि• (६५) परिभाषा दुर्गसिंहेन व्याख्यातास्तासामत्र सङ्क्षेपेण प्रयोजनादि प्रदर्शयिष्यते।

मदननामकेन केनचिद् विदुषाऽस्या दुर्गसिंहकृताया वृत्तेष्टीका लिखिता यत्र द्विषष्टिमितानामेव (६२) परिभाषाणा चर्चा दृश्यते। तत्रादौ ग्रन्थकारेणोच्यते—

श्रीमता मदनेनेयं कातन्त्राम्बुजभास्वता।
बोधाय परिभाषाणां वृत्तौ टीका विरच्यते॥ इति।

अन्ते च—

श्रीमानिमां सकलशास्त्ररहस्यपद्म-
व्याकीर्णवृत्तिसरसीं मदनः प्रबोद्धुम्।
कातन्त्रतन्त्रशतपत्रविकाशभास्वां
ष्टीकालकं किरणचक्रमिदं व्यतानीत्॥ इति।

## भावमिश्रव्याख्याताना कातन्त्रीयपरिभाषाणां सङ्क्षेपेण परिचयः

पूर्वं तावत् कातन्त्रपरिभाषाणा व्याख्यातुर्भावमिश्रस्य परिचयः कश्चित् प्रकल्प्यते। तथा हि—ग्रन्थादौ भावशर्मणा प्रकीर्णककर्ता विद्यानन्दः स्मृतः। कोऽयं विद्यानन्दः

किंविषयकः प्रकीर्णकनामा ग्रन्थश्च ? इति तत्त्वतो न ज्ञायते। कातन्त्रोत्तरनामा ग्रन्थो विद्यानन्देन प्रणीतः, यस्य विद्यानन्द' इति नामान्तरमुद्घ्रियते। अत्र प्रकीर्णकशब्देन यदि कातन्त्रोत्तर स्मर्यते-कातन्त्रोत्तरस्य परिशिष्टरूपत्वात्, तर्हि स एव कातन्त्रोत्तरप्रणेता विद्यानन्दोऽत्र स्मृत इति ध्येयम्। अस्तु, तदुत्तरभाविनैव केनचिद् भावमिश्रनामकेन वैयाकरणेन वृत्तिरिय रचितेति। परिभाषासूत्रैर्ज्ञापिताना परिभाषाणामर्थास्तत्प्रयोगाश्च स्वीये व्याख्याने ग्रन्थकारेण प्रदर्शिता इति तदीयेन नामनिर्देशपूर्वकमुक्तेन ग्रन्थस्य प्रयोजन-विषयनिरूपकेण प्रतिज्ञावचनेनावगम्यते[1]।

अत्र व्याख्याताना परिभाषाणा क्रमे प्रायेण सङ्गतिर्न दृश्यते। पाणिनिसम्प्रदायेऽपि "अर्थवशाद् विभक्तिविपरिणाम." इति वचनमङ्गीक्रियते, पर श्रीनागेशभट्टेन परिभाषेन्दु-शेखरे तत् परिभाषारूपेण नाङ्गीकृतमवलोक्यते, अत्र भावमिश्रेण तद् व्याख्यात दृश्यते। **"भिसैस्'** ( २।१।१८ ) इत्यत्र **"अकारो दीर्घ घोषवति"** ( २।१।१४ ) इत्यतोऽनुवृत्तः प्रथमान्तोऽकार. पञ्चम्यन्तततामुपैति, तेन अकारात् परो भिस्प्रत्यय ऐस् स्यादिति सूत्रार्थः सम्पद्यते। उक्तार्थसिद्ध्यै **"अर्थवशाद् विभक्तिविपरिणामः"** ( १३ ) इति वचन व्याख्यातम्। पाणिनीये **"एवं तर्हि भाविनीयं सञ्ज्ञा विज्ञास्यते"** ( म० भा० १।१।४५ ) इति वचनेन सञ्ज्ञाविषये, "अकृतव्यूहाः पाणिनीयाः" ( परि० ७३ ) इति परिभाषावचनेन कार्यान्तरविषये च भाविबुद्धिमादायेष्ट विधीयते। अत्र **"भाविनि भूत-वदुपचारः"** ( परि० १४ ) इत्यनया परिभाषयोक्त निष्पाद्यते। यथा **"अथ परस्मै-पदानि, नव पराण्यात्मने"** ( ३।१।१, २ ) इत्यत्र सञ्जिनस्त्यादिप्रत्यया नोक्तास्तथापि वर्तमानादिसञ्ज्ञका येऽग्रे कथयिष्यन्ते तेषामेव प्रत्ययाना परस्मैपदात्मनेपदसञ्ज्ञे कर्तव्ये इति ज्ञायते। **"उपसर्गस्य धातोरेदोतोः"** ( १।२।७ वा० ) इत्यनेन धातोरेकारौकारयोः परत उपसर्गावर्णस्य लोप उच्यते, तर्हि 'उप' उपसर्गानन्तरमिण्धातौ सत्युक्तसूत्रेणावर्णलोपस्य प्राप्तावसत्याम् **"इणेधत्योर्न"** ( १।२।७ वा० ) इत्यनेन निषेधो न करणीयः, परं भाविन-मेकार मत्वाऽवर्णलोपस्य प्राप्तौ निषेधविधिः समीचीनः।

"उक्तानामप्रयोगः" इति वचन पाणिनीये [2]महाभाष्यकारादिभिरुपस्थापितमपि नागेशभट्टेन न व्याख्यातम्, अत्र **"उक्तेऽर्थे तत्प्रत्ययाप्रयोगः"** ( **२२** ) इति परिभाषावचनमनुमतम्। **"लुप्तोऽनुबन्धः साध्यसिद्धिवशात् सद्वत्"** ( **२४** ) इत्यनेन

---

१. "प्रकीर्णके विद्यानन्देन कारिकयोक्तम्—

सञ्ज्ञा च परिभाषा च विधिर्नियम एव च।
प्रतिषेधोऽधिकारश्च षड्विधं सूत्रलक्षणम्॥ इति।
भाष्यन्ते परितो यस्माद परिभाषास्ततः स्मृता.।
तासामर्था. प्रयोगाश्च लिख्यन्ते भावशर्मणा"॥

२. धातो. कर्मण समानकर्तृकादिच्छाया वा ( म० भा० ३।१।७ )।

साध्यस्य ( प्रयोगस्य ) सिद्धिश्चेदिष्यते तर्ह्युच्चरितमात्रेण लुप्तोऽप्यनुबन्धो विद्यमानवद् मन्तव्य इत्युक्तम्। प्रत्ययाना लोपविधि क्वचिदादेरेव न स्यात् किं च समग्रस्यैव स्यादिति "प्रत्ययस्य सर्वापहारी लोपः" ( २५ ) इत्यनेन सूचितम्।

पाणिनीयेऽनुशासनभागे पठित "प्रत्ययलोपे प्रत्ययलक्षणम्" ( अ० १।१।६२ ) इत्यपि सूत्रमत्र व्याख्यातम्। अमुमित्यादौ वारद्वयमकारलोपस्य विधानाय "यावत्-सम्भवस्तावद्विधिः" ( २७ ) इति निर्दिश्यते। पाणिनीये पररूप प्रवर्तते। सूत्रे यस्य किञ्चिद् विधीयते तस्य कार्यिणस्ततो निमित्तस्य तदनु च कार्यस्य निर्देश उचितोऽभिमतः। विपरीतक्रमे विधौ भेद सजायते इति निर्देशाय "कार्यी निमित्तं कार्यमित्येष निर्देशक्रमः, तद्भेदे विधेर्भेदः" ( २८, २९ ) इति परिभाषे प्रोक्ते। "यल्लक्षणेनानुपपन्नं तत्सर्वं निपातनात् सिद्धम्" ( ३० ) इत्यनेन निपातनकार्यमुक्तम्। निर्दिश्यमानानामादेशा भवन्तीत्येव वक्तव्ये "निर्दिश्यमानानामादेशिनामादेशाः स्युः" ( ३३ ) इति वचने आदेशिनामिति पद स्पष्टार्थं बोध्यम्। "यथासङ्ख्यमनुदेशः समानाम्, स्थानेऽन्तर-तमः" ( ३४, ३५ ) इति पाणिनीयानुशासनसूत्रद्वयमपि व्याख्यातम्। अनुशासनभागे "परो दीर्घः" ( १।१।६ ) इत्यनेन 'आ-ई-ऊ-ॠ-ॡ' इत्येते पञ्चैव वर्णा दीर्घसञ्ज्ञका विज्ञापिता न त्वेकारादयोऽपि चत्वारः सन्ध्यक्षरसञ्ज्ञका वर्णाः, तेनात्राकाराद्यक्षरद्वयसयोगेन निष्पन्नानि एकारादीनि चत्वार्यक्षराणि नित्य दीर्घसञ्ज्ञकानि निर्दिष्टानि[१]। "अर्वन्न-र्वन्तिरसावनञ्" ( २।३।२२ ), हन्तेर्वधिः ( ३।४।८२ ), मर्जो मार्जिः" (३।८।२३) इत्यादाविकारेण सहिता येऽर्वन्तिरादय आदेशास्ते इकाररहिताः स्युरित्यर्थमुक्तम्-- "इकारोक्तः सविभक्तिरादेशोऽस्वरः" ( ३८ ) इति। पाणिनीये नागेशभट्टेना-व्याख्यातानि—"पारिभाषिकं क्वचिदनित्यम्, गुणबाधिका वृद्धिर्भवति, प्रधान-शक्त्यभिधाने गुणशक्तिरभिहितवत् प्रकाशते" ( ५८, ६०, ६२ ) इति परिभाषा-वचनानि व्याख्याय ग्रन्थ उपसहृतः।

## दुर्गसिंहव्याख्यातानां कातन्त्रीयपरिभाषाणां प्रयोजनादिकम्

दुर्गसिंह आदौ 'ॐ श्रीजिनाय नमः' इति वचनेन भगवन्त बुद्ध नमस्कृत्याऽऽत्मान बौद्धं परिचाययति, पर तत्र 'ॐ नमो गणेशाय' इति पाठान्तरेण निश्चेतु न शक्यते। तादृशेन प्रतिलिपिकारेणेद नमस्कारवाक्यमुपस्थापितमित्यपि सम्भाव्यते। आदौ वृत्तिकारो बालावबोधाय परिभाषार्था अत्र वृत्तौ मया सङ्क्षेपेण कथयिष्यन्ते इति प्रतिजानीते[२]। शर्ववर्मकात्यायनप्रणीतानि पञ्चाशदधिकचतुःशतमितानि ( ४५० ) सूत्राणि सन्तीति यन्निर्दिश्यते तत्र 'चतुःशत्याम्' इति पाठमध्ये दशशब्दोऽवशिष्ट इति प्रतीयते, अत्र

१ नित्य सन्ध्यक्षराणि दीर्घाणि ( ३७ )।

२. प्रणम्य सदसद्वादध्वान्तविध्वंसभास्करम्।
बाग्नाथ परिभाषार्थं वक्ष्ये बालावबुद्धये ॥ इति।

युधिष्ठिरमीमांसकस्य युक्तिः प्रशंसनीया[1]। शर्ववर्मकात्यायनाभ्यां सूत्रकाराभ्यामप्रयुक्ता एताः परिभाषा वृत्तिटीकाकाराभ्यां यथास्थानं सूत्रव्याख्याने वर्णिता.। अत्र पुनस्तासां व्याख्यानमर्थस्य स्पष्टतयाऽभिधानाय क्रियते इत्यस्ति ग्रन्थकरणे यत्नफलमिति तेन विज्ञापितम्[2]। अत्रेदमपि विज्ञेयम्—वृत्तिकारेण परिभाषार्थाना क्रमशोऽभिधानाय प्रतिज्ञातम्, परम् "उत्सर्गापवादयोरपवादविधिर्बलवान्" (६३) इत्यादिपरिभाषाणां क्रमविच्छेदेनोपस्थापितत्वात् प्रतीयते—अन्या अपि काश्चन परिभाषा वृत्तिकारेण व्याख्याता आसन्निति।

पूर्वं "न सम्प्रसारणे सम्प्रसारणम्" (३।४।१७) इति सूत्रम् "एकदेशविकृतमनन्यवत्" (१) इति परिभाषाया ज्ञापकमुक्तम्। अय भाव.—'विध्यते' इत्यादावेकदा सम्प्रसारणे कृते व्यधरूपाभावात् पुनः सम्प्रसारणाप्राप्तौ प्रतिषेधकरणमनावश्यकमेव स्यात्। अत्र प्रतिषेधकरणमेव विज्ञापयति-एकदेशस्य विकारेऽपि शब्दरूप तदेव भवति नान्यदिति। तेनैकदा सम्प्रसारणं कृतेऽपि वकारस्य पुन. सम्प्रसारण प्राप्तं तन्निषिध्यते इति। एतेनैव परिभाषाबलेन एधीत्यादौ सस्यैत्वे सति 'अस्' रूपाभावादपि "अस्तेरादेः" (३।४।४१) इत्यनेन लोपः प्रवर्तते। चित्रगुरित्यादौ गोशब्दस्य गौणत्वाद् "गोरौ घुटि" (२।२।२३) इत्यनेनौत्व न भवति। लोकेऽपि दृश्यते—छिन्नकर्णलाङ्गूलः श्वा श्वैव भवति नाश्वो न गर्दभ इति। एव 'यः, म.' इत्यादावत्वे कृतेऽपि तद्रूपत्वात् 'व्यञ्जनाच्च' (२।१।४६) इत्यनेन सिलोपे प्राप्ते तद्वारणाय परिभाषान्तरमुच्यते—"नास्वशब्दोक्तत्वात्" (२) इति। स्वः=विशेषः, न स्वः=अविशेषः=सामान्यम्, तेनोक्तसूत्रे 'व्यञ्जन' इति सामान्यशब्दोक्तत्वाद् 'यः, स.' इत्यादिष्वनन्यवद्भावो न भवति। अत्र ज्ञापकम्— 'हचतुर्थान्तस्य धातोस्तृतीयादेरादिचतुर्थत्वमकृतवत्" (२।३।५०) इत्यत्राकृतवदिति वचनम्। अन्यथा गोधुगित्यादौ पूर्वं दकारस्य धकारे कृते दुहधातोरनन्यवद्भावाद् "दादेर्हस्य गः" (२।३।४७) इति सूत्रेण हकारस्य गकारः सम्पद्येतैवेति अकृतवद्ग्रहण व्यर्थमेव स्यात्। अकृतवद्ग्रहणेन ज्ञाप्यते—सामान्योक्तेष्वनन्यवद्भावो न भवतीति। एव "दादेर्हस्य गः" (२।३।४७) इत्यत्र 'दादि' इति सामान्यनिर्देशेनानन्यवद्भावस्याभावाद् गत्वेऽप्राप्तेऽकृतवद्ग्रहण क्रियते। सामान्यशब्देनोक्तत्वादनन्यवद्भावाप्रवृत्तौ पतिशब्दस्य निषेधे कृते नरपतिशब्दस्याग्निसञ्ज्ञाया निषेधो न भविष्यति रूपान्यत्वात्। कथं तर्हि "पतिरसमासे" (२।२।२) इत्यत्र समासग्रहणं कृतम्? समासग्रहण ज्ञापयति—"येन विधिस्तदन्तस्य" (३) इति। येन शब्देन येन वर्णेन वा यो विधिरारभ्यते स विधिस्तदन्तस्य भवतीति परिभाषार्थः। तेन तदन्तविधिना नरपतिशब्दस्यापि प्राप्तो निषेधस्तत्र न प्रवर्तेतेति नियम्यतेऽसमासपदेन। तदन्तविधिस्वीकारे 'भेषः करोति,

१. स० व्या० शा० इति०, भा० २, पृ० २६३, टि० १।

२. ननु तर्हि युक्तिसिद्धानामपि टीकाकृता तत्र तत्र शास्त्रे प्रस्तावात् सयुक्तिक प्रयोजनमुक्तमेव, कि यत्ननेति? सत्यम्, एकत्र पिण्डीकृतानां सङ्क्षेपेण क्रमशो विस्पष्टतया चार्थोऽभिधीयते इत्यस्ति यत्नफलमिति।

दासः पतति' इत्यादौ "एषसपरो व्यञ्जने लोप्यः" ( १।५।१५ ) इत्यनेन विसर्गस्य लोपे प्राप्ते पठ्यते—"अर्थवद्ग्रहणेऽनर्थकस्य ग्रहणं न भवति" ( ४ ) इति । अन्यथा कासशब्दस्योपादाने तदन्तविधिना चकासोऽपि ग्रहण सम्भवतीति "चकासकासप्रत्ययान्तेभ्य आम् परोक्षायाम्" ( ३।२।१७ ) इत्यत्र चकासग्रहणं व्यर्थं स्यात्, तेन तदेवात्र ज्ञापयति परिभाषावचनमिदम् ।

अनिनस्मन्ग्रहणानि त्वनर्थकेनापि तदन्तविधिं प्रयोजयन्ति । एव 'मिमीते, जिहीते' इत्यादावभ्यासस्यानर्थकत्वाद् "भृञ्-ह्राङ्-माङामित्" ( ३।३।२४ ) इति न प्रवर्तेत, अत एवोच्यते—"वर्णान्तस्य विधिः" ( ५ ) इति । वर्णान्तस्य यो विधिः करणीयः सोऽनर्थकस्यापि प्रवर्तते इत्यर्थः । अत्र "अभ्यासस्यादिर्व्यञ्जनमवशेष्यम्" ( ३।३।६ ) इत्यतोऽभ्यासाधिकारे प्रवर्तमाने "इतो लोपोऽभ्यासस्य" ( ३।३।२८ ) इत्यत्र पुनरभ्यासग्रहणं ज्ञापकम्-अन्यत्र वर्णान्तस्य विधिर्भवतीति, तत्र चाभ्यासग्रहणेन समस्तस्य लोपो जायते । एव वर्णान्तविधिनेद ज्ञातम्—यः कश्चिदादेश सोऽन्तस्य स्थाने भवतीति । तर्हि 'अस्थि' इत्यादेरनादेशविधानमपीकारस्यव स्थाने प्रवर्त्स्यते इति अन्तग्रहणं व्यर्थमेव, व्यर्थं सदन्तग्रहण विज्ञापयति–अनेकवर्णो य आदेशः स सर्वस्य स्थाने भवतीति, तस्य वारणायाऽन्तग्रहण कृतम् । परिभाषास्वरूपम्—"अनेकवर्णः सर्वस्य" ( ६ ) इति । प्रथमानिर्दिष्ट एकवर्णोऽपि विधिः सर्वस्य स्थाने भवतीति वेदितव्यम् । अन्यथा इदंप्रभृतेः "इ[1]-ई[2]" इत्यादयः आदेशा न स्युः । लोकेऽपि 'लम्बकर्णो घटः स्फोटयितव्यः' इत्युक्ते सम्पूर्ण एव घटः स्फोट्यते न कर्णमात्रम् । तेन "ऋदन्तस्येरगुणे" ( ३।५।४२ ) इत्यादिभिः सर्वस्यैवादेशः करणीयो न त्वृकारादिमात्रस्य । पर लोके यदोच्यते—'भग्नजङ्घस्यास्थिसन्धानाय घृतलेपः कर्तव्यः' इति, तदा घृतलेपो जङ्घायामेव क्रियते न तु सर्वाङ्गे । एव "ऋदन्तस्येरगुणे" ( ३।५।४२ ) इत्यादौ ऋकारादिमात्रस्यैव कार्यं जायते न तु सर्वस्य । एतदर्थमुच्यते "निर्दिश्यमानानामादेशिनामादेशाः" ( ७ ) इति । परिभाषेयमुक्तेन लौकिकन्यायेनैव स्वकरणीया न तु शास्त्रीयेण कर्तरीति[3] ज्ञापकेनेति वृत्तिकारमतम् । "द्व्यन्तरुपसर्गेभ्योऽप[4] ईः" ( उद्धृ०, कात० दु० परि० वृ०, परि० ७ ) इत्यत्राऽऽप्शब्दस्य निर्दिष्टोऽप्यादेशस्तदादेरेव भवति, सञ्ज्ञाशब्दत्वात्तद्धितानामुक्तं कार्यं यथाप्रयोग भविष्यति, तदर्थमादेः परस्येति न वक्तव्यमित्यपि तत्र वृत्तिकारो व्याचष्टे ।

---

१. तश्चेदमिः ( २।३।२५ ) ।

२ इदमी ( ४।६।६६ ) ।

३. व्याख्याकारेण कर्तरीतिपदघटित सूत्रमत्र न स्मृतम् । "कर्तरि कृतः" ( ४।६।४६ ) । इति सूत्रे पठितस्य कर्तरीति पदस्य ज्ञापकत्व सम्भाव्यते । सूत्रान्तरेषु वर्तमान कर्तरीति पद विषयेऽत्र ज्ञापक भवितुमर्हतीति दृढं न प्रतीयते ।

४. तकारविशिष्ट ईकारादेशः पाणिनीये क्रियते ( अ० ६।३।९७ ), कातन्त्रे तु नैतादृश सूत्र पठ्यते । परिभाषावृत्तिकारेणोक्तं वचन कातन्त्रीय मत्वा चेदुद्धृतं तर्हि तत्र तस्य प्रकल्पनमेवेति विज्ञायते ।

आदेशविधिनिर्देशप्रसङ्गे लिङ्ग-धातु-विभक्तीना यो ह्यादेशः स किञ्चिद् विधिप्रवर्तनाय स्थानिवद् भवतीति नियमनायोच्यते—**"स्थानिवदादेशोऽनल्विधौ"** ( ८ ) इति। **"एत्वमस्थानिनि"** ( २।३।१७ ) इत्यत्रोपात्तमस्थानिनीति पदमत्र ज्ञापकम्। सूत्रेणाने-नानादेशिनि प्रत्यये परत एत्व क्रियते। यद्यादेशः स्थानिवन्न स्यात्, तर्हि 'युष्मान्, अस्मान्' इत्यादौ विभक्तेर्य आदेशस्तस्य विभक्तित्वाभावादेत्वस्याप्राप्तौ सत्या प्रतिषेधो व्यर्थः स्यात्, कृतेन प्रतिषेधेनेद विज्ञाप्यते—आदेश स्थानिवद् भवतीति। वर्णविधौ कर्तव्ये तु नाय नियमः प्रवर्तते, अत एव द्यौरित्यादौ "व्यञ्जनाच्च" ( २।१।४९ ) इत्यनेन सिलोपो न भवति। अत्र विशेषः 'अस औ' इत्यवस्थायाम् **"ओकारे औ औकारे च"** (१।२।७) इत्यनेनैवौका-रादेशे कृते 'असौ' इति सिद्धे **"सावौ सिलोपश्च"** ( २।३।४० ) इत्यनेन यदौकारविधानं क्रियते, तज्ज्ञापयति—**"स्वरादेशः परनिमित्तकः पूर्वविधिं प्रति स्थानिवत्"** ( ९ ) इति। पर निमित्तमादाय यः स्वररूप आदेशस्तस्य स्थानिवत्त्वं भवति पूर्वविधौ कर्तव्ये इत्यर्थः। एवम् 'अस औ' इत्यवस्थाया सकारस्थाकारस्यौकारे कर्तव्ये पूर्वं विभक्तिनिमित्तकः सम्पन्नो यः सकारस्याकारादेशस्तस्य स्थानिवद्भावाद् औकारादेशाप्राप्तौ स पुनः सूत्रान्तरेण विधीयते। अत एव 'कथयति, गणयति' इत्यादावुपधादीर्घे कर्तव्ये लुप्तस्याकारस्य स्थानि-वद्भावाद् दीर्घो न भवति। पर चाय स्थानिवद्विधिः पदान्तविधि-द्विर्वचनविधि-वर्गान्त-विधि-अनुस्वारविधि-प्रथमविधि-तृतीयविधि-दीर्घविधि लुग्विधिषु कर्तव्येषु न प्रवर्तते। अत्र ज्ञापकम्—**"अवमसंयोगादनोऽलोपोऽलुप्तवच्च पूर्वविधौ"** ( २।२।३० ) इत्यत्रालुप्त-वद्ग्रहणम्। अन्यथा 'राज्ञः, दध्ना' इत्यादौ लुप्तस्याकारस्य स्थानिवत्त्वे सति ञत्वतृतीयादय आदेशा न स्युः, अलुप्तवद्ग्रहणेन तृतीयविधौ कर्तव्ये पूर्वविधिं प्रति न स्थानिवदिति ज्ञाप्यते। एव कुर्यादित्यादावकारस्योत्वे, विकरणस्य लोपे च कृते विकरणस्य स्थानिवत्त्वात् पर व्यञ्जनाभावादेव दीर्घो न भविष्यति, **"नामिनो र्वोरकुर्छुरोर्व्यञ्जने"** ( ३।८।१४ ) इत्यत्र तस्य दीर्घप्रतिषेधो व्यर्थ. स्यात्, कृतः प्रतिषेधो दीर्घविधौ स्थानिवत्त्वाभाव ज्ञापयति। पठ्यते च—**"न पदान्तद्विर्वचनवर्गान्तानुस्वारप्रथमतृतीयदीर्घलुग्विधिषु"** ( १० ) इति। वृत्तिकारेण तृतीयदीर्घविध्योरेव ज्ञापकाभ्या पदान्तादिविधिषु स्थानिवत्त्व-प्रतिषेधः स्थालीपुलाकन्यायेन संसाधित.[१]। 'वैयाकरणः, सौवश्व.' इत्यादाविकारस्य यकारा-देशे उकारस्य च वकारादेशे कृते **"न य्वोः पदाद्योर्वृद्धिरागमः"** ( २।६।५० ) इत्यने-नैकारौकारयोः कर्तव्ये **"स्वरादेशः परनिमित्तकः पूर्वविधिं प्रति स्थानिवत्"** ( ९ ) इत्यनेन स्थानिवद्भावे प्राप्ते **"योऽनादिष्टात् स्वरात् पूर्वस्तं प्रति स्थानिवत्**[२]**"** (११) इत्यनेन स निषिध्यते। उक्तसूत्रे वृद्धिरागमग्रहणमेव स्थानिवद्भावस्य निषेध ज्ञापयति, अन्यथा 'न य्वोः पदाद्योरायावू' इत्येव सूत्र कुर्यात्।

१ तर्हि तृतीयदीर्घविधेरेव ज्ञापकम्। अन्येषा कथ ज्ञापकसिद्धिरिति चेत्, सत्यम्, स्थालीपुलाकवदिह ज्ञापकसिद्धिरिष्यते। यथा—स्थाल्यामेकद्वित्रिपुलाकसिद्धिदर्शनेन सर्वपुलाकसिद्धिरनुमीयते, तथेहापीत्यर्थ. ( परि० १० )।

२ अत्र स्थानिवत्त्वप्रकरणे नकारस्यानुवृत्तौ कृताया स्थानिवदिति पाठोऽधिकः।

आदेशविधावावश्यकनियमान्निर्दिशन् धातुरूपप्रकृतौ विशेषं कश्चिदुक्तवान्— "**प्रकृतिग्रहणे चेक्रीयितलुगन्तस्यापि ग्रहणम्**" ( १२ ) इति। अय भावः—गणपठितस्य धातोश्चेत् किञ्चित् कार्यं विधीयते तर्हि तद् यङ्लुगन्तस्यापि धातोः स्यात्, न तु धातुपाठे पठितस्य धातुमात्रस्येति। तेन '**से गमः परस्मै**" ( ३।७।६ ) इत्यनेन जङ्गमिष्यतीत्यत्र यङ्लुगन्तेऽपीडागम. प्रवर्तते। "**पञ्चमोपधाया धुटि चागुणे**" ( ४।१।५५ ) इत्यनेन प्रशानित्यादावुपधाया दीर्घो विधीयते। व्यञ्जनस्य दीर्घत्वाभावात् 'पञ्चम इत्यस्यैव निर्देशेन तत्पूर्वस्य स्वरस्य दीर्घो भविष्यतीत्यनर्थकमुपधाग्रहणम्, तदेव विज्ञापयति—अन्यत्र प्रकृतिग्रहणे चेक्रीयितलुगन्तस्यापि ग्रहण भवतीति। एतेन 'ददान्तः, ततान्त· इत्यादावभ्यासस्य दीर्घो न भवति। अत्र विशेषः—सोषवाणीत्यादौ "**शीङः सार्वधातुके**" ( ३।६।१८ ) इत्यनेन गुणे, चोकोटितेत्यादौ "**कुटादेरनिनिचट्सु**" ( ३।५।२७ ) इत्यनेन गुणनिषेधे, रोरोत्तीत्यादौ 'रुदादिः पञ्चको गण.' इति निर्देशेन "**रुदादेः सार्वधातुके**" ( ३।७।३ ) इत्यनेनेडागमे, पापचितेत्यादौ "**पचिवचिसिचिरिचिमुचेश्चात्**" ( ३।७।१८ ) इत्यनेनेट्प्रतिषेधे च प्राप्ते तन्निराकरणायोच्यते–"**न तिबनुबन्धगणसङ्ख्यैकस्वरोक्तेषु**" (१३) इति। "**वनतितनोत्यादिप्रतिषिद्धेटां धुटि पञ्चमोऽच्चातः**" ( ४।१।५६ ) इत्यत्र तिब्निर्देशो ज्ञापकः, अन्यथा वनतनादित्युक्तेऽपि कार्यसिद्धिः स्यात्। 'ददान्तः, तंतान्तः' इत्यादौ यङ्लुगन्तेऽपि पञ्चमलोपोऽद्भावश्च न स्यातामित्येवाभिप्रेत्य सूत्रे तिब्निर्देश. क्रियते। एकस्यैव तिब्निर्देशस्य ज्ञापकत्वेनान्येषामपि अनुबन्धादीनामपि चतुर्णां स्थालीपुलाकन्यायेन ज्ञापकत्व मन्तव्यमिति वृत्तिकार.। परिभाषार्थः सङ्गृह्योच्यते—

**तिबनुबन्धगणैरुक्ते सङ्ख्ययैकस्वरेण च।**
**चेक्रीयितलुगन्तानां नैतानि स्युः कदाचन॥** इति।

एतदनूक्तायाः "**आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते**" ( १४ ) इत्यस्याः परिभाषायाः क्रमसङ्गतिर्नास्ति। प्रतीयते–कश्चिदत्र पाठो भ्रष्ट इति। परिभाषेयं "**क्रुञ्चोऽसुटः**" ( ३।७।३७ ) इत्यत्र 'असुट' इति पदेन ज्ञाप्यते। तदित्थं विज्ञेयम्—यदि क्रुञो विहितः सुडागमः क्रुञ्ग्रहणेन न गृह्येत, तर्हि तत्र विहितस्य कार्यस्याप्राप्तौ सत्या निषेधो नावश्यकः स्यात्। निषेधकरणेन यो यस्याऽऽगमो भवति स तस्य ग्रहणेन गृह्यते इति ज्ञायते। ( यो हि प्रकृतिप्रत्यययोरनुपघातेनाऽऽगच्छति स आगमो भवति )। तेन सञ्चस्करतुरित्यादौ "**ऋतश्च संयोगादेः**" ( ३।६।१५ ) इत्यनेन गुणः प्रवर्तते।

आगमविषये विशेषमुक्त्वाऽऽदेशविषयेऽपि विशेषस्य प्रदर्शनायोच्यते—"**यथासङ्ख्यमनुदेशः समानाम्**" ( १५ ) इति। समानाम् = तुल्यानामर्थाना शब्दाना वाऽनुदेशः पश्चादुच्चारण यथासङ्ख्यं पूर्वस्योच्चारणस्यानतिक्रमेण भवतीत्यर्थः। "**ङवन्ति यै-यास्-यास्-याम्**" ( २।१।४२ ) इत्यत्र द्वियास्करणेन परिभाषेय ज्ञाप्यते। यद्यादेशविधाने क्रमो न स्वीकृतः स्यात्, तर्ह्येकेनैव यास्करणेन ङसिङसोरुभयत्रापि यासुपपद्येत।

अर्थानामयमनुदेशः। शब्दाना तु 'चखान, जघान' इत्यादौ "कवर्गस्य चवर्गः" ( ३।३।१३ ) इत्यनेन द्वितीयचतुर्थयोर्द्वितीयचतुर्थौ वर्णौ, तयोश्च "द्वितीयचतुर्थयोः प्रथमतृतीयौ" ( ३।३।११ ) इत्यनेन प्रथमतृतीयावादेशौ भवतः। स्थाने ये ह्यादेशा भवन्ति ते सदृशतमा एव भवन्त्विति नियमनायोच्यते–"स्थानेऽन्तरतमः" ( १६ ) इति। 'आप्लृ' धातौ दीर्घाकारस्य दीर्घादेशविधाने व्यर्थे सति "अवर्णस्याकारः" ( ३।८।१८ ) इत्यत्र वर्णग्रहणं किमर्थं क्रियते इति जिज्ञासायामिदमवगन्तव्यम्–कस्यचिन्मते "अवर्णः सर्वमुखस्थानम्" इत्युच्यते, एवमेकदेशेनाऽऽन्तरतम्यात् सर्वा वृद्धयो मा भूवन्नित्यर्थं कृतं वर्णग्रहण विज्ञापयति–स्थाने आदेशा अन्तरतमा भवन्तीति। आन्तरतम्य चतुर्विध भवति–स्थानकृतम्, अर्थकृतम्, गुणकृतं प्रमाणकृत चेति। दण्डाग्रमित्यादौ स्थानकृतमान्तर्यमादाय कण्ठस्थानस्याकारस्य कण्ठस्थान आकारः, ईक्षामासे इत्यादावर्थकृतमादाय कर्मण्यात्मनेपदम्, नेतेत्यादौ गुणकृतमादाय नामिनस्तालव्येकारस्य तालव्यगुण एकारः, अमू-इत्यादौ प्रमाणकृतमादाय दीर्घस्य वर्णस्य दीर्घ एवोकारादेशः प्रवर्तते।

अनन्तर सूत्रेषु लिङ्गस्य ( प्रातिपदिकस्य ) निर्देशेन पुस्त्रीनपुसकलिङ्गविशिष्टस्यापि तस्य ग्रहण स्यादित्यर्थं यत् पठ्यते—"लिङ्गग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" ( १७ ) इति, तस्य क्रमे सङ्गतिर्न दृश्यते। अतिद्या पुरुषमित्यादौ दिव्शब्दस्य स्त्रीत्वादाकारे सिद्धेऽपि "वाम्या" ( २।२।२७ ) इत्यनेनाऽऽकारविधान ज्ञापयति वचनमिदम्, तेन पुरुषशब्दस्य विशेषणरूपोऽतिदिव्शब्दो न स्त्रीलिङ्ग इत्याकारेऽप्राप्ते पुनराकारविधानमुक्तेन सूत्रेण क्रियते। अनित्यत्वात् 'अतिसखये' इत्यादौ नेयं परिभाषा प्रवर्तते।

"समानः सवर्णे दीर्घीभवति परश्च लोपम्, अवर्ण इवर्णे ए, उवर्णे ओ" ( १।२।१-३ ) इति सूत्रक्रमः। "उवर्णे ओ" ( १।२।३ ) इत्यत्र प्रथमान्तः कश्चित् कार्यी अनुवर्तनीयस्तर्हि समानोऽवर्णो वेति नियमनायोच्यते—"अनन्तरस्य विधिः प्रतिषेधो वा" ( १८ ) इति। तेन "उवर्णे ओ" ( १।२।३ ) इत्यत्रानन्तरोऽवर्णोऽनुवर्त्यते, न तु समानः। एवं "संयोगान्तस्य लोपः, संयोगादेर्घुटः, लिङ्गान्तनकारस्य, न सम्बुद्धौ" ( २।३।५४-५७ ) इति क्रमेण सूत्रपाठे "न सम्बुद्धौ" ( २।३।५७ ) इत्यत्र लिङ्गान्तनकारोऽनुवर्त्यते न तु सयोगान्त इति। अत्र ज्ञापकम्–"घुटि च" ( २।१।६७ ) इति सूत्रस्य "अर् ङौ" ( २।१।६६ ) इत्यस्मात् पृथक् करणम्। अय भावः—"धातोस्तृशब्दस्याऽऽर्" ( २।१।६८ ) इत्यत्र ङेरनुवृत्तिर्न स्यात् किं च घुटमात्रस्य स्यादित्यर्थं "घुटि च" ( २।१।६७ ) इति सूत्र पृथक् पठितम्। पृथक्करणस्य प्रयोजनान्तराभावे इदं विज्ञाप्यते-अव्यवहितस्य विधिः प्रतिषेधो वा भवतीति। एवम् "औरीम्" ( २।२।६ ) इत्यत्रानन्तरत्वाद् "अन्यादेस्तु तुः" ( २।२।८ ) इत्यतोऽन्यादेरेवानुवृत्तौ सत्या तच्छब्दानामकारान्तत्वाद् गुणविधिना 'अन्ये' इत्यादिसाधनाय ह्रस्व एवेकारादेशोऽल स्यात्, दीर्घेकारादेश

उक्तनियमस्यासार्वत्रिकत्वं विज्ञापयति—**"विशेषातिदिष्टः प्रकृतं न बाधते" ( १६ )** इति। विशेषेणातिदिष्टः कार्यी निमित्तं कार्यं वा सामान्यातिदिष्टं न बाधते इत्यर्थः। तेन **"औरीम्" ( २।१।६ )** इत्यत्र **"नपुंसकात् स्यमोर्लोपो न च तदुक्तम्" ( २।१।४ )** इत्यतो नपुंसकपदमनुवर्तते। अनेन नियमेन **"सुरामि सर्वतः" ( २।१।२६ )** इत्यत्र व्यवहितमपि **"स्मै सर्वनाम्नः" ( २।१।२५ )** इत्यतः सर्वनामपदमनुवर्तते, न केवलमव्यवहितं **"विभाष्येते पूर्वादेः" ( २।१।२८ )** इत्यत. पूर्वादिपदमिति।

**"आद्यन्तवदेकस्मिन्" ( २० )** इत्यत्र क्रमभङ्गः प्रतीयते। आदिः = प्रथमः, अन्तः = अवसानम्, एकस्मिन् वर्णे कार्यिण्याद्यन्ताविव भवतः। यथा—'एता, चेता' इत्यादौ यो हीकारो वर्णस्तस्यैव केवलस्य नाम्यन्तत्वाद् **"नाम्यन्तयोर्धातुविकरणयोर्गुणः" ( ३।५।१ )** इत्यनेन गुणः, 'ऐत्, ऐधत' इत्यादौ **"स्वरादीनां वृद्धिरादेः" ( ३।८।१७ )** इत्यनेनैकारैकारयोः स्वरादित्वाद् वृद्धिर्भवति। अत्र ज्ञापकम्—**"इणश्च" ( ३।४।५६ )** इति सूत्रम्। अनेन यन्तीत्यादौ इकारस्य यकारो विधीयते। इद विज्ञेयम्—एकस्मिन्नेवेकारे वर्णे चेदाद्यन्तवद्भावो न स्यात् तर्हि इण्धातोरपीवर्णान्तत्वाभावात् **"स्वरादाविवर्णोवर्णान्तस्य धातोरियुवौ" ( ३।४।५५ )** इत्यनेनेकारस्येयादेशाभावे सन्धिलक्षणः **"इवर्णो यमसवर्णे न च परो लोप्यः" ( १।२।८ )** इत्यनेनैवेकारस्य यकारः स्यात्, किं सूत्रान्तरेण ? सूत्रान्तरकरणं व्यर्थं सद् विज्ञापयति—'एकस्मिन् वर्णे आद्यन्ताविव भवतः' इति।

कार्यिणो वैशिष्ट्यमुक्त्वा साम्प्रतं निमित्तस्य वैशिष्ट्यकथनायोच्यते—**"सप्तम्या निर्दिष्टे पूर्वस्य" ( २१ )** इति। सप्तम्या निर्दिष्टं यन्निमित्तं ततो यत् किञ्चित् कार्यं स्यात् तत् पूर्वस्यैव कार्यिण इत्यर्थः। तेन दधीदमित्यादौ पूर्वस्यैवेकारस्य दीर्घः स्याद् न तु परस्य। अत्र ज्ञापकम्—**"समानः सवर्णे दीर्घीभवति परश्च लोपम्" ( १।२।१ )** इत्यत्र परश्च लोपमिति वचनम्। अन्यथा परस्य दीर्घे सति लोप. कथं स्यात्। **"ऋदन्तात् सपूर्वः" (२।१।६३)** इत्यत्र सपूर्वग्रहणेन ज्ञाप्यते—**"पञ्चम्या निर्दिष्टे परस्य" ( २२ )** इति। पञ्चम्यन्तं यत् किञ्चित् पदं पठ्यते ततः परस्यैव कार्यं भवतीत्यर्थः। अन्यथा पूर्वस्यापि कार्ये सम्भवे ऋदन्ताल्लिङ्गात् परो ङसिङसोरकारः पूर्वस्वरेण सह उकारमापद्येतेति कथनं नावश्यकं भवेत्। तेन **'स्मै सर्वनाम्नः" ( २।१।५५ )** इत्यनेन सर्वनाम्नो लिङ्गात् परस्यैव ङेप्रत्ययस्य स्मायादेशो भवति। **"लिङ्गान्तनकारस्य" ( २।३।५६ )** इत्यनेन षष्ठ्या निर्दिष्टस्य नकारस्य लोपो भवति आहोस्वित् तत्पूर्वस्य परस्य वेति विचारे 'षष्ठ्या यन्निर्दिश्यते तत्र स्वस्यैव कार्यं भवति' इति निष्कर्षरूपेण ज्ञायते, अन्यथा **"न संयोगान्तावलुप्तवच्च पूर्वविधौ" ( २।३।५८ )** इत्यनेन राजभ्यामित्यादौ लुप्तस्य नकारस्य पूर्वविधौ कर्तव्येऽलुप्तवद्भावः कथं विधीयेतेति। तेन विहितोऽलुप्तवद्भावो ज्ञापयति—**"षष्ठ्या निर्दिष्टे स्वस्य" ( २३ )** कार्यं भवतीति। एवं वृक्षानित्यादौ **"शसि शस्य च नः"**

( २।१।१६ ) इत्यनेन षष्ठ्या यन्निर्दिष्टः शकारस्तस्यैव नकारो जायते। किं च **"अपरो लोप्योऽन्यस्वरे यं वा"** ( १।५।६ ) इत्यत्र प्रथमया निर्दिष्टस्य विसर्जनीयस्यैव यदि लोपो न स्यात्, तर्हि **"न विसर्जनीयलोपे पुनः सन्धिः"** ( १।५।१६ ) इत्यनेन सन्धिनिषेधोऽनर्थकः स्यात्, तेनेद विज्ञायते—प्रथमया यन्निर्दिश्यते तत्रापि स्वस्यैव कार्यं भवतीति ( प्रथमया च २४ )। तेन **"समानः सवर्णे दीर्घीभवति परश्च लोपम्"** ( १।२।१ ) इत्यनेन समानसञ्ज्ञकस्यैवाकारादिवर्णस्य दीर्घः क्रियते।

"पञ्चम्या निर्दिष्टे परस्य" ( २२ ) इति नियमेन **"सावौ सिलोपश्च"** ( २।३।४० ) इत्यत्र **"अदसश्च"** ( २।३।३६ ) इत्यतोऽनुवृत्तेन पञ्चम्यन्तेनादस्शब्देन औकारादेशोऽदस्शब्दात् परस्य सिप्रत्ययस्य भविष्यति, कृते सेरौकारादेशे तल्लोपोऽनर्थकः स्यात्, तेन सिलोपविधान ज्ञापयति—**"अर्थवशाद् विभक्तिविपरिणामः"** ( २५ ) इति। एवं पूर्वं सप्तम्या निर्दिष्टः सिः 'सिलोपः' इत्यत्र षष्ठ्यन्तः सजायते। **"भिसैस् वा"** ( २।१।१८ ) इत्यत्र **"अकारो दीर्घं घोषवति"** ( २।१।१४ ) इत्यतोऽनुवृत्तमकारपद प्रथमान्तमपि पञ्चम्यन्तं भवतीति। अकारान्ताल्लिङ्गात् परो भिस ऐस् वा भवतीति सूत्रार्थः। लोकेऽपि देवदत्तमाह्वयेत्यादिष्ट. कश्चिद् यदि पृच्छति—कीदृशो देवदत्तः ? इति, तर्ह्यादेष्टा कथयति—यो लम्बकर्णो दीर्घबाहुरिति। तेन पूर्व द्वितीयायामपि निर्दिष्टो देवदत्तः पश्चात् प्रथमान्तेन परिणमति।

अनन्तरमुच्यते—**"भाविनि भूतवदुपचारः"** ( २६ ) इति। अय भावः—भविष्यत्यर्थे भूतवद्व्यवहारः कर्तव्य इति। दृश्यते च येपा त्यादिप्रत्ययानाम् **"अथ परस्मैपदानि"** ( ३।१।१ ) इत्यनेन परस्मैपदसञ्ज्ञा क्रियते, ते च त्यादिप्रत्ययास्तत. पश्चान्निर्दिष्टा., कथ तर्हि सञ्ज्ञिना ज्ञानाभावे सञ्ज्ञाया ज्ञान स्यात्। कृतेनानेन क्रमेणोक्त विज्ञायते। **"वृद्धिरादौ सणे"** ( २।६।४६ ) इत्यनेन वृद्धिसञ्ज्ञाभूत्रात् पूर्वस्थेनापि सूत्रेण वृद्धिर्विधीयते। लोकेऽपि 'एषा सूत्राणा शाटक वय' इत्यत्र शाटकसञ्ज्ञानिष्पत्तेः पूर्वमेव शाटकशब्दव्यवहारो दृश्यते।

**"स्थादोरिरद्यतन्यामात्मने"** ( ३।५।२६ ) इति सूत्रे 'स्था' इति रूप पठितम्, धातुपाठे तु 'ष्ठा' इति रूप वर्तते, अत्र **"धात्वादेः षः सः"** ( ३।८।२४ ) इत्यनेन षकारस्य सकारे तदाश्रितष्ठकारो निवृत्त इति दृश्यते, तेनेदमेव ज्ञापकम्—**"निमित्ताभावे नैमित्तिकस्याप्यभावः"** ( २७ ) इति। निमित्तेन कृत नैमित्तिकम्। अत एव आरतुरित्यत्र ऋकारस्य रकारे कृते **"ऋकारे च"** ( ३।३।२० ) इत्यनेन प्राप्तो नकारागमो निवर्तते। लोकेऽपि दृश्यते—व्याधेर्निवृत्तौ तत्कृता व्यथाऽपि निवर्तते, पर पितुरभावेऽपि पुत्रस्य स्थितिर्जायते। एतेन परिभाषेयमनित्या, अत एव 'पाचितः' इत्यादौ कारितप्रत्यये ( कारित = इन् = णिच् ) सत्यनेकस्वरत्वाज्जात इट्प्रत्ययः कारितलोपेऽपि न निवर्तते।

'कर्मणि इत्येव पाठे कर्तव्ये **"भृतौ कर्मशब्दे"** ( ४।३।२४ ) इत्यत्र शब्दग्रहणं ज्ञापयति—व्याकरणशास्त्रस्य सञ्ज्ञया तत्सञ्ज्ञिनो गृह्यन्ते, सञ्ज्ञाभ्योऽन्यत्र च शब्दस्य स्वरूप-

मेवेति, अत एव पठ्यते—"**स्वं रूपं शब्दस्याशब्दसञ्ज्ञा**" ( २८ ) इति। अथ भावः—सूत्रेषूच्चारितस्य तस्य शब्दस्य रूपमेव कार्ये गृह्यते, यदि तेन शब्देन तद्ग्रन्थे काचित् सञ्ज्ञा न स्वीक्रियते। यथा "**दामागायतिपिबतिस्थास्यतिजहातीनामीकारो व्यञ्जनादौ**" ( ३।४।२६ ) इत्यत्र दाशब्देन 'दा-धा' धातू गृह्येते, मादिशब्दैस्तु तत्स्वरूपमेव। एव "**समानः सवर्णे दीर्घीभवति परश्च लोपम्**" ( १।२।१ ) इत्यत्र समानादिशब्दैस्तत्तत्सञ्ज्ञिनो गृह्यन्ते न तु स्वरूपम्।

धातुगणेन सूत्रगणेन च निर्दिष्ट कार्यं नित्य न भवति, तदुच्यते—"**गणकृतमनित्यम्**" ( २६ ) इति। तेन विरमतीत्यादावात्मनेपदम्, "**स्वपिवचियजादीनां यण्परोक्षाशीःषु**" ( ३।४।३ ) इत्यनेन 'सविव्ययतुः, संविव्युः' इत्यादौ च यजादित्वात् सम्प्रसारण न भवति। अत्र "**न व्ययतेः परोक्षायाम्**" ( ३।४।२१ ) इत्यत्र परोक्षाग्रहण ज्ञापकम्, अन्यथा अगुणे यजादित्वात् सम्प्रसारणे कृते आत्वेऽपि सविव्यायेत्यादौ न कश्चिद् दोषः स्यात्। अनित्यत्वाद् यजादिसम्प्रसारणाभावे इष्ट रूप नोपपद्येतेति परोक्षायामात्वस्य निषेधः कृतः।

"**ढे ढलोपो दीर्घश्चोपधायाः**" (३।८।६) इत्यत्रोपधाग्रहणेन ज्ञाप्यते—"**सञ्ज्ञापूर्वको विधिरनित्यः**" ( ३० ) इति। अन्यथा ढलोपे सति दीर्घस्य स्वरधर्मत्वादुपधाया एव दीर्घो भविष्यति आन्तरतम्यान्न तु अवशिष्टढकारस्येत्युपधाग्रहणमनर्थक स्यात्। अत एव सम्राडित्यादावनुस्वारः, 'वृढः' इत्यादौ च दीर्घो नोपपद्यते। सञ्ज्ञापूर्वकस्य विधेरनित्यत्व विज्ञाप्य तत्र किञ्चिद् वैशिष्ट्यमुच्यते—"**सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य**" ( ३१ ) इति। अथ भावः—य दृष्ट्वा यस्योत्पत्तिः स सन्निपातः, स च सन्निपातविधिस्तद्विघातस्य निमित्त न भवतीति। यथा 'अतिरिणा' इत्यत्र ह्रस्वेकारान्तमतिरिशब्दमाश्रित्य "**टा ना**" ( २।१।५१ ) इत्यनेन यो नादेशो जायते स "**रै**" ( २।३।१६ ) इत्यनेनाऽऽत्वस्य निमित्त न भवति। अत्र ज्ञापकम्—"**नामिव्यञ्जनान्तादायेरादेः**" ( २।६।४२ ) इत्यत्र नामिग्रहणम्। अन्यथा 'अग्नीयते' इत्यादिष्वग्निशब्दादायिप्रत्यये इकारस्य यकारे कृते व्यञ्जनान्तेनैव लक्षणेनाऽऽकारलोपे निष्पन्ने नामिग्रहणमनर्थकमेव स्यात्। जहीत्यादौ हौ परतो हन्धातोर्जकारादेशे कृते सन्निपातलक्षणस्य विधेरनिमित्तत्वाद् हेर्लोपेऽप्राप्ते "**हेरकारादहन्तेः**" (३।४।३३) इत्यत्र हन्धातोर्यन्निषेधः कृतस्तेन विज्ञायते—"**वर्णग्रहणे निमित्तत्वात्**" ( ३२ ) इति। वर्णग्रहणे सति सन्निपातो विधिर्विघातस्य निमित्तम्=कारण भवतीत्यर्थः। अत एव दाक्षिरित्यादिषु "**इवर्णावर्णयोर्लोपः स्वरे प्रत्यये ये च**" ( २।६।४४ ) इत्यनेनाकारस्य लोपो जायते।

'पृष्ठ+वाह्+शस्' इत्यवस्थायाम् "**अघुट्स्वरादौ सेट्कस्यापि वन्सेर्वशब्दस्योत्वम्**" ( २।२।४६ ) इत्यत उत्वाधिकारे वाशब्दस्योत्वे, गुणेनौकारे, ओकारे परतष्ठकाराकारस्य "**ओकारे औ औकारे च**" ( १।२।७ ) इत्यनेनौकारे, ओकारस्य लोपे च कृते

'पृष्ठौहः' इतिरूपस्य निष्पत्तौ सत्या "**वाहेर्वाशब्दस्यौ**" ( २।२।४८ ) इत्यनेन यद् वाशब्दस्यौकारादेशः क्रियते तेन विज्ञायते—"**असिद्धं बहिरङ्गमन्तरङ्गे**" ( ३३ ) इति। अथ भाव.—उकारादिरीत्या 'पृष्ठौहः' इत्यस्य साधने बहूनि कार्याण्यपेक्ष्यन्ते इति बह्वाश्रितत्वात् तद् बहिरङ्गम्, तदपेक्षयौकारामात्रविधानमल्पाश्रितत्वादन्तरङ्गम्। अत्रान्तरङ्गे औकारकार्ये कर्तव्ये बहिरङ्गमुकारादिविधानमसिद्ध भवतीति। एवं 'ग्रामणिकुलम्, वृत्रहभ्याम्' इत्यत्रान्तरङ्गस्तकारागमो धातुरूपप्रकृत्याश्रितत्वात्, ह्रस्वनलोपौ च बहिरङ्गौ लिङ्गाश्रयत्वात्। एतेन ह्रस्वाश्रिते तकारागमे विधीयमाने ह्रस्वनलोपावसिद्धौ भवतः।

लोपागमविकारादेशाद्यनेकविधीना सामान्यतो बलाबलनिर्णयायोच्यते—"**सर्वविधिभ्यो लोपविधिर्बलवान्**" ( ३४ ) इति। तेन 'अबुद्ध, अबुद्धा.' इत्यादौ "**हचतुर्थान्तस्य धातोस्तृतीयादेरादिचतुर्थत्वमकृतवत्**" (२।३।५०) इत्यनेन बकारस्य भकारे, "**धुटश्च धुटि**" ( ३।६।५१ ) इत्यनेन च सिचो लोपे प्राप्ते लोपस्य बलीयस्त्वात् सिचो लोपः प्रवर्तते। अत्र "**विरामव्यञ्जनादिष्वनडुन्नहिवन्सीनां च**" (२।३।४४) इत्यत्र विरामग्रहणं ज्ञापकम्। इदमवगन्तव्यम्—उपानदित्यादौ सिप्रत्ययस्यापि व्यञ्जनादित्वाद् व्यञ्जनादिग्रहणेनैव दकारे सम्पन्ने व्यर्थं सद् विरामग्रहण ज्ञापयति—विध्यन्तरापेक्षया लोपविधिर्बलवान् भवतीति। तेन पूर्वं लोपे व्यञ्जनादित्वाभावाद् दकाराप्राप्तौ विरामग्रहण क्रियते, परम 'अदस्+सि' इत्यत्र "**व्यञ्जनाच्च**" ( २।१।४६ ) इत्यनेन सिलोपे, सरकारस्यौत्वे कृते असाविति रूपं निष्पन्न स्यात्, तर्हि "**सावौ सिलोपश्च**" ( २।३।४० ) इत्यत्रानर्थक सत् सिलोपवचन ज्ञापयति—"**लोपस्वरादेशयोः स्वरादेशो विधिर्बलवान्**" ( ३५ ) इत्यनेन दकारस्य सकारो न भविष्यतीति वक्तु न शक्यते, वचनबलात् प्रागेव दकारस्य सकारादेशसत्त्वात्। एतत्परिभाषाबलाद् द्यौरित्यत्र "**औ सौ**" ( २।२।२६ ) इत्यौकारे "**व्यञ्जनाच्च**" ( २।१।४६ ) इत्यनेन सिलोपो न भवति। करिष्यति, हरिष्यतीत्यादौ ऋकारस्य गुणे कृते ऋदन्तत्वाद् "**ऋतोऽवृङ्वृञः**" (३।७।१६) इत्यनेनेट्प्रतिषेधस्याप्राप्तौ "**हनृदन्तात् स्ये**" ( ३।७।७ ) इत्यनेन यद् इड्विधान कृतम्, तज्ज्ञापयति—"**सकृद्बाधितो विधिर्बाधित एव**" ( ३६ ) इति। एकवार यो विधिर्बाध्यते स पुनर्न भवतीत्यर्थः। तेन ऋदन्तावस्थाया जात इट्प्रतिषेधो गुणे कृते ऋदन्तत्वाभावेऽपि स्यादेवेति तत्रेड्विधानाय "**हनृदन्तात्**" ( ३।७।७ ) इति सूत्रे ऋदन्तग्रहणं क्रियते। एव 'चेता नेता' इत्यादौ गुणात् पूर्वमिवर्णान्तत्वात् "**इवर्णादश्विश्रिडीङ्शीङः**" ( ३।७।१४ ) इत्यनेन प्राप्त इट्प्रतिषेधो गुणे कृते इवर्णान्तत्वाभावेऽपि प्रवर्तते।

यद्यप्यपवादविधिस्थले उत्सर्गविधिर्न प्रवर्तते, पर लक्षणानुरोधात् क्वचिदुत्सर्गस्यापि समावेशो भवति, यथा 'विकत्थी' इत्यत्र "**वौ विचकत्थस्रन्भुकष ( लस् ) लषाम्**" ( ४।४।२४ ) इत्यनेनापवादभूते घिणिन्प्रत्यये एव प्राप्ते सामान्यो युरपि प्रवर्तते, तेन 'विकत्थन.' इति रूपम्। अत्र ज्ञापकम् "**न नामि दीर्घम्**" ( २।३।१७ ) इति वचनम्।

अन्यथा 'तिसृ आम्' इत्यवस्थाया "तौ रं स्वरे" ( २।३।२६ ) इत्यनेन ऋकारस्य रकारादेशे कृते "आमि च नुः" ( २।१।७२ ) इत्यनेनौत्सर्गिकस्य न्वागमस्याभावे सति "दीर्घमामि सनौ" ( २।२।१५ ) इत्यनेन दीर्घस्य प्राप्तिरेव नास्तीति प्रतिषेधविधानमनर्थकम्, तदेव विज्ञापयति—"अपवादविषये क्वचिदुत्सर्गस्यापि समावेशः" ( ३७ ) इति।

'उच्चै रौति' इत्यत्र "रो रे लोपं स्वरश्च पूर्वो दीर्घः" ( १।५।१७ ) इत्यनेन केवलं रलोपः, 'गोचः' इत्यत्र "अञ्चेरलोपः पूर्वस्य च दीर्घः" ( २।२।४६ ) इत्यनेनाञ्चेरलोपे एव प्रवर्तते न तु दीर्घः। यद्यपि सन्नियोगशिष्टानामेकतराभावेऽन्यतरस्याप्यप्रवृत्तिरिति न्यायेन लोपरूपस्यापि कार्यस्यात्र प्रवृत्तिर्भवितु नार्हति, सहैव निर्दिष्टस्य दीर्घरूपकार्यस्याप्राप्तेः। परं प्रधानतया निर्दिष्टो विधिर्नित्यमेव प्रवर्तते, अन्वाचयेन ( अप्रधानतया ) निर्दिष्टस्तु यथासम्भव एवेति दीर्घाभावेऽप्यत्र लोपो जायते। नियमस्वरूपमुच्यते—"प्रधानान्वाचयशिष्टयोः प्रधानशिष्टस्तु नित्यः" ( ३८ ) इति। अत्र ज्ञापकम्—"समानः सवर्णे दीर्घीभवति परश्च लोपम्' ( १।२।१ ) इति सूत्रे सवर्णग्रहणम्। अय भावः—अवर्णस्येवर्णादिष्वसवर्णेष्वेत्वादिकार्यम्, इवर्णादेश्चासवर्णेषु यत्वादिकार्यम्, व्यञ्जनेषु च तत्प्रतिषेधो विधीयते, तेनात्र पारिशेष्यादकारादेः सवर्णेष्वेव दीर्घः प्रवर्त्स्यते इति सवर्णग्रहण व्यर्थमेव। निमित्तस्य तु दीर्घो भवितु नार्हति परलोपवचनात्, निमित्ताभावे परस्य लोपो न विधीयेत। एवमत्र सवर्णग्रहणस्य निमित्ताभावे दीर्घस्य प्रतिषेध इति प्रयोजनमापतितम्, तेनान्यत्र—यत्र विधिद्वय निर्दिश्यते तत्रोक्तो नियमः प्रवर्तते। लोकेऽपि दृश्यते—'भो वटो ! भिक्षामट गा चानय' इति वचने भिक्षाटन प्रधानं तन्नियोगतः करणीय वर्तते, अप्रधानतया निर्दिष्ट गवानयनं तु यथासम्भवमेवेति।

ॠदन्ताना 'कॄ' इत्यादिधातूना "स्वरान्तानां सनि" ( ३।८।१२ ) इत्यनेन ऋकारस्य दीर्घे कृते "ॠदन्तस्येरगुणे" ( ३।५।४२ ) इत्यनेन चिकीर्षतीत्यादाविरादेशो जायते, परं 'कॄत' धातुर्न ॠदन्तः किं च तत्र मध्यस्थ ॠकारः, कथ तर्हि "कीर्तीषोः क्तिश्च" ( ४।५।८६ ) इत्यत्र कीर्तिपदे इरादेशो दृश्यते ? अत्रेदं विज्ञेयम्—'अमी' इत्यादौ "एद् बहुत्वे त्वी" ( २।३।४२ ) इत्यनेनादस्शब्दस्य मात् परो यो बहुत्वे निष्पन्न एकार ईकारो भवति, तत्र यदि "अदसः पदे मः" ( २।२।४५ ) इत्यनेन सकारस्याकारे कृते यो ह्यन्तेऽकारो वर्तते तस्यैव यदि मकार स्यात् तर्हि तदग्रे एकारस्य सम्भवो नास्ति, कथमेकारस्येकारविधान करणीयमिति ? कृतेनानेन निर्देशेनेद विज्ञायते—"अन्त्याभावेऽन्त्यसदेशस्यापि ग्रहणं भवति" ( ३९ ) इति। तेनान्त्यसमीपस्यात्र दकारस्य मकारे कृते एकारः सम्भवति, तस्य चेकारादेशे कृते 'अमी' इति रूप निष्पद्यते, एवं कीर्तयतीत्यादावपि तथैव विज्ञेयम्।

"इरन्यगुणे" ( ३।४।७३ ) इत्यनेन ॠदन्तस्यानि विकरणे गुणेऽन्ते इकारागमः क्रियते, तेन 'आद्रियते, आध्रियते' इत्यादाविकारागमो भवति, 'किरति, गिरति, स्मरति'

इत्यादौ तु न। अत्र विचार्यते—गुणिनि अन्विकरणे परत. स्मरतीत्यादावन्तरङ्गत्वाद् गुणे ॠदन्तत्वाभावादेवेकारागमो न स्यादिति किमर्थं सूत्रेऽगुणग्रहण क्रियते ? "**आगमादेशयोरागमो विधिर्बलवान्**" ( ४० ) इतिन्यायेन गुणिन्यप्यन्विकरणे परतो गुण प्रबाध्येकारागमो भविष्यतीत्यत्रागुणग्रहणं कृतमित्यवगन्तव्यम्, तेन सामर्थ्यादगुणे एव परत इकारागमो भवति न तु गुणिनि परत.। एतेन अमिष्यतीत्यादावन्स्वारम्. ग्रहीतेत्यादौ ढत्वम्, ईशिषे इत्यादौ च षत्व ( अन्तरङ्गमपि ) प्रबाध्येडागमो भवति। पर जिघत्सतीत्यादावादेशात् पूर्वम् '**अदितुदिणुदिक्षुदिस्विद्यतिविद्यतिविन्दतिविनत्तिछिदिभिदिहृदिशदिसदिपदिस्कन्दिखिदेदोत**' ( ३।७।२१ ) इत्यनेनैवेट्प्रतिषेधे घस्लादेशे कृतेऽपि "**सकृद् बाधितो विधिर्बाधित एव**" इति न्यायादिडागमो न स्यात् किमर्थं तर्हि "**वसतिघसेः**" ( ३।७।२६ ) इति सूत्रान्तरेण पुनरिट्प्रतिषेधः क्रियते ? प्रतिषेधेन विज्ञाप्यते—"**आगमात् सर्वादेशो विधिर्बलवान् भवति**" (४१) इति। तेन चेट प्रबाध्य घस्लादेश. स्यात्, कृते आदेशे प्राप्तस्येडागमस्य निवारणाय सूत्रान्तरमुच्यते। उवयिथेत्यत्र च सर्वादेशे कृतेऽपि इट् प्रवर्तते। इश्यते हि—शास्त्रे क्वचित् सूत्रेषु धातुषु च यः शब्द उपदिष्टस्ततः किञ्चित् कार्यं भवति, क्वचित् सूत्रैर्निर्दिष्टविधिना सयुक्तात् कस्माच्चिच्छब्दात् किञ्चित् कार्यं भवति। यथा 'नद्याम्, वध्वाम्' इत्यादौ यद्यप्याम् वर्तते, तथापि तस्य सूत्रे उपदेशाभावाद् नुरागमो न जायते, स्त्रीणामित्यादौ षष्ठीबहुवचनस्यौपदेशिकस्यैवाऽऽमः सत्त्वात् तज्जायते। पर सञ्चस्करुरित्यादौ सयोगादेर्धातोरभावाद् "**ॠतश्च संयोगादेः**" ( ३।६।१५ ) इत्यनेन गुणो न प्राप्नोति, तत्र "**सुड् भूषणे सम्पर्युपात्**" ( ३।७।३८ ) इत्यनेन सुडागमे विहिते सति सयोगादित्व सम्पद्यत, तदेवादाय गुणो विधीयते। अत्रेद विचार्यते—"**ॠतश्च सयोगादे.**" ( ३।६।१५ ) इत्यत्र आदिपदमन्तराऽपि सस्मरतुरित्यादौ सयोगात् परस्य ॠकारस्य गुण स्यात्, कथ तर्हि आदिपदमुपादीयते ? उपात्तेनाऽऽदिपदेनेदमेव ज्ञायते, यदत्र सूत्रेण निर्दिष्टविधिना सम्पन्नो य सयोगादिर्धातुः 'स्कृ' इति, ततोऽपि गुणः स्यात्, तेनान्यत्र सूत्रोपदिष्टाद् धातूपदिष्टाच्चैव कार्यं प्रवर्तते, तदर्थं पठ्यते—"**औपदेशिकप्रायोगिकयोरौपदेशिकस्यापि ग्रहणम्**" (४२) इति। अत एव "**हनिङ्गमोरुपधायाः**" ( ३।८।१३ ) इत्यत्रौपदेशिकस्य गम्लृ गतावित्यस्य ग्रहण मा भूदितीङ्ग्रहण क्रियते। औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहण भवतीति दार्ढ्याय "**दीर्घस्योपपदस्यानव्ययस्य खानुबन्धे**" ( ४।१।२० ) इत्यत्र दीर्घग्रहण क्रियते। अयं भावः—"**परो दीर्घः**" (१।१।६) इत्यनेनात्र 'आ ई ऊ ॠ ॡ' इत्येतेषामेव वर्णाना दीर्घसञ्ज्ञोक्ता, तर्हि ह्रस्वकार्ये कर्तव्ये तात्पर्यवशाद् दीर्घवर्णानामेव ह्रस्वविधिर्भविष्यति किमर्थं सूत्रे दीर्घग्रहणम् ? अत्रोच्यते—दीर्घग्रहणमिद सन्ध्यक्षराणा ह्रस्वे कर्तव्ये के वर्णा. स्युरिति विचारे "**वृद्धिरादौ सणे**" ( २।६।४६ ) इत्यनेनेवणोवर्णयोरेव 'ऐ-औ' इति वर्णौ विधीयेते नावर्णस्येति, तेन तेषा ह्रस्वकरणे इकारोकारावेव स्याताम्, न त्वकारः, सन्ध्यक्षराणा नामित्वाद् अकारस्य च नामित्वाभावात्। एतदर्थमुच्यते—"**सन्ध्यक्षराणामिदुतौ**

ह्रस्वादेशे" ( ४३ ) इति । एतद्वचनाभावे सन्ध्यक्षरशब्दस्यान्वर्थत्वात् पूर्वभागे योऽवर्णः स एव ह्रस्वविधावुपतिष्ठेत ।

आदेशविधेर्वैशिष्ट्यप्रसङ्गे उच्यते—"**परनिमित्तादेशः पूर्वस्मिन् स एव**" (४४) इति । अयं भावः—पर निमित्तमुद्दिश्य य आदेशो जायते स परस्य लोपे परस्थनिमित्तरूप एव भवति । यथा 'अग्नी एतौ' इत्यादावौकारमुद्दिश्य यो हि दीर्घः कृत स औकारस्य लोपे द्विर्वचनरूप एव, तेन द्विवचनान्तमीकारमभिलक्ष्य प्रकृतिभावो विधीयते । अन्यथा 'पयसी अत्र' इत्यादौ यत्र द्विवचन वर्तते तत्रैव प्रकृतिभावः स्यात् । अत्र "**यन्योकारस्य**" ( ३।६।३६ ) इत्यत्र नकारग्रहण ज्ञापकम्, अन्यथा उपपूर्वाद् वेञ्धातोर्यणि प्रत्यये यजादित्वात् सम्प्रसारणे "**उवर्णे ओ**" (१।२।३ ) इत्यनेनोवर्णे परतोऽकारस्य ओकारादेशे, उकारलोपे च कृते 'उपोयते' इत्यत्र धातोरोकारस्याऽभावादेव लोपो न भविष्यतीत्येव व्यर्थं सद् नकारग्रहण ज्ञापयति–"**परनिमित्तादेशः पूर्वस्मिन् स एव**" (४४) इति । तेन 'उपोयते' इत्यत्र उकार निमित्तमादाय य ओकारादेशः स धातोरेव मन्यते, तेन तस्य लोपो न स्यादिति नकारग्रहणेन वार्यते । एतदनूच्यते—"**निरनुबन्धग्रहणे सामान्यग्रहणम्**" ( ४५ ) इति । "**ये वा**" (४।१।७२) इत्यत्र निरनुबन्धस्य यकारस्योपादानेन यबादेशयण्-चेक्रीयितप्रत्ययेषु वर्तमानो यकारो गृह्यते । एतेन 'प्रखाय, खायते, चाखायते' इत्यादौ विकल्पेन पञ्चमवर्णस्याऽऽकारादेशो विधीयते । अत्र ज्ञापकम्—"**ऋवर्णव्यञ्जनान्ताद् घ्यण्**" (४।२।३५) इत्यत्र घानुबन्धस्योपादानम्, तेन वाक्यमित्यादौ कत्वादिरूपविशेषकार्यं घानुबन्धबलादेव भवति । एकवार यो ह्यर्थः केनचित् प्रत्ययेनोच्यते स चैकत्रैव प्रत्ययान्तरेण नोच्यते, उक्तार्थानामप्रयोगात् । यथा 'माता स्मर्यते' इत्यत्राऽऽत्मनेपदेन कर्मणोऽभिहितत्वात् कर्मणि द्वितीया न भवति । एव समासे नीलोत्पलादिषु तदादिशब्दानामप्रयोगो दृश्यते । उक्तवचने ज्ञापकम्—"**अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्**" ( ४।६।९ ) इति सूत्रेण थाप्रत्ययेनैव प्रकारार्थे उक्ते तदर्थस्यैव कथनायान्यथादिषूपपदेषु कृधातोः खमिञ्प्रत्ययस्य विधानम्, अन्यथा यो ह्यन्यथाशब्दस्यार्थ. स एवान्यथाकारशब्दस्येति सूत्रान्तरेणोक्तार्थस्यैव कथनाय खमिञ्प्रत्ययस्य विधानमनर्थक स्यात् ( उक्तार्थानामप्रयोगः ४६ ) ।

लक्षण ( सूत्रम् ) तदैव प्रवर्तते यदा तेन किञ्चित् प्रयोजन भवति, अन्यथा प्राप्तमपि तद् बाध्यते । यथा अग्निः, पटुरित्यादौ "**नामिपरो रम्**" ( १।५।१२ ) इत्यस्य प्राप्तिरस्ति, पर प्रयोजनाभावात् तन्न प्रवर्तते । विसर्जनीयस्य रकारे कृते तस्य विसर्जनीय एव पुनः करणीय इति प्रयोजनाभावो विज्ञेयः । सुपीः, सुतूरित्यादौ च रत्वं प्रवर्तते, तत्र ईरूरादेशविधानरूपप्रयोजनस्य सत्त्वात्, अन्यथा रकाराभावे "**इरुरोरीरूरौ**" (३।३।५२) इत्यनेनेरूरावादेशौ न स्याताम्, एतेनेदं वचनमवगम्यते—"**यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमस्ति नासौ बाध्यते**" ( ४७, ४८ ) इति ।

अत्र ज्ञापकम्—"इदुदग्निः" (२।१।८) इति सूत्रम्। एतेन सूत्रेणेकारोकारयोरेवाग्नि-सञ्ज्ञा क्रियते, न तु तदन्ताना शब्दानाम्। अन्यथा अग्नीत्यादौ "औकारः पूर्वम्" (२।१।५१) इत्यनेनौकारस्य पूर्वरूप विधीयमान सकलस्यैवाग्न्यादिशब्दस्य स्याद् न त्विकारादिस्वरमात्रम्य। लोकेऽपि यदा कश्चिद् भुक्तवन्तं पुरुष पुनर्भोजनायाऽऽह्वयति तदा पुनर्भोजन भुक्तेन पुरुषेण निषिध्यते, यदि विशेषभोजनाय स आहूयते तदा भुक्तेनापि तेन पुनर्भोजनमङ्गीक्रियते। यत्र सूत्रेषु नञा इवेन च कश्चिद् विधिर्निर्दिश्यते तत्र नञिवयुक्त शब्दरूपमन्यसदृशमन्यार्थकं च गृह्यते। यथा "समासे भाविन्यनञः क्त्वो यप्" (४।६।५५) इत्यत्र नञोऽव्ययत्वात् तद्भिन्न कश्चिदव्ययशब्द एव गृह्यते नान्यः, तर्हि "धुड् व्यञ्जनमनन्तस्थानुनासिकम्" (२।१।१३) इत्यत्राप्यन्तस्थाना व्यञ्जनत्वात् तद्भिन्नानि व्यञ्जनान्येवाक्षराणि ग्रहीष्यन्ते व्यञ्जनग्रहणमनर्थकमिति। अनर्थकं सत् तज्ज्ञापयति—अन्यत्र नञिवयुक्तं शब्दरूपमन्यसदृशाधिकरणे यदा भवति तदैवार्थोऽवगम्यते इति। अधिक्रियते नियुज्यतेऽभिधानाय शब्दो यस्मिन्नित्यधिकरणमर्थ, सदृशं च तदधिकरण च सदृशाधिकरणम्, अन्यच्च तत्सदृशाधिकरण चान्यसदृशाधिकरणम्। लोकेऽपि यदा 'ब्राह्मणेन न गन्तव्यम्' इत्युच्यते तदा तादृशाधिकरणस्यान्यस्य क्षत्रियादेरेव परिज्ञानं जायते न तु गवादेरिति। उक्त च—

नञ्युक्तमिवयुक्तं च यद्धि कार्यं प्रतीयते।
तुल्याधिकरणेऽन्यत्र लोकेऽप्यर्थगतिस्तथा॥ इति।

"भाविनि भूतवदुपचारः" (२६) इति पूर्ववचनेन भाविन्यर्थे भूतवद् व्यवहारः प्रदर्शित· परस्मैपदादिसञ्ज्ञासु। साम्प्रत वर्तमाने भूतवद् यवहारदर्शनायोच्यते—"भूतपूर्वस्तदुपचारः" (५०) इति। अत्र ज्ञापकम्—"ङवन्ति यैयास्यास्याम्" (२।१।४२) इति सूत्रे ङकाराद् वन्तुप्रत्ययस्य निर्देश·, अन्यथोच्चारणानन्तरमेव ङकारानुबन्धस्य प्रध्वसे वर्तमाने वन्तुप्रत्ययो विधातु न शक्यते। विहितेन तेनेदमेव ज्ञाप्यते—वर्तमानेऽपि भूतवद् व्यवहारः प्रवर्तते इति। तेन वृक्षाः, वृक्षानित्यादौ लुप्तानुबन्धानामपि जसादीना दार्घादिक भवति।

अत्र व्याकरणे लोपस्य परिभाषा न कृता, तेन "लोपोऽभ्यस्तादन्तिनः" (३।५।३८) इत्यादौ लोपेन किं जायते इति विचार उदेति। अत्रेद विज्ञेयम्—"न विसर्जनीयलोपे पुनः सन्धिः" (१।५।१६) इत्यनेन विसर्जनीयलोपे सन्धिर्निषिध्यते, यदि विसर्गस्य यो लोपो जातस्तस्य दर्शन स्यात् तर्हि संहिताप्राप्तेरवसर एव नास्ति, कुतस्तदप्राप्तौ निषेधो युज्येत? 'क इह, क उपरि' इत्यादौ "अपरो लोप्योऽन्यस्वरे यं वा" (१।५।९) इत्यनेन विसर्गलोपस्यादर्शने तु गुणसन्धिः प्राप्यते, तस्य वारणाय निषेध उचितः प्रतिभाति। एवं कृतेनानेन निषेधेन विज्ञाप्यते—अदर्शनस्य लोपसंज्ञा भवतीति। अत एवा-त्रोच्यते—"अदर्शनं लोपः" (५१) इति। पठन्ति च आपिशलिमतानुयायिन· पाणिनीयाः—

आगमोऽनुपघातेन विकारश्चोपमर्दनात् ।
आदेशस्तु प्रसङ्गेन लोपः सर्वापकर्षणात् ॥ इति ।

प्रत्ययस्य लोपविधौ विशेष प्रदर्शयन्नाहाचार्य --"**प्रत्ययलोपे प्रत्ययलक्षणम्**" (**५२**) इति। अय भाव --प्रत्यये सति यल्लक्षण प्रवर्तते तत् प्रत्ययस्य लोपेऽपि जायते, यथा अभित्त, अच्छित्तेत्यादौ "**धुटश्च धुटि**" (३।६।५१) इत्यनेन सिचो लोपेऽपि "**सिजाशिषोश्चात्मने**" (३।५।१०) इत्यनेन गुणनिषेधः प्रवर्तते। अत्र ज्ञापकम्-- "**लुग्लोपे न प्रत्ययकृतम्**" (**३।८।२६**) इति सूत्रवचनम्। अन्यथा लुकीत्येव निर्दिष्टे 'अभित्त इत्यादौ सिचो लोपमप्यदर्शनमात्रमादाय प्रकृते गुणनिषेधो न स्यात्। प्रत्ययलोपे वैशिष्ट्यावगमादनन्तर प्रत्ययस्याऽऽदिरन्त्यो वा भागो लुप्यते इति विचारे समुपस्थिते "**अमृशसोरादिर्लोपम्**" (**२ १।४७**) इत्यत्राऽऽदिलोपस्य निर्देशेन विज्ञायते—प्रत्ययस्य लोपो नाशतो भवति किं च साकल्येन, अन्यथा 'राम + अम्' इत्यादावव्यवहितत्वादकारस्यैव लोप स्यात् किमादिशब्दस्य निर्देशेनेति। एतदर्थमेव पठ्यते—"**सर्वापहारी लोपः प्रत्ययस्य**" (**५३**) इति। एव दधि, मधु, अकारीत्यादौ 'सि-त' इति प्रत्यययो. साकल्येन लोप. प्रवर्तते।

क्वचिद् दृश्यते—एकस्मिन् प्रयोगे एकेनैव सूत्रेणानेकवार निर्दिष्ट कार्यं जायते, यथा 'अदस्' इत्यत्र सकारस्याकारे कृते दकारस्थोऽकारो लुप्यते, ततोऽम्प्रत्यये पुनरकारस्य लोपे अमुमिति निष्पद्यते। एतेन ज्ञायते—"**यावत्सम्भवस्तावद्विधिः**" (**५४**) इति। अत्र भवतीति शेषः। यस्य कार्यस्य यावान् सम्भवस्तावत् तत् कार्यं प्रवर्तते इत्यर्थः। अत्र ज्ञापकम्—"**न सम्प्रसारणे**" (३।४।१७) इत्यनेन पुनः सम्प्रसारणस्य निषेध, अन्यथा एकवार सम्प्रसारणे जाते पुनरप्राप्तौ निषेधो न करणीय स्यात्।

केचिद् विधयोऽनुबन्धानेव निमित्तीकृत्य प्रवर्तन्ते, तद्विषये उच्यते—"**उच्चरितप्रध्वंसिनो ह्यनुबन्धाः**" (**५५**) इति। अय भाव.—उच्चारणानन्तरमनुबन्धाना प्रध्वस इष्यते, तेन 'वारिणा, वारिणे' इत्यादौ 'ट्-ङ्' इत्यनुबन्धयोरुच्चारणानन्तर प्रध्वसे सति "**नामिनः स्वरे**" (२।२।१२), इत्यनेन स्वरे परतो नुरागमो भवति। अत्र ज्ञापकम्— "**जसि**" (**२।१।१५**) इति सूत्रम्। अन्यथा जकारस्य स्थितौ सत्या 'वृक्षाः' इत्यादौ "**अकारो दीर्घं घोषवति**" (**२।१।१४**) इत्यनेनैव दीर्घ स्यात्। कृतेन जसीतिवचनेनेदमेव ज्ञाप्यते—अनुबन्धा उच्चरितप्रध्वसिनो भवन्तीति।

लोकप्रयोगाश्रिते व्याकरणे केचिन्नियमा. (न्यायवचनानि) लोके दृष्टं क्रममनुसरन्ति। यथा घटनिष्पत्तौ पूर्वं मृत्पिण्डस्य तत. सलिलदण्डादेरपेक्षा लोके वर्तते। किञ्चिदपि कार्यं कार्यिनिमित्तपुरस्सरमेव निष्पद्यते इत्यर्थ.। व्याकरणसूत्रेष्वपि क्रमोऽय समाद्रियते। कश्चिदपि विश. क्रम विहाय न प्रवर्तते क्रियासु। "**समानः सवर्णे दीर्घीभवति परश्च लोपम्, ओदन्ता अइउआ निपाताः स्वरे प्रकृत्या**" (१।२।१, ३।१) इत्यादौ पूर्वं कार्यी

समानादिः, तदनु निमित्त सवर्णादि, ततः कार्यं दीर्घादि वर्तते। एते सूत्रनिर्देशा एव ज्ञापयन्ति—पूर्वं कार्यि तदनु निमित्त ततः कार्यं विधीयते इति । अत एव पठ्यते—"**कार्यी निमित्त कार्यमित्येष निर्देशक्रमः**" ( ५६ ) इति । यदि क्वचिदस्य क्रमस्य वैपरीत्यमालम्ब्यते तत्रावश्य कश्चिद् विशेषो भवतीति विज्ञेयम् । अयं भाव.—कश्चिद् विशेषमेव प्रदर्शयितु क्रमभेद. समाद्रियते आचार्यैरिति । साधूच्यते महाभाष्यकारैः—"**इहेङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रप्रबन्धेनाऽऽचार्याणामभिप्रायो गम्यते**" ( म० भा० ६।१।३७ ) इति । यथा कातन्त्रे 'टा' प्रत्ययस्येनादेशविधानाय 'टेन' इति सूत्रे कर्तव्ये "**इन टा**" ( २।१।२३ ) इति क्रम उपन्यस्तस्तेन 'अतिजरसिना' इत्यत्र '**जरा जरस् स्वरे वा**" ( २।३।२४ ) इति प्रबाध्य पूर्वमिनादेशः प्रवर्तते । जरसादेशे कृते तु अकारान्तलिङ्गाभावादिनादेशो न स्यात् । एतदर्थमत्र पठ्यते—"**तद्भेदे विधेर्भेदः**" (५७) इति ।

दृश्यते हि "**अर्वन्नर्वन्तिरसावनञ्**" ( २।३।२२ ) इत्यनेन निर्दिष्ट· सविभक्तिरिकारेण युक्त आदेश 'अर्वन्तौ अर्वन्त.' इत्यादाविकाररहितः प्रवर्तते, नदर्थमुच्यते च—"**इकारोक्तः मविभक्तिरादेशोऽस्वरः**" ( ५८ ) इति। अत्र ज्ञापकमुक्तम्—'मर्ज मार्जने' इति गणकारवचनम् । धातुपाठे नेद वचनमुपलभ्यते । तथा च "**मर्जो मार्जिः**" (३।८।२३) इत्यनेन यदिकारसहित आदेशः स्यात् तर्ह्यात्मनेपद प्रवर्तेत न परस्मैपदमित्यादि कथनं न सम्यगवबुध्यते ।

दृश्यते हि सूत्रान्तरेण यत् कार्यं साधित तस्य निर्देशोऽन्येनापि सूत्रेण क्रियते इति । यथा "**पञ्चादौ घुट्**" ( २।१।३ ) इत्यनेनैव जसुप्रत्ययस्य घुट्सञ्ज्ञाया प्राप्तायामपि "**जश्शसौ नपुंसके**" ( २।१।४ ) इत्यत्र पुनस्तस्य पाठ· कृतः । तेनेद ज्ञाप्यते—"**सिद्धे सत्यारम्भो नियमाय**" ( ५६ ) भवतीति । नियमश्च सूत्रान्तरेण प्राप्तस्य कार्यस्य मध्ये इष्ट गृहीत्वाऽन्यत् सर्वं व्यावर्तयतीत्यर्थः । तेन जसुप्रत्ययस्यैव नपुसके घुटसञ्ज्ञाया वारीणीत्यादौ "**घुटि चासम्बुद्धौ**" ( २।२।१७ ) इत्यनेन दीर्घो भवति, वारिणीत्यादौ तु द्विवचनस्य प्राप्ताऽपि घुट्सञ्ज्ञा निवर्तते, तेन न दीर्घः ।

"**अवमसंयोगादनोऽलोपोऽलुप्तवच्च पूर्वविधौ**" ( २।२।५३ ) इत्यत्रालुप्तवचनेनैव लोपे विज्ञाते यल्लोपवचनमुपादीयते तेनेद ज्ञाप्यते—"**ज्ञापकज्ञापिता विधयो ह्यनित्याः**" ( ६० ) भवन्तीति । तेन तुदादिगणपठितयोः 'कॄ-गॄ' इति धात्वोरिडागमस्य निषेधे प्राप्ते "**स्मिङ्पूङ्रञ्ज्वशूकॄगॄदृधृप्रच्छा सनि**" ( ३।७।११ ) इत्यनेन तयोरिड्विधान क्रियते इत्यनित्यत्वेनैवान्येषामॄकारान्ताना धातूना सनीट्प्रत्ययो न भवतीति ज्ञायते । एव कॄञ् हिंसायामिति क्रयादिधातोरिडागमोऽप्राप्तोऽनित्यत्वाद् विकल्पेन प्रवर्तते इति चिकरिषति, चिकीर्षतीति रूपद्वयमुपपद्यते ।

श्रुतेन शब्देन कस्यचिदर्थस्य निर्णय तदैव कर्तुं शक्नोति श्रोता=बोद्धा, यदा वक्तुः=प्रयोक्तुरिष्टार्थस्य ज्ञानं भवेत् । यथा वृक्षौ वृक्षाविति समानरूपयोः प्रथमाविभक्त्यन्त

द्वितीयाविभक्त्यन्त च रूप वक्तुरिष्टस्यार्थस्य ज्ञानेनैवावधार्यते। एतच्च **"ओसि च"** ( २।१।२० ) इत्यत्रैकवचनोल्लेखेन ज्ञाप्यते, अन्यथा ओसप्रत्ययस्य निर्देशो द्विवचनान्त. करणीयः स्यात्। वक्तुरेकवचनस्यापि निर्देशे द्विवचनान्त एवौसप्रत्ययोऽभीष्ट इति विभाव्यते। अत एव पठ्यते—**"वक्तुर्विवक्षितपूर्विका शब्दार्थप्रतिपत्तिः" ( ६१ )** इति। विवक्षितं विवक्षेत्यर्थः, भावे क्त.।

सन्धिकार्यं क्वचिन्नित्य क्वचिच्चानित्य दृश्यते। यथा 'देवेन्द्रः' इत्यादौ समासे 'नायक.' इत्यादावेकपदे च नित्यमेव सन्धिकार्यम्। कुमारी अत्र, कुमारि अत्र, कुमार्यत्रेत्यादौ पृथग्रूपेण वर्तमानयोर्द्वयो पदयोस्त्वनित्यम्। अत्र ज्ञापकम्—**"अवर्ण इवर्णे ए"** ( १।२।२ ) इत्यत्र सन्ध्यभावेन निर्देश., अन्यथा एकारस्यायादेश. स्यात्। अत एवोच्यते—**"पदयोः सन्धिर्विवक्षितो न समासान्तरङ्गयोः" ( ६२ )** इति।

"दीर्घोऽनागमस्य" ( ३।३।२९ ) इत्यत्रानागमवचनम् **"उत्सर्गापवादयोरपवादविधिर्बलवान्" ( ६३ )** इति परिभाषायाः, **"वाऽसरूपोऽस्त्रियाम्" ( ४।२।८ )** इति सूत्र च **"अभ्यासविकारेष्वपवादो नोत्सर्गान् बाधते"** ६४ ) इति परिभाषाया ज्ञापकमुक्तम्। अत्र मन्ये **"वाऽसरूपोऽस्त्रियाम्"** ( ४।२।८ ) इति सूत्रम् **"उत्सर्गापवादयोरपवादविधिर्बलवान्"** इति परिभाषा ज्ञापयति, अन्यथा यदि बलवत्त्वादपवाद उत्सर्गस्य बाधको न स्यात् तर्हि तस्य विकल्पेन बाधकत्वविधान नोपयुज्येत। एव **"दीर्घोऽनागमस्य"** ( ३।३।२९ ) इत्यनेन 'पापच्यते' इत्यादौ चेक्रीयिते ( यङि ) अनागमस्याभ्यासस्य दीर्घो विधीयते। उक्तरीत्याऽपवादविधेर्बलवत्त्वे सिद्धे पूर्वं 'वनीवच्यते' इत्यादौ 'नी' इत्यागमे सत्यभ्यासो न ह्रस्वस्तेन दीर्घस्य प्राप्तिरेव नास्ति कुतो निषेध इति जिज्ञासाया कृतेन निषेधेनेद ज्ञाप्यते—**"अभ्यासविकारेष्वपवादो नोत्सर्गान् बाधते" ( ६४ )** इति। तेनात्र 'नी' इत्यागमो दीर्घस्य बाधको न भविष्यतीति प्राप्तदीर्घस्य वारणायानागमवचन पठ्यते। अनयोर्न्यायवचनयोरुपस्थापनम् **"अपवादविषये क्वचिदुत्सर्गस्यापि समावेशः"** ( ३७ ) इति परिभाषावचनात् पूर्वमेव सङ्गतं मन्ये। **"उच्चरितप्रध्वंसिनो ह्यनुबन्धाः"** ( ५५ ) इत्यतः प्रभृति सर्वशास्त्रोपयोगिनीना परिभाषाणा मध्येऽनयोरुपस्थापन साधु न प्रतीयते।

शास्त्रे सामान्यनिर्देशेऽपि क्वचिद् विशेषो गृह्यते। यथा **"युवावौ द्विवाचिषु"** ( २।३।७ ) इत्यत्र युवावावादेशौ स्वरान्तौ व्यञ्जनान्तौ वेति सन्देहे आवाभ्याम्, युवाभ्यामित्यादौ व्यञ्जनान्तत्वाद् दीर्घो न स्यादिति तयोः स्वरान्तत्व निश्चीयते। सन्देहाल्लक्षणमेव दुष्टमिति वक्तु न युज्यते। **"रूढानां बहुत्वेऽस्त्रियामपत्यप्रत्ययस्य"** ( २।४।५ ) इति सूत्रस्थे **"बहुत्वेऽस्त्रियाम्"** इति शब्दस्वरूपे **"एदोत्परः पदान्ते लोपमकारः"** (१।२।१७) इत्यनेनाकारस्य लोपे सति स्त्रियामस्त्रिया वेति सन्दिह्यते। सन्देहेनैव यदि सूत्रं दुष्ट मन्येत तर्ह्यत्र 'अस्त्रियाम्' इति पाठोऽनर्थकः स्यात्, पर व्याख्यानाभिमतोऽस्य निर्देशो विज्ञापयति—

"व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्" (६५) इति।

कातन्त्रवृत्त्यादिग्रन्थेषु स्मृतानि न्यायवचनानि

१—अनिनस्मन्ग्रहणान्यर्थवताऽनर्थकेन च तदन्तविधिं प्रयोजयन्ति ( कात० वृ० टी० २।२।२०, कवि० ३।१।४ )।

२—अनिर्दिष्टकालाः प्रत्ययास्त्रिष्वपि कालेषु भवन्ति ( पञ्जी २।४।६ )।

३—अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति ( कात० वृ० टी० ३।२।६४, कवि० २।४।१६)।

४—अन्त्याभावेऽन्त्यसदेशस्य ग्रहणम् ( कात० वृ० टी० २।२।१८, ४५, ३।२।२५ )।

५—अपवादविषयं परित्यज्योत्सर्गः प्रवर्तते ( कात० वृ० टी० २।३।१, व्या० सा० १।५।७ )।

६—अभ्यासविकारेष्वपवादो नोत्सर्गं बाधते ( कात० वृ० ३।२।३, ३।२६ )।

७—अर्थवद्ग्रहणे नानर्थकस्य ( पञ्जी १।२।६ )।

८—अर्थवशात् प्रतिपत्तिर्गरीयसी ( कात० वृ० टी० १।४।३ )।

९—अर्थवशाद् विभक्तिविपरिणामः ( पञ्जी ११।३३ )।

१०—अवयवसिद्धेः समुदायसिद्धिर्बलीयसी ( कवि० २।१।१, ५।६ )।

११—असिद्धं बहिरङ्गमन्तरङ्गे (का० वृ० टी० १।१।६, २।२।२५, कवि० १।२।२)।

१२—आगमा यद्गुणीभूतास्ते तद्ग्रहणेन गृह्यन्ते ( कात० वृ० टी० २।२।५; पञ्जी १।५।१५ )।

१३—आगमात् सर्वादेशो विधिर्बलवान् ( कात० वृ० टी० २।३।१६ )।

१४—आदेशादागमो विधिर्बलवान् ( कात० वृ० टी० २।१।६८ )।

१५—आद्यन्तवदेकस्मिन् ( कवि० १।५।६ )।

१६—उच्चरितप्रध्वंसिनो ह्यनुबन्धाः ( कात० वृ० टी० २।१।१५, २।१० )।

१७—उणादिषु सर्वे विधयो विकल्प्यन्ते ( कात० वृ० टी० २।२।६५ )।

१८—उत्सर्गापवादयोरपवादविधिर्बलवान् ( वं० भा० १।२।७ )।

१९—उभयनिर्देशे पञ्चमीनिर्देशो बलवान्।

२०—उभयपदाश्रितोऽपि वार्णो विधिरन्तरङ्गः ( कात० वृ० टी० १।२।७ )।

२१—एकदेशविकृतस्यानन्यवद्भाव ( कात० वृ० टी० १।५।१४, पञ्जी २।२।११, कवि० १।२।६ )।

२२—एकयोगनिर्दिष्टाना सहैव प्रवृत्तिः सहैव निवृत्तिः ( कवि० १।४।८, वं० भा० १।२।१, ४।४ )।

( एकयोगनिर्दिष्टाना सह वा प्रवृत्तिः सह वा निवृत्तिः, व्या० सा० १।४।४ )।

२३—एकवर्णविधिरन्ते प्रवर्ततेऽनेकवर्णविधिः सर्वस्य ( व भा० २।१।२०, २।११ )।

२४—एकस्मिन्नाद्यन्तवदुपचारः ( कात० वृ० टी० २।१।७७ )।
२५ –एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य ( कात० वृ० टी० २।१।५८, कवि० ३।२।८)।
२६– एकेन वर्णेन व्यवधानमाश्रीयते न त्वनेकेन ( कात० वृ० टी० २।२।१६, ६५ )।
२७—औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ।
२८—कार्यिणा हन्यते कार्यी कार्यं कार्येण हन्यते ( कवि० १।५।११ व्या० सा० १।२।२ )।
२९—कृत्तद्धितसमासेभ्यस्त्वतल्भ्या सम्बन्धाभिधानम् ( कवि० २।३।१६, ४।२७ )।
३०—कृत्रिमाकृत्रिमयोः कृत्रिमो विधिर्बलवान् ( कवि० १।२।१, ८ )।
३१—क्वचिदपवादविषये उत्सर्गस्यापि समावेश. ( कवि०, व्या० सा० १।५।१५ )।
३२—क्वचिन्निमित्ताभावे नैमित्तिकस्याप्यभाव. ( कवि० २।१।२५ )।
३३—गणकृतमनित्यम् ( कात० वृ० टी० २।४।४२ कवि० २।१।२६; व० भा० २।२।८ )।
३४—गतिकारकोपपदाना कृद्भि· समासवचन स्याद्युत्पत्तेः प्राक् ( कवि० १।२।७ )।
३५—गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ( कात० वृ० टी० २।१।७३, २।३३ )।
३६—ग्रहणवता लिङ्गेन न तदन्तविधि· (कात० वृ० टी० २।६।२, कवि २।१।२६)।
३७—ज्ञापकज्ञापिता हि विधयोऽनित्या ( कात० वृ० टी० २।३।२१, ६।२१६ )।
३८—तन्मध्यपाती तद्ग्रहणेन गृह्यते ( कात० वृ० टी० २।३।३५ )।
३९—द्वयोर्विभाषयोर्मध्ये यो विधि· स नित्य एव ( कात० वृ० टी० २।२।२८ )।
४०—नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगति· ( कात० वृ० टी० २।१।१३ )।
४१ --न वर्णाश्रये प्रत्ययलोपलक्षणम् ( कात० वृ० टी० २।२।५३, कवि० १।१।२०, ४।२ )।
४२—न हि सनियोगशिष्टानामेकापायेऽन्यस्य प्रवृत्ति· ( कात० वृ० टी० १।२।१ )।
४३—नानुबन्धकृतमनेकवर्णत्व गृह्यते ( कात० वृ० टी० २।२।८, पञ्जी ३।१।८ )।
४४—नानुबन्धकृतमसारूप्यम् ( पञ्जी ३।१।८ )।
४५—नानुबन्धकृतमसन्ध्यक्षरान्तत्वम् ( कात० वृ० टी० ३।१।५ )।
४६—नित्यादन्तरङ्गं बलीय· ( कवि० १।१।२०, २।२।६ )।
४७—नित्यानित्ययोर्नित्यो विधिर्बलवान् ( कात० वृ० टी० २।१।७५ )।
४८—निरनुबन्धग्रहणे न सानुबन्धकस्य ( कात० वृ० टी० २।१।२ )।
४९—निर्दिश्यमानानामादेशिनामादेशाः ( कात० वृ० टी० २।१।६६ )।
५०—पञ्चम्या निर्दिष्टे परस्य ( कवि० २।१।३० )।
५१—पदयोः सन्धिर्विवक्षितो न समासान्तरङ्गयोः ( कवि० २।१।१ )।
५२—परनिमित्तादेशः पूर्वस्मिन् स एव ( कवि० १।१।८, २।६ )।
५३—परान्नित्यं नित्यादन्तरङ्गमन्तरङ्गाच्चानवकाशं बलीयः ( कवि० २।३।५० )।

५४—परिभाषा हि बलाबलयुक्तिर्बाधते ( कात० वृ० टी० २।२।४१ ) ।

५५—पूर्वपरयोः परविधिर्बलवान् ( कात० वृ० टी० २।२।६ व० भा० १।५।१५ ) ।

५६—पूर्वेणैव सिद्धे पुनर्विधान पूर्वविधेर्लक्ष्यानुरोधार्थम् ( पञ्जी २।१।६६ ) ।

५७—प्रकृतिवदनुकरणम् ( कवि० २।१।१, २।१ ) ।

५८—प्रकृते पूर्वं पूर्वं स्यादन्तरङ्गम् ( कवि० १।२।७, २।३।४० ) ।

५९—प्रतिलक्ष्य लक्षणानि भिद्यन्ते ( कवि० १।१।१७ ) ।

६०—प्रत्ययस्य सर्वापहारी लोप. प्रकृतेरन्त्यापहारी ( पञ्जी २।३।६ ) ।

६१—प्रत्ययार्थसम्बन्धादुपसर्गसम्बन्धोऽन्तरङ्गः ( कवि० १।२।७ ) ।

६२—प्रसिद्धे. शास्त्रप्रवृत्तिर्ज्यायसी ( कवि० २।२।१, ३ ) ।

६३—मध्येऽपवादः पूर्वान् विधीन् बाधन्ते न परान् ( कवि० २।३।२१, ३।१।२६ ) ।

६४—य विधिं प्रत्युपदेशोऽनर्थक. स विधिर्बाध्यते ( कात० वृ० टी० १।५।१२, कवि० १।४।६ ) ।

६५—यथोद्देश सञ्ज्ञापरिभाषे कार्यकाल वा ( कवि० १।१।२० ) ।

६६—यस्मात् प्रत्ययविधिस्तदादेस्तदन्तस्य ( कात० वृ० टी० २।२।४६ ) ।

६७—यस्य तु विधेर्निमित्तमस्ति नासौ विधिर्बाध्यते ( कात० वृ० टी० १।५।१२, कवि० १।४।६ ) ।

६८—यादृग्जातीयस्य विप्रतिषेधो विधिरपि तादृग्जातीयस्य ( पञ्जी २।४।२०, व्या० सा० १।१।७, १० ) ।

६९—यावत्सम्भवस्तावद्विधि. ( व० भा० २।३।६ ) ।

७०—येन नाप्राप्तौ यो विधिरारभ्यते स तस्य बाधकः ( कात० वृ० टी० २।१।४३, पञ्जी ३।३।२ ) ।

७१—येन विधिस्तदन्तस्य ( पञ्जी १।५।१५ ) ।

७२—येन विना यदुच्चारयितु न शक्यते तत्तस्योच्चारणार्थम् ( पञ्जी १।१।१६ ) ।

७३—रूढेर्योगोऽपहारी ( कवि० १।१।४ ) ।

७४—लक्षणप्रतिपदोक्तयो· प्रतिपदोक्तस्यैव ग्रहणम् ( कात० वृ० टी० १।३।१ ) ।

७५—लिङ्गग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ( कात० वृ० टी० २।१।६२; कवि० १।२।१६ ) ।

७६—लिङ्गवृत्ते. पुनर्वृत्तावविधिर्निष्ठितस्य ( कात० वृ० टी० २।१।५७ ) ।

७७—लुग्लोपे न प्रत्ययकृतम् ( कात० वृ० टी० २।२।६ ) ।

७८—लोपस्वरादेशयोः स्वरादेशविधिर्बलवान् ( कवि० २।१।३९, व्या० सा० १।१।३ ) ।

७९—वर्णविधौ लाक्षणिकपरिभाषाया अनादर. ( कवि० १।२।१२, २।१।५०, २।५५ ) ।

८०—वर्णग्रहणे तदादौ कार्यसम्प्रत्यय. ( कात० वृ० टी० २।१।१४, २।१२, ३।१८, ४।२४६ ) ।

८१—वर्णान्तस्य विधिः ( कवि० २।१।६२ ) ।

८२—वाक्याश्रितो हि सम्बन्धोऽन्तरङ्ग. ( कात० वृ० टी० २।३।१ ) ।

८३—वार्णो विधिरन्तरङ्गः ( कवि० २।२।४५ ) ।

८४—विधिनियमसम्भवे विधिरेव ज्यायान् ( कवि० १।१।२०, ४।८, २।१।१, ३।४६ )।

८५—विधिसूत्रे सञ्ज्ञापूर्वको व्यवहार. शिष्यबोधार्थः ( कात० वृ० टी० १।५।४ ) ।

८६—विशेषातिदिष्टः प्रकृत न बाधते ( कात० वृ० टी० २।१।२६, कवि० १।१।४ ) ।

८७—व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् ( कात० वृ० टी० १।५।१० कवि० १।२।१६ ) ।

८८—व्याप्त्यव्याप्त्योर्व्याप्तिरेव श्रेयसी ( कवि० २।४।२३९ ) ।

८९—शब्दान्तरस्य विधिः प्राप्नुवन् न नित्यो भवितुमर्हति ( कवि० १।१।२०, व्या० सा० १।१।२० ) ।

९०—श्रुतानुमितयोः श्रौतसम्बन्धो विधिर्बलवान् (कात० वृ० टी० १।४।४, २।१।१६)।

९१—सकृद्गतौ विप्रतिषेधे यद् बाधित तद् बाधितमेव ( कवि० १।१।१३, ३।२ ) ।
( सकृद् बाधितो विधिर्बाधित एव, कात० वृ० टी० २।१।२९ ) ।

९२—सञ्ज्ञापूर्वको विधिरनित्यः ( पञ्जी ३।३।१६ कवि० २।१।४० ) ।

९३—सन्देहे नैव गुरुलाघवचिन्ता ( कात० वृ० टी० २।१।६४ ) ।

९४—सन्ध्यक्षराणामिदुतौ ह्रस्वादेशे ( कात० वृ० टी० १।१।८ ) ।

९५—सन्निपातलक्षणो विधिरनित्यः ( व० भा० २।१।७ ) ।

९६—सन्निपातलक्षणो विधिरनिमित्त तद्विघातस्य ( पञ्जी २।१।७, कात० वृ० टी० २।१।१४, कवि० १।२।१, ८ ) ।

९७—सन्नियोगशिष्टसम्भवेऽन्वाचयशिष्टकल्पनाऽन्याय्या ( कवि० १।१।८ ) ।

९८—सन्नियोगशिष्टानामेकापायेऽन्यतरस्याप्यपायः ( पञ्जी २।१।१६ ) ।

९९—सप्तम्या निर्दिष्टे पूर्वस्य ( पञ्जी २।१।३८, कवि० ३।१।५ ) ।

१००—समासान्तविधेरनित्यत्वम् ( व्या० सा०–मङ्ग०, पृ० ४, १।३।२. कवि० २।१।७६ )।

१०१—समुच्चयकल्पनेऽन्वाचयकल्पनाया अन्याय्यत्वम् ( कवि० १।५।१७ ) ।

१०२—सर्वविधिभ्यो लोपविधिर्बलवान् ( कवि० १।१।१३, २।१।७१, ३।४६, व्या० सा० १।१।३ ) ।

१०३—सविकल्पान्यपि ज्ञापकानि भवन्ति ( कात० वृ० टी० २।५।२५० ) ।

१०४- सामान्यवाचका हि शब्दाः प्रकरणमन्तरेण विशेषे वर्तितु नोत्सहन्ते ( कात० वृ० टी० २।४।२२५ ) ।

१०५—सामान्यविधिरुत्सर्गो विशेषविधिरपवादः ( व्या० सा० १।५।७ )

१०६—सिद्धे सत्यारम्भो विधिर्नियमाय विकल्पाय ज्ञापकाय वेति ( पञ्जी २।२।१३ कवि० १।४।१५ )।

१०७—सूत्रे लिङ्ग सङ्ख्या कालश्चातन्त्राणि भवन्ति ( व्या० सा० १।२।१ )।

१०८—स्व रूप शब्दस्याशब्दसञ्ज्ञा ( कवि० २।१।७ )।

१०९—स्वरादेशः परनिमित्तकः पूर्वविधिं प्रति स्थानिवत ( पञ्जी १।४।८ कवि० १।१।८, २।६ )।

११०—स्वरादेशो विधिर्बलवान् ( कात० वृ० टी० २।१।३ )।

स्वस्या वृत्तौ या. परिभाषा दुर्गसिंहेन व्याख्याता भावमिश्रेण च न व्याख्याता., याश्च भावमिश्रेण व्याख्याताः पर दुर्गसिंहेन न व्याख्यातास्तासामनुक्रमाणिकाऽत्र प्रस्तूयते।

दुर्गसिंहव्याख्याता भावमिश्राव्याख्याताः परिभाषाः

१—अदर्शन लोपः ( ५१ )।

२—अभ्यासविकारेष्वपवादो नोत्सर्गान् बाधते ( ६४ )।

३—उच्चरितप्रध्वसिनोऽनुबन्धाः ( ५५ )।

४—औपदेशिकप्रायोगिकयोरौपदेशिकस्यापि ग्रहणम् ( ४२ )।

५—गणकार्यमनित्यम् ( २९ )।

६—ज्ञापकज्ञापिता विधयो ह्यनित्याः ( ६० )।

७—नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ( ४६ )।

८—नास्वशब्दोक्तत्वात् ( ८ )।

९—निरनुबन्धग्रहणे सामान्यग्रहणम् ( ४५ )।

१०—पञ्चम्या निर्दिष्टे परस्य ( २२ )।

११—पदयो. सन्धिर्विवक्षितो न समासान्तरङ्गयो ( ६२ )।

१२—प्रथमया च ( २४ )।

१३—भाविनि भूतवदुपचाराः ( १४ )।

१४—भूतपूर्वकस्तद्वदुपचारः ( ५० )।

१५—य विधि प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते ( ४७ )।

१६—यस्य विधेर्निमित्त नासौ विधिर्बाध्यते ( ४८ )।

१७—योऽनादिष्टात् स्वरात् पूर्वस्त प्रति स्थानिवत् ( ११ )।

१८—वक्तुर्विवक्षितपूर्विका हि शब्दार्थप्रतिपत्तिः ( ६१ )।

१९—वर्णग्रहणे निमित्तत्वात् ( ३२ )।

२०—व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् ( ६५ )।

२१—षष्ठ्या निर्दिष्टे स्वस्य ( २३ )।

२२—सञ्ज्ञापूर्वकविधिरनित्यः ( ३० )।

२३—सन्ध्यक्षराणामिदुतौ ह्रस्वादेशे ( ४३ )।
२४—सप्तम्या निर्दिष्टे पूर्वस्य ( २१ )।
२५—सर्वापहारी लोपः प्रत्ययस्य ( ५३ )।
२६—स्व रूप शब्दस्याशब्दसञ्ज्ञा ( २८ )।

भावमिश्रव्याख्याता दुर्गसिंहाव्याख्याताः परिभाषाः

१—अन्तरङ्गबहिरङ्गयोरन्तरङ्गो विधिर्बलवान् ( ५० )।
२—अन्तरङ्गाच्चानवकाश बलीयः ( ५१ )।
३—अन्तस्था रेफवर्जिताः सानुनासिका निरनुनासिकाश्च ( १६ )।
४—अपवादविषय परिहृत्योत्सर्गः प्रवर्तते ( ५५ )।
५—उपपदविभक्तेः कारकविभक्तिर्बलीयसी ( ५६ )।
६—उभयोर्विभाषयोर्मध्ये यो विधिः स नित्य ( ११ )।
७—एकयोगनिर्दिष्टाना सहैव प्रवृत्तिः सहैव निवृत्तिः ( ६ )।
८—गुणबाधिका वृद्धिर्भवति ( ६० )।
९—गौणमुख्ययोर्मुख्यस्य कार्यं न तु गौणस्य ( २ )।
१०—न सामान्यशब्दोक्ते ( १७ )।
११—नित्यं सन्ध्यक्षराणि दीर्घाणि ( ३७ )।
१२—नित्यानित्ययोर्नित्यो विधिर्बलवान् ( ४९ )।
१३—नैसर्गिकलाक्षणिकयोर्नैसर्गिकस्यैव ग्रहण न तु लाक्षणिकस्य ( ८ )।
१४—परान्नित्य नित्यादन्तरङ्गमन्तरङ्गाच्चानवकाश बलीयः ( ५१ )।
१५—पारिभाषिक क्वचिदनित्यम् ( ५८ )।
१६—प्रत्ययस्य सर्वापहारी लोपः ( २५ )।
१७—प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत् प्रकाशते ( ६२ )।
१८—यल्लक्षणेनानुपपन्न तत्सर्वं निपातनात् सिद्धम् ( ३१ )।
१९—यो यमाश्रित्योत्पद्यते स त प्रति सन्निपातः, सन्निपातलक्षणो विधिरनिमित्त तद्विघातस्य ( १२ )।
२०—लुप्तोऽप्यनुबन्धः साध्यसिद्धिवशात् सद्वत् ( २४ )।
२१—वर्णग्रहणे सवर्णस्यापि ग्रहणम् ( ४ )।
२२—सामान्योक्तो विधिरुत्सर्गो विशेषोक्तो विधिरपवादः ( ५३ )।
२३—सूत्रे लिङ्गवचनमप्रमाणम् ( ६१ )।

इति कातन्त्रव्याकरणविमर्शाभिधे शोधप्रबन्धे षष्ठः परिभाषाविमर्शाध्यायः।



# सप्तमोऽध्यायः=विधिसूत्रालोचनम्

## विधेरर्थो भेदाश्च

विधीयते इति विधिः कार्यम्, अप्राप्तौ सत्या यद् विधीयमान कार्यं विधिशब्देनोच्यते[1]। स च विधिर्व्याकरणे द्विविध. स्मर्यते—वर्णोत्पादनरूपोऽभावरूपश्च। वर्णोत्पादनरूपो यथा—"अवर्णादूटो वृद्धिः" (कात० ४।६।११६) इत्यादि। अभावरूपो विधिर्द्विविध.—नाशो निषेधरूपश्च। नाशविधिर्यथा—"समानः सवर्णे दीर्घीभवति परश्च लोपम्" (कात० १।२।१) इत्यादि। निषेधविधिर्यथा—"न नामि दीर्घम्" (कात० २।३।२७) इत्यादि। सञ्ज्ञापरिभाषादीनामज्ञातशक्तिज्ञापकत्वाद् विधित्वेऽपि तत्र सञ्ज्ञादे. प्राधान्यात् तदनुशासनवचनेषु सञ्ज्ञादिसूत्रव्यवहार. क्रियते। वर्णोत्पादनरूपा विधय आदेशागमादिभेदैर्बहवो भवन्ति, अत्र तेषा सर्वेषामादेशागमनिपातविकल्पप्रकृतिभावनिषेधविधीना विषये किञ्चिदुच्यते—

## कातन्त्रव्याकरणे दीर्घादिविधीनां योजना

ग्रन्थादावत्र दीर्घविधिर्लोपविधिश्च निर्दिश्येते। पाणिनीये दधीदम्, मधूदकमित्यादिसिद्धये उभयोरिकारयोरुकारयोश्च स्थाने ईकार ऊकारश्चैकादेशो विधीयते। कातन्त्रे पूर्वपदस्थेकारोकारयोरेव ईकारोकारावादेशौ परपदस्थेकारोकारयोश्च लोपो निर्दिश्यते (समान. सवर्णे दीर्घीभवति परश्च लोपम् १।२।१)।

लोपविधौ त्रयः प्रकारा. समादृता.। यत्र कार्यी प्रथमान्तस्तत्र कार्यं द्विवचनान्तं निर्दिष्टम्, यथा—"एदोत्परः पदान्ते लोपमकारः (१।२।१७), श्रद्धायाः सिर्लोपम्" (२।१।३७) इत्यादि। षष्ठ्यन्तेन कार्यिणा सह प्रथमान्त कार्यं निर्दिश्यते, यथा—"सयोगान्तस्य लोपः, इवर्णावर्णयोर्लोपः स्वरे प्रत्यये ये च" (२।३।५४, ६।४४) इत्यादि। समस्तनिर्देशेऽपि प्रथमान्त कार्यं दृश्यते—"ङसिङसोरलोपश्च, कर्तुरायिः सलोपश्च" (२।१।५८, ३।२।४२) इत्यादौ। समासतद्धितप्रकरणयोश्छन्दोबद्धत्वात् क्रियापदनापि लोपविधिर्निर्दिश्यते, यथा "तत्स्था लोप्या विभक्तयः, नस्य तत्पुरुषे लोप्यः, एयेऽकद्र्वास्तु लुप्यते" (२।५।२, ५।२१, ६।४७) इति। सर्वत्र व्याकरणनिकाये समादृतोऽयं लोपविधिः सर्वविधिभ्यो बलवान्[2] गण्यते।

सत्यामपि [3]गुणसञ्ज्ञायामर्थलाघवदृष्ट्या सन्धिप्रकरणे एकारादिविधानस्थले न गुणशब्देन निर्देश. कृत., किं च "अवर्ण इवर्णे ए" (१।२।२-५) इत्यादिसूत्रैरवर्णस्य

१ विधिरत्यन्तमप्राप्तौ।

२ लोपश्च बलवत्तर (म० भा०, द्वि० आ०, शि० सू० ५, पृ० ११७)।
सर्वेभ्यो विधिभ्य. स्याद् बली लोपविधिस्तथा (मु०—दु० टी०, सू० २१)।

३. अर्पूर्वे द्वे सन्ध्यक्षरे च गुणः (३।८।३४)।

एकारादय आदेशा इवर्णादेश्च लोपो विहितः। एवं वृद्धिनिर्देशावसरेऽपि पूर्वपदस्थावर्णस्यै-वैकारौकारौ एकारादीनां च लोपः कृतः। [1]पाणिनीये यो यण्विधिरेचोऽयादिविधिश्चैकैकेन[2] सूत्रेणोक्तः अत्र स यण्विधिः [3]सूत्रचतुष्टयेनायादिविधिश्चापि[4] सूत्रचतुष्टयेन निर्दिष्टः। विसन्धिः पृथग्योगश्चैतेषु सूत्रेषु स्पष्टार्थक उच्यते।

पाणिनीये 'अग्नेऽत्र' इत्यादौ **"एङः पदान्तादति"** ( अ० ६।१।१०९ ) इति सूत्रेणाकारैकारयोरकारौकारयोश्च स्थाने पूर्वरूपमेकादेशः सम्पद्यते। कातन्त्रे चाकारस्य लोपेन तादृशाः प्रयोगाः साध्यन्ते ( एदोत्परः पदान्ते लोपमकारः १।२।१७ )। पाणिनीये द्विवचनान्तेदन्तादीनां शब्दस्वरूपाणां प्रगृह्यसञ्ज्ञां विधाय प्रकृतिभावो निर्दिश्यते। कातन्त्रे तु सन्धिप्रकरणस्य तृतीयपादे प्रगृह्यसञ्ज्ञामन्तरैव प्रकृतिभावो विधीयते।

चतुर्थपादे व्यञ्जनानुस्वारयोरनेके सन्धिविधयः प्रदर्शिताः। पञ्चमे पादे विसर्जनीयस्य शकारादयोऽनेके आदेशाः, अन्ते च छकारस्य द्विर्भाव उक्तः।

नामचतुष्टयस्य प्रथमपादे सर्वनामप्रकरणे ङसिङ्योः स्मात्स्मिन्नादेशौ विहितौ, तयोश्च पूर्वादिशब्देभ्यो विकल्पेन विधानाय सूत्रमुच्यते— **"विभाष्येते पूर्वादेः"** (२।१।२८) इति। सूत्रे द्विवचनान्तेन क्रियापदेनाव्यवहितपूर्वयोः स्मात्स्मिनोरेवाऽऽदेशयो-र्ग्रहणाय बोध्यस्तेन स्मायादेशोऽत्र न गृह्यते।

आगमशासनस्यानित्यत्वेऽपि[5] सामान्यतो विहितादादेशात् तस्य बलवत्त्वं जायते, श्रीभोजराजेन हेमचन्द्राचार्येण च परिभाषासूत्रमुक्तम्— **"आदेशादागमः"** ( सर० क० १।२।११८, है० बृ० वृ०—अन्ते, परि० ५० ) इति। अत्र बलवत्पदस्य पूर्वसूत्रादनुवृत्तिः क्रियते। सर्वादेशस्तु आगमादपि बलवान् गण्यते। महर्षिपाणिनिनाऽनेके नुडादय आगमाः प्रायेण सानुबन्धाः प्रोक्ताः, तत्र च केचिदनुबन्धाः स्वरार्थमपि योजिताः। कातन्त्रे वैदिकप्रकरणाभावात् तेऽनुबन्धा नैव दृश्यन्ते। अत्राध्यायचतुष्टये चतुर्दशाऽऽगमा दृश्यन्ते, यत्र 'सु-नु-मु-तु' इत्यागमचतुष्टये उकारानुबन्धस्यान्त्यात् स्वरात् परं विधानाय योजना कृता। उक्तं च— **"आगम उदनुबन्धः स्वरादन्त्यात् परः"** ( २।१।६ ) इति। 'आम्-ना-नी-अ-न-म' इति षट्स्वागमेषु न कश्चिदनुबन्धः सम्पृक्तः। इडागमे टकारानुबन्धः **"इडागमोऽसार्वधातुकस्यादिर्व्यञ्जनादेरयकारादेः"** ( ३।७।१ ) इत्यनेनासार्वधातुकस्य व्यञ्जनस्याऽऽदौ विधानाय कृतः। **"सुड् भूषणे सम्पर्युपात्"** ( ३।७।३८ ) इत्यत्रोक्त-सूत्रादादिपदस्यानुवर्तनात् सुडागमोऽपि व्यञ्जनस्यादौ प्रवर्तते। **"अव ईड् वचनादिः"**

1 इको यणचि ( अ० ६।१।७४ )।

2 एचोऽयवायावः ( अ० ६।१।७५ )।

3. १।२।८-११।

4. १।२।१२-१५।

5. आगमशासनमनित्यम्, तेन 'सिचः' ( ३।६।९० ) इति सूत्रेण मा भैरित्यादावीडागमो न भवति ( द्र०—कात० वृ० ३।६।९० )।

( ३।६।८८ ) इत्यत्राऽऽदिपदोपादानेन ईडागमः, "अदोऽट्" ( ३।६।६२ ) इत्यत्र च ततो वचनादिपदस्यानुवर्तनादडागमश्चापि तथैव जायते।

दृश्यते हि केचिदाचार्या. पूर्वाचार्यमतानि तन्नामोल्लेखपुरस्सर समुद्धृत्य निर्दिश्यमानविधेर्विकल्पता वर्णयन्तीति। यथा महर्षिपाणिनिः "लोपः शाकल्यस्." ( अ० ८।३।१६ ) इति सूत्रे आचार्यं शाकल्य स्मृत्वा यकारवकारयोर्लोप विकल्पेन निर्दिशति। एतादृशो विधिः क्वचिद् व्याकरणे वाविभाषादिपदैर्निर्दिश्यते। यथा कातन्त्रे उपर्युक्तो विधि. "अयादीनां यवलोपः पदान्ते नवा लोपे तु प्रकृतिः" ( कात० १।२।१६ ) इत्यात्राऽऽचार्यनामस्मरणमन्तरैव साक्षाद् विकल्पेन वर्ण्यते। यत्र विकल्पविधिप्रसङ्गे आचार्यनाम स्मर्यते तत्राऽऽचार्यग्रहण पूजार्थमुच्यते[1] आचार्यैः, परं तत्रेद विज्ञेयम्—स्मृत आचार्यो य विधिं विकल्पेन मनुते स्म तस्यैव विधेराचार्यनामोल्लेखपुरस्सरं महर्षिपाणिनिना निर्देश कृत इति। यथा "वा सुप्यापिशलेः" ( अ० ६।१।६२ ) इत्यत्र आपिशलिमतेन सुपि परतो यो हि वृद्धिविधिर्विकल्पेन स्वीकृत आसीत् तस्यैव निर्देशो महर्षिपाणिनिना कृतः ( द्र०—पाणिनीय व्याकरण का अनुशीलन, पृ० ३५२ )।

एतादृशोऽपि केचिदाचार्याः पूर्वमभूवन् ये कस्मिंश्चिद् विषये कस्यचिदेवाचार्यविशेषस्य मत समाद्रियन्ते स्म, तदीय किञ्चिन्मत महर्षिपाणिनिना नामोल्लेखपूर्वक यदुद्धृत तेनेद वक्तु शक्यते—आचार्यः पाणिनिर्यान् आचार्यान् पूज्यान् मनुते स्म तेषामेव मत स्वीयेऽष्टाध्यायीग्रन्थे प्रदर्शितम्, तेन सर्वेषामाचार्याणा स्मरण पूजार्थं भवितुमर्हतीति। एवमाचार्यनाम विकल्पार्थं पूजार्थं चोपादीयते। विकल्पार्थमेव चेदाचार्यस्मरण स्यात् तदैकस्यैवाऽऽचार्यस्य सूत्रे उल्लेख आवश्यकः स्यात्, परम् "अङ् गार्ग्यगालवयोः" ( अ० ७।३।६६ ) इत्यत्र द्वौ, "नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्" ( अ० ८।४।६७ ) इत्यत्र च त्रय आचार्याः स्मृता इति प्रामाण्यबुद्ध्याऽनेकेषामाचार्याणामेकस्मिन् सूत्रे उल्लेखः पूजार्थमपि तेषा ग्रहण द्योतयति[2]।

---

१. काश्यपग्रहण पूजार्थम्, वेत्येव हि वर्तते ( म० भा०—तृषिमृषिकृषे काश्यपस्य १।२।५५ )। सेनकग्रहण पूजार्थम्, विकल्पोऽनुवर्ततैव ( का० वृ०—गिरेश्च सेनकस्य ५।४।११२ )। स्फोटायनग्रहण पूजार्थम्, विभाषेत्येव वर्तते। व्यवस्थितविभाषेयम्, तन 'गवाक्ष.' इत्यत्र नित्यमवङ् भवति ( का० वृ०—अवङ् स्फोटायनस्य ६।१।१२३ )। आपिशलिग्रहण पूजार्थम्, वेत्युच्यते एव ( का० वृ०—वा सुप्यापिशले. ६।१।९२ )। गालवग्रहण पूजार्थम्, अन्यतरस्यामिति ह वर्तते ( का० वृ०—इको ह्रस्वोऽङ्यो गालवस्य ६।३।६१ ) इति।

२. ननु च नित्येषु शब्देषु विकल्पिते विधौ विकल्पमात्र प्रदर्शयितव्यम्। तत्र कस्य किं मत यत प्रख्यापित स्यात्? उच्यते—विकल्पप्रतिपादनाय वाग्रहणे एव कर्तव्ये पूजार्थमाचार्या उपादीयन्ते। सा चैव पूजा भवति—यदि येनाचार्येण यः शब्दः स्मृत. स तेनैव स्मर्तृत्वेनोपादीयते। एव हि तस्य स्मर्तृत्वेन प्रमाणत्वेन स्तुति. कृता भवति। एव चाङ् गार्ग्यगालवयोरित्यादावनेकाचार्योपादानमर्थवद् भवति, विकल्पस्यैकाचार्योपादानेनापि सिद्धत्वात् ( म० भा० प्र० ७।३।६३ ) इति।

कातन्त्रे वाशब्देन द्विपञ्चाशत् ( ५२ ), नवाशब्देन षट्, विभाषाशब्देन च द्वे कार्ये निर्दिष्टे । तत्कार्यनिर्देशकानि सूत्राण्येतत्प्रकरणान्ते सङ्कलितानि । अत्र विधेर्विकल्पार्थमन्यतरस्यामुभयथेति शब्दद्वयस्य प्रयोगो न दृश्यते, न च क्वचिदाचार्यस्यैव कस्यचिन्नाम स्मृतम् । पूर्वेषामाचार्याणा बहूनि मतानि समादृतानि दृश्यन्ते । यथा 'बभृज्जे, बभृज्जाते, बभृज्जिरे' इत्यत्र स्वरात् परस्य स्वरे परतश्च भृजीधातोर्जकारस्य द्वित्व निर्दिश्यते—**"भृजः स्वरात् स्वरे द्विः"** ( ३।८।१० ) इति । अत्र वृत्तिकारो दुर्गसिंह —**"आद्यव्याकरणमतमेतद्"** इत्याह । एवमन्यत्रापि बहुत्र व्याख्याकारैस्तत्तन्मत पूर्वाचार्यसम्मतमिति समुद्घुष्यते[1] ।

क्वचिद् वाशब्दो बहुलार्थमपि प्रयुक्तः, यथा **"सौ च मघवान मघवा वा"** ( २।३।२३ ) इत्यत्रोपात्तस्य 'वा' इत्यस्याधिकारे सति **"जरा जरम् स्वरे वा"** ( २।३।२४ ) इत्यत्र पुनरुपात्तेन वाशब्देन पूर्वसूत्रोपात्तवाशब्दो बहुलार्थ इति वदन्ति व्याख्यातारः, तेन माघवतम्, मघवत्यम्, मघवतीत्यत्रापि मघवन्तुरादेशो जायते । **"ये वा"** ( ४।१।७२ ) इति सूत्रे व्यवस्थितविभाषार्थमपि वाग्रहणमाम्नायते, तेन 'जायते' इति दिवादौ यणि परतो नित्यमाकार. प्रवर्तते । ध्यणि प्रत्यये तु जन्यमित्यादौ व्यवस्थितविभाषयाऽऽकारो न विधीयते । वाऽधिकारे पुनर्वाग्रहणेन क्वचिदन्यदेव कार्य प्रवर्तते, यथा **"ये वा"** ( ४।१।७२ ) इत्यतो वाशब्दस्यानुवृत्तौ सत्यामपि **"सनस्तिकि वा"** (४।१।७३) इत्यत्र पुनर्वाग्रहणेन सतिरित्यत्र न नकारस्याऽऽकारो जायते, किं च तस्य लोप. प्रवर्तते । नवाग्रहणमपि क्वचिद् व्यवस्थितविभाषार्थं क्रियते, यथा वाङ्मयम्, तन्मात्रमित्यादौ प्रत्ययपञ्चमे परतः **"पञ्चमे पञ्चमांस्तृतीयान्नवा"** ( १।४।२ ) इत्यनेन न विकल्पेन पञ्चमवर्णादेश., किं च नित्य स प्रवर्तते[2] । पूर्वसूत्रादनुवर्तमानेऽपि नवाग्रहणे **"वर्गप्रथमेभ्यः शकारः स्वरयवरपरश्छकारं न वा"** ( १।४।३ ) इत्यत्र पुनर्नवाग्रहण कृत तद्विधेर्नित्यत्वस्य वारणायेति बोध्यम् । अन्यथा नवाऽधिकारसमाप्त्यर्थ **'तेभ्य एव हकार पूर्व चतुर्थं न वा"** (१।४।४) इत्यग्रिमे सूत्रेऽवश्य नवाग्रहणे क्रियमाणे सत्युभयोर्विभाषयोर्मध्ये पठितत्वादस्य विधेर्नित्यत्व स्यात्[3] ।

क्वचिद् वाशब्दः समुच्चयार्थे प्रयुक्तो दृश्यते, यथा **"वा विरामे"** ( २।३।६२ ) इति, अत्र पूर्वसूत्राभ्या ( धुटा तृतीय., अघोषे प्रथमः २।३।६०, ६१ ) धुटा वर्णाना तृतीयवर्णापत्तिः प्रथमवर्णापत्तिश्च समुच्चीयते, न तु प्रथमवर्णापत्तिरूपकार्य विकल्पेन[4] विधीयते ।

१ एता पूर्वाचार्यप्रसिद्धा अन्वर्था इह ज्ञाप्यन्ते ( कात० वृ० ३।१।३३ ) ।

२ व्यवस्थितविभाषया प्रत्ययपञ्चमे नित्य पञ्चमो भाषायाम् ( कात० वृ० १।४।२ ) ।

३. नवाग्रहणमिह पूर्वसूत्रादनुवर्त्तिष्यते, भूय. किं नवाग्रहणेनेति चेत् ? सत्यम्—उत्तरसूत्रे वाधिकारनिवृत्त्यर्थमेव नवाग्रहणमवश्य कार्यम्, ततश्चोभयोर्विभाषयोर्मध्ये यो विधि. स नित्य इति नित्यप्राप्ते विकल्पार्थं नवाग्रहणमिति ( पञ्जी १।४।३ ) ।

४. वाशब्द इह समुच्चयार्थो न विकल्पार्थ., विकल्पार्थे हि विद्भ्नोतीति क्विपि कृते पक्षे मकारस्य स्थितिः स्यात्, यदि पुनरयं विकल्पार्थ. स्यादधिकृतेनैव वाग्रहणेन सिध्यति ( कात० वृ० टी० २।३।६२ ) इति ।

"**विभाष्येते पूर्वादेः**" ( २।१।२८ ) इति सूत्रे विभाषाशब्दस्य क्रियापद दृश्यते। इय प्राप्ते विभाषा। "**पुरुषे तु विभाषया**" ( २।५।१६ ) इति सूत्रेऽनव्ययत्वाद् विभाषाशब्दस्य तृतीयान्त रूपम्, इयमप्राप्ते विभाषा। पाणिनीये विभाषासञ्ज्ञाया. परिभाषितत्वेऽपि विभाषाशब्देन विरलतया विकल्पव्यवहारो दृश्यते।

केचित् प्रत्ययादिविधयः सञ्ज्ञाया विधीयन्ते। सूत्रेषु निर्दिष्ट सञ्ज्ञाशब्दस्त्रैविध्यमुपगच्छति। यथा क्वचित् सञ्ज्ञाया किञ्चिद् विधीयते, किञ्चिद् निषिध्यते, क्वचिच्च 'अपि-च' इतिशब्दयोगेनासञ्ज्ञायामपि निर्दिष्ट विधीयते, यथा 'उद्दालकपुष्पभञ्जिका[१], वीरणपुष्पप्रचायिका इति क्रीडायाः सञ्ज्ञे (नामनी) तेनात्र "**सञ्ज्ञायां च**" ( ४।५।८८ ) इत्यनेन वुञ्प्रत्यय प्रवर्तते। भृत्यमित्यादावसञ्ज्ञायामेव "**भृञोऽसञ्ज्ञायाम्**" (४।२।२५) इत्यनेन क्यब् भवति, सञ्ज्ञाया च तस्य निषेधः। "**डोऽसञ्ज्ञायामपि**" ( ४।३।४७ ) इत्यत्रापिग्रहणेन विज्ञायते—निर्दिष्ट कार्यं सञ्ज्ञाया तदभावे चापि भवतीति। तेन 'भुजगः, तुरगः' इत्यादौ सञ्ज्ञार्थे यथा डप्रत्ययो विधीयते, एवम् 'अध्वगः, दूरगः' इत्यादावसञ्ज्ञार्थेऽपि स विधीयते।

सञ्ज्ञाशब्दा द्विविधा दृश्यन्ते—क्वचिदवयवार्थानुसारिणः, क्वचिच्च रूढार्थबोधकाः। रूढशब्दा यथाकथञ्चिदर्थदृष्ट्या व्युत्पाद्यन्ते। आचार्येण जिनेन्द्रबुद्धिनाऽत्रोक्तम् "**सञ्ज्ञाशब्दा हि द्विविधा भवन्ति। केचिदवयवार्थानुगताः, यथा सप्तपर्ण इति, केचित्तु विपरीता., यथा तैलपायिकेति। तदिह यत्रावयवार्थानुगमोऽस्ति विश्वम्भरः, शत्रुन्तप इत्यादिषु तत्र कर्मणीति सम्बध्यते, विश्वं बिभर्तीति विश्वम्भरः। यत्र त्ववयवार्थानुगमो नास्ति, यथा रथन्तरं सामेति, तत्र व्युत्पत्त्यर्थं सुपीति सम्बध्यते, रथेन तरतीति वा**" ( न्या० ३।२।४६ ) इति।

सञ्ज्ञाशब्दस्य निर्देशे नित्य एव समासो जायते न तु वैकल्पिक., वाक्येन सञ्ज्ञाया अनवगमात्[२]। अत एव वाक्यसमासयोः सत्यपि रूपसाम्ये 'अरण्ये तिलका' इत्यत्र समास एव क्रियते। कातन्त्रे समासविधायकसूत्रेषु सञ्ज्ञापद नैव पठ्यते। पुवद्भावनिषेधविधौ "**सञ्ज्ञापूरणीकोपधास्तु न**" ( २।५।१६ )। इत्यनेन सञ्ज्ञाशब्दाना पुवद्भावो निषिध्यते।

कस्यचित् कार्यस्य निषेधोऽपि विधिकोटौ गण्यते, अभावरूपविधेस्तत्र सम्भवात्। स चाभावरूपविधिर्नकारेण निर्दिश्यते। निषेधविधिः प्रायेणानित्यो भवतीत्युच्यते—' '**नञा**

१. कातन्त्रे उद्यानशब्द. पठ्यते, येनोद्यानस्थाना पुष्पसामान्याना भञ्जनस्यावबोधो जायते। स्थलविशेषेषु क्रीडाभेदोऽयमवगन्तव्य.।

२. "अन्यपदार्थे च सञ्ज्ञायाम्" ( अ० २।१।२१ ) इति सूत्रव्याख्यानावसरे काशिकाकारेणोक्तम्—"विभाषाधिकारेऽपि नित्यसमास एवायम्, न हि वाक्येन सञ्ज्ञा गम्यते" इति। "सञ्ज्ञायाम्" ( अ० २।१।४४ ) इति सूत्रव्याख्यानावसरेऽप्युक्तम्—"सञ्ज्ञा समुदायोपाधि। तेन नित्यसमास एवायम्, न हि वाक्येन सञ्ज्ञा गम्यते" इति।

निर्दिष्टमनित्यम्" ( कात० वृ० १।२।१८ ) इति। तेन सत्यपि "न व्यञ्जने स्वराः सन्धेयाः" ( १।२।१६ ) इति निर्देशे पित्र्यम्, गव्यूतिरित्यादौ सन्धिकार्यं प्रवर्तते एव, 'देवीगृहम्, मातृमण्डलम्' इत्यादौ च न प्रवर्तते। विसर्जनीयस्य लोपे कृते प्राप्तस्य सन्धिकार्यस्य निषेधायोच्यते—"न विसर्जनीयलोपे पुनः सन्धिः" ( १।५।१६ ) इति। निषेधेनानेन 'क इह, भो अत्र' इत्यादौ प्राप्त गुणादिकार्यं न प्रवर्तते। एषच्छात्रेणेत्यादौ छकारस्य द्विर्भावो विसर्जनीयाधिकारे पुनर्विसर्जनीयस्य ग्रहणेन जायते। पुनर्विसर्जनीयग्रहणेनोत्तरत्र सूत्रेषु तदधिकाराभावो विज्ञेय.। एव सन्धिप्रकरणे द्वाभ्या निषेधसूत्राभ्या स्वरव्यञ्जनसन्ध्योर्निपेधो दृश्यते। नामचतुष्टये दशसु निषेधविधिषु पूर्वं द्वन्द्वादिसमासेषु सूत्रत्रितयेन ( २।१।१२ १४ ) सर्वनामकार्यं निषिध्यते। तेन पूर्वापराय, पूर्वापरात्, दक्षिणोत्तरपूर्वाणामित्यादौ स्मायाद्यादेशा न प्रवर्तन्ते। तदग्रे हे कर्तः, हे स्वस इत्यादौ ऋकारस्यारादेश आकारादेशश्च "आ च न सम्बुद्धौ" ( २।१।७० ) इत्यनेन निषिध्यते। 'सखिपति' शब्दयोरग्निसञ्ज्ञायाः प्रतिषेधायोच्यते—"न सखिष्टादावग्निः, पतिरसमासे" ( २।२।१, २ ) इति। एतेन 'सख्या, सख्ये, पत्या, पत्ये इत्यत्र नाकाराद्यादेशा न भवन्ति। पादस्यादौ चादियोगे च वर्तमानाना युष्मदस्मदादीना पदानि वस्नसाद्यादेशा न प्राप्नुवन्त्वित्येतदर्थं "न पादादौ, चादियोगे" ( २।३।४, ५ ) इति सूत्रद्वयेन तदादेशविधिर्निषिध्यते। एतेन—

रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता।
स एव नाथो भगवानस्माकं पापनाशनः ॥,

पुत्रो युष्माकं च पुत्रोऽस्माक चेत्यादौ न वस्नसाद्यादेशा विधीयन्ते। 'तिसृ-चतसृ' इत्यादिष्टशब्दाभ्या नामि परतस्तयोर्दीर्घो निवार्यते—"न नामि दीर्घम्" ( २।३।२७ ) इत्यनेन, अत एव तिसृणा चतसृणामित्यत्र न ऋकारस्य दीर्घो विधीयते। एव षष्ठीनिषेधादिकार्याणि प्रदर्शयताऽऽचार्येणाऽऽख्याताध्यायस्य गुणविध्यात्मके पञ्चमे पादे द्वाविंशतिसूत्रैस्तत्तद्धातुषु गुणकार्यं प्रतिषिद्धम् ( न णकारानुबन्धचेक्रीयितयोः—विजेरिटि ३।५।७-२८ )। एतेन अशिश्रियत्, अपुषदित्यादौ गुणाभावो विज्ञेयः। इडागमात्मके सप्तमे पादे तत्तद्धातूनामिडागमस्य प्रतिषेधः पञ्चविंशतिसूत्रैः कृतः, तेन 'दाता, चेता' इत्यादौ नेडागमः प्रवर्तते ( अनिडेकस्वरादातः–कृञोऽसुटः ३।७।१३-३७ )।

कृत्प्रकरणे षड् विधयो निषिध्यन्ते। तत्र सेटा केषाञ्चिद् धातूनामिञ्चि कृतं कार्यं वार्यते—"न सेटोऽमन्तस्यावमिकमिचमाम्" ( ४।१।३ ) इति। तेन 'अग्रमि, अतमि' इत्यादौ "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" ( ३।६।५ ) इत्यनेनोपधाया दीर्घो न भवति। नञा निर्दिष्टस्यानित्यत्वाद् 'विश्राम.' इत्यत्र दीर्घविधि. प्रवर्तते।

विधिसूत्रविमर्शावसरे निपातनस्य विचारो यद्यपि न समीचीनः प्रतिभाति, विधिनिपातनयोर्भिन्नरूपत्वात्[1]। तथापि तस्य सञ्ज्ञादिकोटावन्तर्भावस्यासम्भवाद् विधिकोटावन्तर्भाव्य तद्विषये किञ्चिद् वक्तु शक्यते। यत् कार्यं सूत्रेण न निर्दिश्यते तन्निपातनविधिना निष्पाद्यते। तदुक्तं च—'यल्लक्षणेनानुत्पन्न तत्सर्वं निपातनात् सिद्धम्' ( कात० वृ० ४।१।२६, २।४५ ) इति। सूत्रेणाप्राप्त किं चाऽऽचार्यव्यवहारेण सिद्ध कार्यं निपातनेन विधीयते इत्यर्थ.। एवमप्राप्ते. प्रापण प्राप्तेश्च वारण निपातनस्य कार्यं भवति। क्वचिन्निपातनबलेन कश्चिद् विशिष्टार्थोऽपि निर्दिश्यते इति निपातन त्रिविधमुच्यते—

[2]अप्राप्तेः प्रापणं चापि प्राप्तेर्वारणमेव वा।
अधिकार्थविवक्षा च त्रयमेतन्निपातनात्॥

( वृ० भा० ४।१।२६, उद्धृतः ) इति।

क्वचिद् विकल्पार्थं[3] रूढ्यर्थं[4] च निपातनमङ्गीक्रियते। एव निपातनेन विविधकार्याणा सम्भवात् प्रदीपकारेण साधूच्यते—"अनेकप्रयोजनसम्पत्तिर्निपातनाद् भवति" ( म० भा० प्र० ६।२।२ ) इति। विधिसूत्रेणैवेष्टसिद्धौ सत्या निपातनकार्यं क्वचित् प्रतिपत्तिरूपगौरव वारयितुमिष्यते। यथा करणाधिकरणयोरपि कर्तृत्वविवक्षाया. सम्भवाद् भुजति, भुनक्ति वेति कर्त्रर्थे भुजशब्दे नाम्युपधलक्षणेन कप्रत्ययेन, न्युब्जयतीतीनन्तात् पचाद्यचि कृते न्युब्जशब्दे सिद्धे तत्सिद्ध्यर्थं यत् 'भुजन्युब्जौ पाणिरोगयोः" ( ४।६।६४ ) इति निपातनसूत्र क्रियते तेनोक्तमेव प्रकल्पयितुं शक्यते। उक्तं च टीकाकारेण—

---

१ विधिनिपातनयोश्चाय भेद—यत्रावयवा निर्दिश्यन्ते समुदायोऽनुमीयते स विधि., यत्र तु समुदाय. श्रूयतेऽवयवाश्चानुमीयन्ते तन्निपातनम् ( म० भा० प्र० ५।१।५९ ) इति। अत एव केचिन्निपातनकार्यं पृथगेव सूत्रविभागे गणयन्ति, तथा चोक्तम्—

अतिदेशोऽनुवादश्च विभाषा च निपातनम्।
एतच्चतुष्टय ज्ञात्वा दशधा सूत्रमुच्यते॥ इति।

२. अकृतस्य क्रिया चैव प्राप्तेर्बाधनमेव वा।
अधिकार्थविवक्षा च त्रयमेतन्निपातनात्॥

( कात० वृ० टी० ४।४।५२ )।

३. ञपेस्तु भरज्ञपिसनामिति विकल्पविधानाद्, यस्य विभाषेति नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं निपातनम् ( कात० वृ० ७।२।२७ )।

४ निपातनं च रूढ्यर्थमिति। तेनाद्यपक्षेऽश्वमेधादौ, द्वितीयपक्षे ज्योतिष्टोमादौ च नातिप्रसङ्ग. ( त० बो० ३।१।११४ )।

अथ प्रकृतित्वमेषा कस्मान्न विज्ञायते? पञ्चम्याः प्रत्ययस्य चानुपादानात्, अनिष्पन्नस्य च प्रकृतित्वाभावात्। प्रत्ययत्व तर्हि कस्मादेषा न भवति? लोके केवलाना प्रयोगदर्शनात् ( म० भा० प्र० ५।१।५९ )।

इमे विंशत्यादयः सप्रकृतिका सप्रत्ययकाश्च निपात्यन्ते, तत्र न ज्ञायते—का प्रकृतिः, क. प्रत्ययः, कः प्रत्ययार्थ इति? ( म० भा० ५।१।५९ )। निपातनाच्च प्रकृतिप्रत्ययादेशकालविशेषो न लभ्यते ( कात० वृ० टी० २।३।३७ )।

"प्रतिपत्तिगौरवनिरासार्थं निपातनम्" ( कात० वृ० टी० ४।६।६४ ) इति। कार्यान्तराणा निपातनकार्यं यद्यपि बाधक भवति, तथापि क्वचिदबाधकमपि सजायते[१]।

निपातनसूत्रेषु क्वचिदर्थनिर्देश क्वचिच्च तदभावो दृश्यते। तत्रेदमवगन्तव्यम्-निपातनविषयस्य[२] प्रदर्शनार्थमर्थनिर्देशः सूत्रेषु क्रियते, पदमात्रस्य निपातनार्थमर्थनिर्देशो नावश्यक इति। वृत्तिकारादेरपि वचनात् क्वचिन्निपातनकार्यं प्रवर्तते[३]।

पाणिनीये क्वचिन्निपातनशब्दे सानुबन्धनिर्देशः[४] कृत.–विशेषप्रयोजनवशात्। कातन्त्रे तु नैव क्वचिद् दृश्यते। पाणिनीये केचित् प्रयोगाः स्वरविशेषप्रदर्शनार्थमपि निपातनेन साध्यन्ते[५]। कातन्त्रव्याकरणस्य वैदिकप्रयोगरहितत्वात् स्वरप्रदर्शनार्थं न केचन प्रयोगा निपात्यन्ते।

## कातन्त्रीयनिपातनसूत्राणां परिचयसामान्यम्

"**सद्यआद्या निपात्यन्ते**" ( २।६।३७ ) इति सूत्रम् 'अस्मिन्नहनि अद्य, इदमोऽद्भावो द्य च परविधि' इत्यादि। परेद्यवीत्यादय केचित् प्रयोगाः प्रत्ययनिपातनस्योदाहरणानि। यथोक्तम्—परस्मिन्नहनि परेद्यवि, परादेरेद्यवि' ( कात० वृ० २।६।३७ ) इति। परमार्थतस्तु प्रत्ययनिपातनस्योदाहरणम्—"**आख्यातात्च तमादयः**" ( २।६।४० ) इति सूत्रम्। निपातनस्येष्टविषयत्वात् आढ्यादिनामशब्देभ्योऽपि तमादिप्रत्यया जायन्ते, यथा—प्रकृष्ट आढ्यः आढ्यतरः, आढ्यतम इत्यादि। सामान्यापेक्षमिद निपातनमुच्यते, अन्यथा 'अस्मिन् ग्रामे आढ्यतरा वणिजो निवसन्ति' इत्यत्र तरप्रत्ययो न स्यात्—तत्र द्वयोरेकस्य प्रकर्षासम्भवात्। निपातनबलात् प्रकृष्टानामपि पुनः प्रकर्षे तरतमौ जायेते, यथा—"**युधिष्ठिरः श्रेष्ठतमः कुरूणाम्**" इत्यादि।

तमादयो द्वाविंशति. प्रत्यया विशेषप्रयोजनवशाद् निपातनेन विधीयन्ते। यथा च्विप्रत्ययस्य निपातनविषयं उच्यते—"**तमादिनिपातनस्येष्टविषयत्वात् कृतसलोपेभ्य एभ्यः कृभ्वस्तिषु च्विप्रत्ययो भवति**" ( कात० वृ० २।६।५८ ) इति।

---

१ अबाधकान्यपि निपातनानि भवन्ति ( सीर० परि०, परि० ७६, पृ० २३९ )।
न निपातनेन क्तिर्बाध्यते इतीष्टिरिति ( कात० वृ० टी० ४।५।७९ )।

२. पाकग्रहण निपातनविषयप्रदर्शनार्थम्, तेन क्षीरहविषोरेव ( का० वृ० ६।१।२७ )।

३. एव पुरस्तादादयश्चानुसर्तव्या., अवोदहिमश्रथप्रश्रथाश्च निपातयितव्या. ( कात० वृ० २।६।३७, ४।१।६५ )।

४. "ऐकागारिकट् चौरे, आकालिकडाद्यन्तवचने" ( अ० ५।२।११२, ११४ )।
टकार. कार्यावधारणाथ —ङीबेव भवति न ञित्स्वर इति ( का० वृ० ५।१।११३ )।

५ ऐक्ष्वाकस्य स्वरभेदान्निपातन पृथक्त्वेन ( म० भा० ६।४।१७४ वा० ) तत्र भिन्नस्वरयोरेकस्मिन् निपात्यमाने परस्यासङ्ग्रहादुभयमपि निपात्यम्। स्वरभेदप्रत्ययस्तमयेन निपातन सर्वस्वर-लौकिकप्रयोगसङ्ग्रहार्थमित्यर्थं ( म० भा० प्र० ६।४।१७४ )।

निपातनबलादेव सलोपस्य सम्भवे सूत्रे सलोपस्योपादानं स्पष्टताप्रतिपादनाय विज्ञेयम्। धेन्वनडुहादय. शब्दा. प्रकृतिनिपातनस्य प्रकृतिविकारनिपातनस्य चोदाहरणानि। रूढिशब्दा एते निपातनादप्रत्ययान्ता. साधवो विज्ञाप्यन्ते ( धेन्वनडुहादयश्च २।६।१०६ )। पाणिनीयेऽपि एतेषु केषाञ्चिच्छब्दाना साधनार्थं निपातनविधिराश्रीयते ( अचतुरविचतुर गोष्ठश्वा. ५।४।७७ )। "द्विषत्परयोस्तापेः, वाचि यमो व्रते, पूःसर्वयोर्दारिसहोः" ( अ० ३।२।३९-४१ ) इति सूत्रत्रितयेन यत् कार्यं महर्षिपाणिनिना निर्दिष्टम्, तल्लाघव प्रदर्शयता "पुरन्दरवाचयमसर्वंसहद्विषन्तपाश्च" ( ४।१।२६ ) इत्येकेनैव निपातनसूत्रेण साधितम्। एते पुरन्दरादय. शब्दा अणप्रत्ययान्ताः कातन्त्रे निपात्यन्ते। अणि प्रत्यये प्राप्त ह्रस्वादिकार्यं निपातनबलात् प्रवर्तते। अत्राणप्रत्ययस्य प्रकरणाभावेऽप्येतेषामणप्रत्ययान्तत्व वृत्तिकारादिभिर्व्याख्यानबलादुच्यते। स्यन्दधातोर्घञि परतो नलोपस्ततो दीर्घाभावश्च वेगेऽर्थे निपात्यते, तेन 'स्यदः' इति रूप निष्पद्यते ( स्यदो जवे ४।१।६५ )। अत्र वृत्तिकारेण 'अवोद-हिमश्रथ-प्रश्रथ' इत्येते छान्दसा अपि प्रयोगा मतान्तरप्रदर्शनाय निपात्यन्ते ( अवोदहिमश्रथप्रश्रथाश्च निपातयितव्याः-वा० )। कश्चिच्छब्दो निपातनबलादनेकप्रकारेणापि साध्यते, यथा सूर्यशब्दः कर्तर्यर्थे सृधातो. सूधातोर्वा व्युत्पाद्यते ( सूर्यरुच्याव्यथ्याः कर्तरि ४।२।३० )। यद्यपि सञ्ज्ञाशब्दा निपातनशब्दाश्चापि प्रायेण रूढा भवन्तीति निपातनविधौ सञ्ज्ञार्थनिर्देशेन पौनरुक्त्यमिव प्रतिभाति, तथापि सञ्ज्ञार्थे एवेष्टं निपातन स्याद् असञ्ज्ञार्थे मा भूदिति निर्धारणार्थं सञ्ज्ञानिर्देश. क्रियते इत्यवगम्यते। यथा "कृष्टपच्यकुप्ये सञ्ज्ञायाम्" ( ४।२।३४ ) इत्यनेन 'कृष्टपच्य-कुप्य' शब्दौ व्रीहि-धातुविशेषरूपसञ्ज्ञार्थे एव निपात्येते। अन्यार्थे तु 'कृष्टपाक्य-कोप्य' इत्येतद्द्वयं शब्दरूप जायते।

अत्र सूत्रेष्वनिर्दिष्टाना शब्दाना साधनार्थं व्याख्याकारैः 'च-अपि-तु' इत्येतेषा शब्दानामधिकारः समाश्रीयते। उच्यते चापि—

वाशब्दैश्चापिशब्दैर्वा शब्दानां ( सूत्राणाम् ) चालनैस्तथा।
एभिर्येऽत्र न सिध्यन्ति ते साध्या लोकसम्मताः॥
( द्र०—कवि० १।१।२३ ) इति।

### विधौ किञ्चिद् वैशिष्ट्यम्

१—"औरिम्" ( कात० २।१।४१ ) इत्यनेन श्रद्धायाः परस्यौकारस्य इकारादेशे कृते जराशब्दाद् 'जरे' इति रूपम्। परत्वादन्तरङ्गत्वाच्च पूर्वमेव जरसादेशे कृते जरसाविति रूपम्, पक्षे 'जरे' इति। परमते तु जरसादेशं प्रति सन्निपातपरिभाषाया बाधितत्वाद् औकारस्येकारे जराशब्दस्य जरसादेशे च जरसीति रूपम्, जरसादेशाभावे तु 'जरे' इति रूप भवति।

२—"ङस् स्यः" ( कात० २।१।२२ ) इति व्याख्याने कविराजः शर्ववर्माचार्यस्य विशेषाभिप्रायं विज्ञापयति—"यद् वा इन टा, भिसैस् वा, ङ्यः, ङसिरात्, ङस् स्य

इति क्रमिकपाठ एव युक्तः, कथं व्यतिक्रमः ? तद् बोधयति-क्वचिद् व्यञ्जनान्ता-दुकारान्ताच्च स्यादिति" इति, तेन अतिजरस्य, भिक्षुष्येत्यादिप्रयोगा निष्पद्यन्ते।

३—कार्यिकार्यनिमित्तरूपक्रमस्योपन्यासेऽपि "अर् ङौ" (कात० २।१।६६) इत्यत्र महर्षिवररुचिः 'अर्' इत्यस्य प्राङ् निर्देशाद् योगविभागं मन्यते। तेन 'पितरस्तर्पयामास' इत्यादि सिध्यति (द्र०—कवि० २।१।६६)।

४—"तस्माद् भिस् भिर्" (कात० २।३।३८) इति। अत्र एनादेशविधायक-सूत्रस्याव्यवहितपूर्वत्वादेतच्छब्दस्यानुवृत्तौ प्राप्तायामिदंशब्दस्यानुवृत्त्यर्थं 'तस्माद्' ग्रहणम्। सन्निपातपरिभाषाया वर्णग्रहणे निमित्तत्वादिदमोऽकारे कृते भिस ऐसादेशस्य बाधो न भविष्यति। अन्ये त्वाहुः—एनादेशविधायकसूत्रस्यानावश्यकतया प्रकरणादिदमोऽनुवृत्ति-र्भविष्यतीति 'तस्माद्' ग्रहणम् "अद् व्यञ्जनेऽनक्" (कात० २।३।३५) इति सूत्रस्या-नित्यताज्ञापनार्थमुपात्तमिति। उदाहरन्ति च—'इमैर्गुणैः सप्तर्षयः स्वर्गं गताः' इति।

५—"विरामव्यञ्जनादावुक्तं नपुंसकात् स्यमोर्लोपेऽपि" (कात० २।३।६४) इत्यत्रापिग्रहणं व्यभिचारार्थम्, तेन इदमोऽत्वं न भवतीति।

६—"का त्वीषदर्थेऽक्षे" (२।५।२५) इति। 'तुशब्दग्रहणं पादपूरणार्थम्, ईषदर्थे का त्वक्ष इति कर्तव्ये यदीषदर्थे इति वचनं मध्ये तद् बोधयति—योगोऽत्र विभक्तव्य इति। तेनेषदर्थस्य पूर्वेण सिद्धत्वात् कुत्सितार्थस्य कादेशः सिद्धो भवति—कुत्सितमक्षं काक्षम्, तेन वीक्षते इत्यर्थः' (कात० वृ० टी०) इति।

७—"वाऽणपत्ये" (कात० २।६।१) इत्यत्र ह्रस्वस्यापत्यशब्दस्य साहचर्याद् ह्रस्वादिरेवाण्प्रत्ययो विधीयते न तु दीर्घ इति कविराजः। अपत्यशब्दस्य सम्बन्धिशब्दत्वाद् यस्य तदपत्यं तत एवापत्यार्थकः प्रत्ययोऽपि भविष्यतीति कृत्वा "तस्यापत्यम्" (अ० ४।१।९२) इति पाणिनिसूत्रे 'तस्य' इति करणं निरर्थकं मन्यते।

८—अपाक्षीद्, अवादीदित्यादौ पाणिन्युक्ता वृद्धिर्न विधीयते, किञ्च दीर्घः क्रियते।

९—'गुणी क्त्वा सेडरुदादिक्षुधकुशक्लिशगुधमृडमृदवदवसग्रहाम्" (४।१।६) इत्यनेनारुदादिक्षुधादीनां धातूनां गुणो भवति, यदि तत्र सेट् क्त्वाप्रत्ययो वर्तते। यथा—शयित्वा, देवित्वेत्यादि। अत्र विचार्यते–गुणी सेडित्यादिरूपेऽपि सूत्रे कृते कार्यसिद्धिः सम्भाव्यते। 'निगुदितः' इत्यादौ निष्ठाप्रत्यये गुणो न भविष्यति—"शीङ्-पूङ्धृषिक्ष्विदिस्विदिमिदां निष्ठा सेट्" (४।१।१५) इत्यनेन शीङादीनामेव सेड् निष्ठा गुणीत्यादिनियमस्य विधानात्। 'जग्मिव, जघ्निव' इत्यादौ परोक्षायां गुणे क्रियमाणे "गमहनः" (३।६।४३) इत्यादिनोपधालोपो न भविष्यतीति चेद् न, "नाम्यन्तानाम-निटाम्" (३।५।१७) इत्यत्रानिड्ग्रहणात्। अनिड्ग्रहणं शिश्रयिषतीत्यत्र सेट्सनो गुणित्वार्थं क्रियते, तच्चानेनैव सूत्रेण सिद्धं स्यात्, किमर्थमनिड्ग्रहणम् ? कृतं तद् विज्ञपयति-नाम्यन्तानामनिटां सन्यगुणविधानादाख्यातप्रकरणेऽपि परोक्षायां न गुण इति।

जग्मिवान्, जघ्निवानित्यादौ क्वन्सुप्रत्यये कानुबन्धबलात् ( कानुबन्धे कृति प्रत्यये परे यण्वत्कार्यविधानात्, के यण्वच्च योक्तवर्जम् ४।१।१ ) गुणाभावे "गमहनविदविशदृशां वा" ( ४।६।७७ ) इत्यनेनेडागमे स्वरादावगुणे प्रत्यये परत उपधालोप. स्यादेवेति क्वन्सु-प्रत्यये गुणस्य सम्भावनायामुपधालोपाभावोऽपि भवितु नार्हति। तृजादिप्रत्ययाना गुणित्वे सत्यपि तृजादीना सेटामेव गुणित्वमिति नियमेऽङ्गीकृते कर्तेत्यादौ गुणो न स्यादिति तु वक्तु न शक्यते, विधिनियमसम्भवे विधेरेव ज्यायस्त्वात्। एव क्त्वाग्रहणस्य फल निकुचिति-रित्यादौ क्तिन्प्रत्यये गुणाभावः। एतदेव सग्रह्योच्यते—

सेड् गुणीति कृते योगे निष्ठायामवधारणात्।
आख्याते न परोक्षायामगुणादनिटां सनि॥
कानुबन्धबलादेव क्वन्सौ च प्रत्यये किल।
गुणिनां च गुणो नास्ति निकुचितिः प्रयोजनम्॥ इति।

## विकल्पकार्यविधायकानि सूत्राणि

( विभाषाशब्दनिर्देशेन )

१—पुरुषे तु विभाषया ( २।५।१६ )।

२—विभाष्येते पूर्वादेः ( २।१।२८ )।

( नवाशब्दनिर्देशेन )

१—अयादीना यवलोपः पदान्ते नवा लोपे तु प्रकृतिः ( १।२।१६ )।

२—कखयोर्जिह्वामूलीय नवा ( १।५।४ )।

३—तेभ्य एव हकारः पूर्वचतुर्थं नवा ( १।४।४ )।

४—पञ्चमे पञ्चमास्तृतीयान्नवा ( १।४।२ )।

५—पफयोरुपध्मानीय नवा ( १।५।५ )।

६—वर्गप्रथमेभ्यः शकार. स्वरयवरपरश्छकारं नवा ( १।४।३ )।

( वाशब्दनिर्देशेन )

१—अद्यतन्या स्वरान्तश्च वा ( ३।२।८-१७ )।

२—अपरो लोप्योऽन्यस्वरे य वा ( १।५।६ )।

३—अभिव्याप्तौ सम्पद्यतौ च सातिर्वा ( २।६।४०-१६ )।

४—अमावस्या वा ( ४।२।४५ )।

५—अलखल्वोः प्रतिषेधयोः प्राचा क्त्वा वा ( ४।६।१ )।

६—अल्पादेर्वा ( २।१।३१ )।

७—इचि वा ( ३।४।६६ )।

८—इवन्तर्धभ्रस्जदन्भुश्र्यूर्णुभरज्ञपिसनितनिपतिदरिद्रा वा ( ३।७।३३ )।

९—ईङयोर्वा ( ३।२।५४ )।

१०—उकारलोपो वमोर्वा ( ३।४।३६ )।
११—उषविदजागृभ्यो वा ( ३।२।२० )।
१२—कुमहद्भ्यां वा ( २।६।८७ )।
१३—कृवृषिमृजाम् ( ४।२।२९ )।
१४—गमहनविदविशदृशां वा ( ४।६।७७ )।
१५—ग्रहेर्वा ( ४।२।५६ )।
१६—चेः किर्वा ( ३।६।३२ )।
१७—जरा जरस् स्वरे वा ( २।३।२४ )।
१८—जिघ्रतेर्वा ( ३।५।४८ )।
१९—तृतीयादीनां वा ( ४।२।६ )।
२०—दिशां वा ( २।१।३६ )।
२१—द्वितीयातृतीयाभ्यां वा ( २।१।४४ )।
२२—धनुर्दण्डत्सरुलाङ्गूलाङ्कुशयष्टितोमरेषु ग्रहेर्वा ( ४।३।१५ )।
२३—धातोर्वा तुमन्तादिच्छतिनैककर्तृकात् ( ३।२।४ )।
२४—नपुंसके वा ( २।६।११९ )।
२५—नृ वा ( २।३।२८ )।
२६—पथो वा ( २।६।१३७ )।
२७—बह्वल्पार्थात् कारकाच्छस् वा मङ्गले गम्यमाने ( २।६।४८ )।
२८—बृहे स्वरेऽनिटि वा ( ४।१।६८ )।
२९—भावादिकर्मणोर्वा ( ४।६।९२ )।
३०—भावादिकर्मणोर्वोदुपधात् ( ४।१।१७ )।
३१—भिसैस् वा ( २।१।१८ )।
३२—मुहादीनां वा। ( २।३।४९ )।
३३—ये वा ( ४।१।७२ )।
३४—रुहेर्धो वा ( ४।६।७२ )।
३५—वर्गे तद्वर्गपञ्चमं वा ( १।४।१६ )।
३६—वर्षप्रमाणे ऊलोपश्च वा ( ४।६।१४ )।
३७—वा कृति रात्रेः ( ४।१।२८ )।
३८—वा खारी ( २।६।७३-११ )।
३९—वाच्छाश्योः ( ४।१।७७ )।
४०—वा ज्वलादिदुनीभुवो णः ( ४।२।५५ )।
४१—वाऽणपत्ये ( २।६।१ )।
४२—वा तृतीयासप्तम्योः ( २।४।२ )।

४३—वा नपुंसके ( २।२।३० ) ।
४४—वा परोक्षायाम् ( ३।४।८०,९० ) ।
४५—वा प्रस्त्यो मः ( ४।६।११२ ) ।
४६—वाम्यवाम्याम् ( ४।१।४८ ) ।
४७—वा मः ( ४।१।६१ ) ।
४८—वाम्या ( २।२।२७ ) ।
४९—वा रुष्यमत्वरसंघुषास्वनाम् ( ४।६।९८ ) ।
५०—वावे वर्षप्रतिबन्धे ( ४।५।२८ ) ।
५१—वा स्वरे ( ३।६।९९ ) ।
५२—व्यञ्जनादेर्व्युपधस्यावो वा ( ४।१।११ ) ।
५३—शासुयुधिदृशिधृषिमृषा वा ( ४।५।१०५ ) ।
५४—शिन्चौ वा ( १।४।१३ ) ।
५५—श्वयतेर्वा ( ३।४।१२ ) ।
५६—शे षे से वा वा पररूपम् ( १।५।६ ) ।
५७—सनस्तिकि वा ( ४।१।७३ ) ।
५८—समासान्तगताना वा राजादीनामदन्तता ( २।६।४१ ) ।
५९—सम्परिभ्या वा ( ४।१।५१ ) ।
६०—सौ च मघवान् मघवा वा ( २।३।२३ ) ।
६१—स्त्र्याख्याावियुवौ वामि ( २।२।४ ) ।
६२—स्वनहसोर्वा ( ४।५।४६ ) ।
६३—ह्रीघ्रात्रोन्दनुदविन्दा वा ( ४।६।११० ) ।

इति कान्तन्त्रव्याकरणविमर्शाभिधे शोधप्रबन्धे
सप्तमाध्यायान्तर्गतो विधिसूत्रविमर्शः ।

—:०:—

# नियमसूत्रालोचनम्

## नियमस्यार्थः, व्याकरणमीमांसाशास्त्रयोर्नियमस्य स्वरूपम्

नियमनमिति नियमः। मीमासकमते पाक्षिकाप्राप्तिस्थले यद् विधीयते तन्नियम-शब्देनोच्यते[१]। यस्य पाक्षिकी अप्राप्तिस्तस्याप्राप्तांशपूरणात्मको विधिर्नियमविधिरित्यर्थः। यथा—व्रीहीनवहन्तीति। अत्र व्रीहयस्तुषरहिता यथा स्युस्तदर्थमवघातरूप साधनमुपादीयते। परमवघात परित्यज्य यदा कश्चित् पुरुष उपायान्तर ग्रहीतुमिच्छति तदाऽवघातरूपोपायस्या-प्राप्तत्वेन तद्विधानरूपाप्राप्तांशस्यानेन निर्देशेन पूर्तिः क्रियते इति वाक्येऽस्मिन् नियमः परिज्ञायते। अवघातनिष्पन्नतण्डुलकृतेन पुरोडाशेन विहित यागकर्मापूर्वस्य साधकं भवति न तु नखविदलनादिनिष्पन्नतण्डुलकृतेन पुरोडाशेनेति नियमविधेः फलमवगन्तव्यम्[२]। पर व्याकरणे मीमासकादृतो नियमो न गृह्यते किं च परिसङ्ख्या नियमशब्देन व्यवह्रियते[३]। युगपत् प्राप्तिस्थले यद् विधीयते तत् परिसङ्ख्यापदवाच्यमुच्यते[४]। यथा—'पञ्च पञ्चनखा भक्ष्याः[५]' इति। क्षुत्प्रतिघातार्थं रागतः प्राप्तत्वादिद वाक्यं न भक्षणविधिपरम्, पञ्चनखाना तद्व्यतिरिक्ताना च भक्षणस्य युगपत् प्राप्तेः। तेन पक्षे प्राप्त्यभावान्नापि नियमपरम्। एवं परिगणितपञ्चातिरिक्तपञ्चनखभक्षणनिवृत्तिरनेन वाक्येन बोध्यते इति परिसङ्ख्याविधिरत्र[६]

---

१. नियमः पाक्षिके सति ( मी० श्लो० वा० )।

२. व्रीहीनवहन्तीति च नियमः पक्षे तदप्राप्तेः ॥
नखविदलनाद्युपायैरपि वैतुष्यं हि सम्भवति।
तत्पक्षेऽवहननप्राप्तमतस्तद्विधानमेतेन ॥
( परि० प्र०, तृ० प०, का० २७२, २७३ )।

३. अत्र तु नियमपदेन परिसङ्ख्या ( परि० प्र०, तृ० प०, का० २७५ )।

४. तत्र चान्यत्र च प्राप्ते परिसङ्ख्येति गीयते ॥
( मी० श्लो० वा० )।

५. पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव!
शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चमः ॥
( वा० रा० ४।१७।३७ )।

मनुस्मृतिकारोऽत्र खड्गमपि परिगणयति—
श्वाविध शल्यकं गोधा खड्गकूर्मशशांस्तथा।
भक्ष्यान् पञ्चनखेष्वाहुः——————॥
( ५।१८ )।

६. परिसङ्ख्या पञ्चनखा भक्ष्या पञ्चेति विज्ञेया।
पञ्चनखापञ्चनखाशनस्य रागात् प्रसक्तत्वात् ॥
वचनमिद परिगणितेतरपञ्चनखाशननिवृत्तौ।
इति जैमिनीयसमयः——————॥
( परि० प्र०, तृ० प०, का० २७४, २७५ )।

विज्ञेय.। यथा पाणिनीये "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" (अ० १।२।४५) इति सूत्रेण समासस्य वाक्यस्य चार्थवतः प्रातिपदिकसञ्ज्ञाया. प्राप्तौ सत्या "कृत्तद्धितसमासाश्च" ( अ० १।२।४६ ) इत्यनेन समासस्थाने सा नियम्यते। अत्र विकल्पेन प्रातिपदिकसञ्ज्ञायाः प्राप्तेरभावान्मीमासकमते परिसङ्ख्यैव स्वीक्रियते।

व्याकरणे विधिनियमसम्भवेऽपूर्वो विधिरेव ज्यायान् मन्यते। यथा "यस्य हलः" ( अ० ६।४।४९ ) इत्यत्र यस्येति सङ्घातपक्षे प्राप्तोऽन्त्यस्य[1] लोपः "अतो लोपः" ( अ० ६।४।४८ ) इत्यनेनैव सिद्धत्वात् ( अनुवृत्त्या ) वार्यते, तेनास्य सूत्रस्य सामर्थ्याद् विधायकत्वमुपपद्यते। 'अत्र' इत्यनुवर्त्य हलः परस्यैव यशब्दस्यातो लोप इति प्रक्रियया नियामकत्वमपि सम्भाव्यते। एवं विधिनियमयो. सम्भवाद् विधिरेवाङ्गीक्रियते न नियम.। विधेयासम्भवे एव नियम. समाद्रियते। अत्र तु सर्वलोपरूपविधेयस्य सम्भवे सति नियमो नोपपद्यते।

नियमसूत्राणा द्विधा प्रवृत्तिर्दृश्यते—विधिमुखेन निषेधमुखेन चेति। तत्र विधिमुखेन प्रवृत्तौ सत्यामन्यस्य निवृत्तिः, विधानसामर्थ्याच्छब्देन साक्षादप्रतिपादिता, पूर्वोक्तस्य विशेषेणाभिधानाय पुन. कथनानुवादश्चैते त्रयो दोषा. सम्भवन्ति। निषेधमुखेनापि प्रवृत्तौ श्रुतस्य हानिः, अश्रुतस्य कल्पना, प्राप्तस्य बाधश्चेति त्रयो दोषाः समुपतिष्ठन्तीति सम्भवति विधौ नियमो नाङ्गीक्रियते, अगत्या तु अङ्गीक्रियते एव[2]।

एव व्याकरणे विधीना नित्यप्रवृत्तौ सत्यां येन नियम्यते स नियमोऽङ्गीक्रियते ( द्र०—कवि० १।१।१ )। सामान्यप्राप्तस्य विशेषावधारणं नियमः इत्यर्थः। स च नियमो द्विविधो दृश्यते—प्रकृतिनियमः प्रत्ययनियमश्चेति। अयं च प्रकृतिप्रत्ययनियम एवशब्दस्य प्रयोगेणावगम्यते। यत्र प्रत्ययात् परमेवशब्दः पठ्यते तत्र प्रकृतिनियमः, यत्र प्रकृतेः परं पठ्यते तत्र प्रत्ययनियमो जायते[3]। परमेष नियमविधि प्रायिक एवेति विज्ञेयम्। अन्यथा "इणोऽनुपसृष्टस्य" ( ३।४।७१ ) इत्यत्राऽऽशिषि अनुपसृष्टस्यैवेणो धातोर्दीर्घः प्रवर्त्स्यते इति नियमाकारे प्रकृत्युत्तरमुपात्तनैवशब्देन प्रत्ययनियमः स्यात् ( द्र०—वि० ३।४।७१ )। नियमे कस्यचिन्निषेधस्तात्पर्यवशादवगम्यते।

## कातन्त्रीयनियमसूत्राणां क्रमेण कश्चिद् विमर्शः

"सिद्धो वर्णसमाम्नायः" ( १।१।१ ) इति सूत्रस्य नियमत्वं ससाधयता श्रीसुषेणविद्याभूषणेनोक्तम्— प्रसिद्धाप्रसिद्धभेदेन द्विविधो वर्णसमाम्नाय उपस्थितः। प्रसिद्धः =लोके प्रचलितः, अप्रसिद्धः ='अ इ उ ण्, ऋ लृ क्' इत्यादिप्रत्याहाररूपेण पठितः। तत्र लोके प्रसिद्ध एव वर्णसमाम्नायोऽत्र व्याकरणे समादरणीय इत्यप्रसिद्ध प्रबाध्य प्रसिद्धस्य नियमनात् सूत्रस्यास्य नियमत्वमवगम्यते। एतेन यद्यपि "तत्र चतुर्दशादौ स्वराः" ( १।१।२ )

---

१. अलोऽन्त्यस्य ( अ० १।१।५२ )।

२. अन्यथा सम्भवति विधौ नियमोऽनुचितोऽन्यथा त्वगत्या स. ( परि० प्र०, वृ० प०, का० २७९ )।

३. द्र०—व्या० द० इति०, पृ० २७९।

इत्यादीनामपि नियमत्वं सम्भवति, अजादिसञ्ज्ञाना निवर्तनात् स्वरादिसञ्ज्ञाना च विधानात्। परं सर्वेषा वाक्यानामवधारणफलकत्वादत्र नियम एवाङ्गीकर्तव्यः। यद्यनेन वचनेन वक्ष्यमाणाना सर्वेषा सूत्राणा नियमत्वं सम्भाव्यते इति कश्चिद् वक्तु प्रभवेत् तर्हीदमवगन्तव्यम्—अन्येषा साक्षात् सञ्ज्ञादिभिर्विशेषवचनैरवाघ्रातत्वान्न नियमत्वं किं च सञ्ज्ञादित्वमेव निर्धार्यते इति। नियमेन किञ्चित् प्रतिषिध्यते तेन यद्यपि निषेधोऽपि नियमो भवितुमर्हति, तथापि यत्र साक्षान्निषेधोऽवगम्यते तत्र निषेध., यत्र तु तात्पर्यवशादेव गम्यते तत्र नियम इत्यनयोर्भेदो विज्ञेयः। परिभाषयाऽपि कस्यचिद् विधेर्नियमनात्[१] तस्या नियमत्वं सम्भवति, तथापि विधीना पाक्षिकप्रवृत्तौ यया नियम्यते सा परिभाषा भवति, यथा "गुप्-तिज्किद्भ्यः सन्" ( ३।२।२ ) इत्यनेन विहित. सन्नादिः कदाचिद् गुपादेः पार्श्वतः पृष्ठतो वा प्राप्तस्तदा "प्रत्ययः परः" ( ३।२।१ ) इत्यनेन तस्य परत्वं नियम्यते, एतेन "प्रत्यय परः" ( ३।२।१ ) इत्यस्य परिभाषात्वं गम्यते। विधीनामनैयत्येन प्रवृत्तौ सत्या येन नियम्यते स नियम इति कविराजेनोच्यते, यथा—"पञ्चादौ घुट्" ( २।१।३ ) इत्यनेन नित्य सर्वस्मिन्नेव लिङ्गे घुट्त्वप्राप्तौ सत्या "जश्शसौ" ( २।१।४ ) इत्यनेन नियम्यते इति तस्य नियमत्वमायातीति।

"तेभ्य एव हकारः पूर्वचतुर्थं न वा" ( १।४।४ ) इत्यत्रैवशब्दो नियमं द्योतयति। केचिद् वैयाकरणा वर्गीयतृतीयादपि वर्णात् परस्य हकारस्य पूर्वचतुर्थवर्णत्वं विदधति तन्मा भूदिति विशेषाभिप्राय द्योतयितुमेवग्रहण क्रियते। एतेन वर्गप्रथमेभ्य एव परस्य हकारस्योक्त आदेशः प्रवर्तते।

"पञ्चादौ घुट्" ( २।१।३ ) इत्यनेन 'सि, औ, जस्, अम्, औ' इत्येतेषा पञ्च-वचनाना घुट्सञ्ज्ञाया कृताया "जश्शसौ नपुंसके" ( २।१।४ ) इत्यनेन जस्प्रत्ययस्य यत् पुनर्घुट्सञ्ज्ञा निर्दिश्यते तन्नियमार्थं विज्ञेयम्—"सिद्धे सत्यारम्भो विधिर्नियमाय विकल्पाय ज्ञापकाय वा" ( कात० परि० सू० ६२ ) इति न्यायबलात्। नपुसके जसेव घुट्सञ्ज्ञको भवतीति नियमाकार., एतेन प्रकृतिनियमोऽत्र विज्ञेयो न तु नपुसके एव जसित्याकारः प्रत्ययनियमः, अन्यथा "घोषवन्तोऽन्ये" ( १।१।१२ ) इत्यत्र पुंलिङ्गे जसो घुट्त्वाभावाद् अनुषङ्गलोपः स्यात्। उक्तनियमेन वारिणी, जतुनीत्यादौ नपुसके 'औ' प्रत्ययस्य घुट्त्वाभावाद् "घुटि चासम्बुद्धौ" ( २।२।१७ ) इत्यनेन दीर्घो न भवति[२]।

क्वचिन्नियमविधेः समादरणाय योगविभागः क्रियते, यथा "ह्वयतेर्नित्यम्" ( ३।४।१४ ) इति। अनेन जुहावयिषति, अजूहवदित्यादौ सम्प्रसारणं विधीयते।

---

१. अनियमे नियमकारिणी या सा परिभाषा ( कवि० १।१।१ )।

२. बङ्गीयैर्बालैरेवमस्य नियमत्वमुच्यते—

सोन रे भाई राजाराम, शर्ववर्मार एइ काम।

जसेर आछे घुट्सञ्ज्ञा पूर्वसूत्र बले, तबे केन एइ सूत्र जस्ग्रहण दिले।

जस्ग्रहण हय भाई नियम कारण, वारिणी जतुनीस्थले दीर्घनिवारण॥

"अभ्यस्तस्य च" ( ३।४।१५ ) इत्यग्रिमसूत्रेण जुहावेत्यादावस्य धातोरन्तस्थायाः सम्प्रसारण क्रियते। अत्रोच्यते—"ह्वयतेर्नित्यम्, अभ्यस्तस्य च" इत्येवंरूपमेकमेव सूत्रं क्रियताम्—जुहावयिषति, अजूहवदित्यादावप्यभ्यस्तत्वसत्त्वादिति। अत्रेद विज्ञेयम्—यदि पुनर्द्विर्वचननिमित्तप्रत्ययव्यवहिते सम्प्रसारण भवति तदा कारितेनैव ( णिच् ) व्यवहिते[1] यथा स्यात्, अन्यव्यवहिते मा भूत्। तेन ह्वायकयितुमिच्छति जिह्वायकयिषतीत्यादौ वुणादिप्रत्ययेन व्यवहिते न भवति, एतेन योगविभागादेवात्र नियम आयातीति।

सूत्रे क्वचिदेकमपि पद किञ्चिन्नियमयति, यथा "दास्त्योरेऽभ्यासलोपश्च" ( ३।४।५० ) इत्यत्राभ्यासग्रहणेनेद नियम्यते–सर्वस्यैवाभ्यासस्यात्र लोपो भविष्यतीति। अन्यथाऽभ्यासग्रहणे "वर्णान्तस्य विधिः" ( कात० परि० ५ ) इति न्यायेनान्तस्यैव लोपेन भाव्यम्। इदमवधेयम्–अन्त्यस्यैव यदि लोप इष्टः स्यात् तर्हि अलोपस्यैव निर्देशः समीचीनः स्यात्—अत्राभ्यासान्तेऽकारमन्तरेणान्यस्य कस्यचिद् वर्णस्यासम्भवात्।

ईयात्, ईयास्तामित्यादावाशिषि ये परतः "नाम्यन्तानां यणायियिनाशीश्च्वि-चेक्रीयितेषु ये दीर्घः" ( ३।४।७० ) इत्यनेनैवेकारस्य दीर्घे सिद्धे तदर्थं यत् "इणोऽनुप-सृष्टस्य" ( ३।४।७१ ) इत्यपर सूत्र क्रियते तन्नियमयति–आशिषि ये परतोऽनुपसृष्टस्यैवेणो धातोर्दीर्घः स्यादिति। तेन अन्वियादित्यादौ न दीर्घः। अत्र सूत्रे पूर्वसूत्रादव्यवहितमाशी-रित्येव पदमनुवर्तते न तु व्यवहित यणित्यादि। तस्येष्टायामनुवृत्तावाशिषः समीपमेव यण पठेत्। यद्यपि च्वि-चेक्रीयित-( =यङ् ) प्रत्ययाभ्यामाशीरित्यपि पदं व्यवहित तथापि च्विरिति लिङ्ग–( प्रातिपदिक ) प्रत्ययो धातोर्न सम्भवति, चेक्रीयितस्यापि व्यञ्जनादि-विहितस्येणो विहितत्वात् स्वरादेर्न प्रवृत्तिः। 'यिन्-आयि' इत्येतावपि लिङ्गप्रत्ययाविति नात्र तयोरनुवृत्तिः शक्यते।

उक्ते नियमाकारे प्रधानत्वादनुपसृष्टपदस्य समीपे कथमेवशब्द उपादीयते न तु प्रधानस्येण. समीपे इत्याशङ्कायामिदमवगन्तव्यम्—विधिनिषेधौ सविशेषणे एव प्रवर्तेते इति सविशेषणे नियमे प्रक्रान्ते विशेषणस्यैव ( विशेषाधायकत्वेन ) प्रधानत्वाद् विशेषणे एव-शब्दो योजित इति ( द्र०—वि० ३।४।७१ )।

'रोचते' इत्यादौ "नामिनश्चोपधाया लघोः" ( ३।५।२ ) इत्यनेन, भवतीत्यादौ च "नाम्यन्तयोर्धातुविकरणयोर्गुणः" ( ३।५।१ ) इत्यनेन गुणे सिद्धे यद् "अनि च विकरणे" ( ३।५।३ ) इत्यनेनात्र पुनर्गुणो विधीयते तेनेदं नियम्यते—विकरणे यदि गुणः स्यात् तर्हि अन्येव स्यादिति। अन्शब्दोपादानादयं नियमो विज्ञायते।

समीधे, श्रेथतुरित्यादौ "अनिदनुबन्धानामगुणेऽनुषङ्गलोपः" ( ३।६।१ ) इत्यनेनैवानुषङ्गस्य लोपे सिद्धे "परोक्षायामिन्धिश्रन्थिग्रन्थिदन्भीनामगुणे" ( ३।६।३ )

१. द्विर्वचननिमित्ते कारितव्यवधाने एव यथा स्यादिति वचनम् ( कात० वृ० ३।४।१४ )।

इति सूत्रस्य विधान नियमयति—अगुणे परोक्षायामनुषङ्गस्य लोपो भवन् इन्ध्यादीनामेव स्यादिति। तेन 'सस्रसे, बभञ्जतुः' इत्यादावनुषङ्गस्य लोपो न भवति।

**"सणोऽलोपः स्वरेऽबहुत्वे"** ( ३।६।३३ ) इत्यनेनैव लोपस्यानुवृत्तौ सत्या **"नलोपश्च"** ( ३।६।४६ ) इत्यत्र पुनर्लोपग्रहणेन तत्रापि च बहुव्रीहिणा नियम्यते—यिन्नाय्योर्नलोप एव करणीय इति। यद्यत्र नस्य लोप इति तत्पुरुष· समाश्रीयेत तदा विधिरेव प्रतिपद्येत न नियम·। विद्वस्यति, राजीयतीत्यादौ नलोपः प्रवर्तते। विधौ सति तु अग्नीयति, धनीयतीत्यादावपि नलोपः प्रसज्येत। नियमेन दिवमिच्छतीति यिनि कृते **"दिव उद् व्यञ्जने"** ( २।२।२५ ) इति वकारस्योत्व निवर्त्यते, सर्पिष्यतीत्यादौ च रत्वम्।

'ऊर्णुञ्' धातोर्गुणविधानाय **"ऊर्णोतेर्गुणः"** ( ३।६।८५ ) इति सूत्रे कृतेऽपि ह्यस्तन्या ( लङि ) गुणविधानाय यत् पुनः **"ह्यस्तन्यां च"** ( ३।६।८६ ) इति सूत्र क्रियते तत् किञ्चिद् वैशिष्ट्यं प्रदर्शयति। यथोक्तम्—

पूर्वसिद्धं तु यत् कार्यं पुनरारभ्यते विधौ।
पूर्वकार्यव्युदासाय विशेषार्थं च तद् भवेत्॥
( कात० वृ० टी० ३।६।८५ उद्धृतः ) इति।

एतेन **"ह्यस्तन्यां च"** ( ३।६।८६ ) इति सूत्र नियमयति—ह्यस्तन्यामूर्णुञ्धातोर्नित्य गुणो भवति, अन्यत्र सार्वधातुके सूत्रारम्भसामर्थ्याद् विकल्पेन भवतीति। अत एवोक्त वृत्तिकारेण—**"परयोगेणात्र वा गम्यते"** इति। व्याख्यातं चैतत् पञ्जीकारेण—**"वक्ष्यमाण-**वचन नियमार्थम्, ऊर्णोतेर्ह्यस्तन्यामेव गुणो नान्यस्मिन् सार्वधातुके इति। अयं गुणो व्यावृत्यते तथा एतद्वचनाच्च प्रवर्तते इत्यर्थाद् विकल्पः सिद्धः इत्याह—परयोगेणात्र वा गम्यते" इति।

**"उतोऽयुरुनुस्नुक्षुक्ष्णुवः"** ( ३।७।१५ ) इत्यनेन स्नुधातु विहायेट्प्रतिषेधस्य विधानात् स्नुधातो· प्रतिषेधाभावात् क्रमुधातोश्च **"इडागमोऽसार्वधातुकस्यादिर्व्यञ्जनादेरयकारादेः"** (३।७।१) इत्यनेनैवेडागमे सिद्धे सति यत् पुनरिड्विधानाय **"स्नुक्रमिभ्यां परस्मै"** ( ३।७।२ ) इति सूत्रं क्रियते तन्नियमार्थमिति विज्ञेयम्। स्नुक्रमिभ्या परस्यासार्वधातुकस्य चेदिडागमस्तर्हि परस्मैपदविषये एवेति। तेन व्यतिस्नोष्यते, प्रचिक्रसते इत्यादावात्मनेपदेषु नेडागमः प्रवर्तते।

'सृ–भृ' इत्यनयोर्धात्वोः **"ऋतोऽवृङ्वृञः"** ( ३।७।१६ ) इत्यनेन 'स्नु-द्रु-श्रु-स्रु' इत्येतेषा च **"उतोऽयुरुनुस्नुक्षुक्ष्णुवः"** ( ३।७।१५ ) इत्यनेनेट्प्रतिषेधे प्राप्तेऽपि तदर्थं **"सृवृभृस्तुद्रुश्रुस्रुव एव परोक्षायाम्"** ( ३।७।३५ ) इति कृत सूत्रं नियम द्योतयति—एभ्य एव धातुभ्यः परोक्षायामिट्प्रतिषेध इति। सिद्धे सति कृतेन विधिना नियमे विज्ञाते एवग्रहण सूत्रे विपरीतनियमस्य वारणाय कृतमिति विज्ञेयम्। एभ्यः परोक्षायामेवानिडिति।

धुटां वर्णानां तृतीयवर्णापन्नता "धुटां तृतीयः" ( २।३।६० ) इत्यनेन सामान्यतो घोषवति सिद्धा। "धुटां तृतीयश्चतुर्थेषु" ( ३।८।८ ) इति तदर्थमेव कृतं सूत्रं नियमयति–धुटां तृतीयश्चेत्तर्हि चतुर्थेष्वेव घोषवत्सु नान्येष्विति। तेन 'शक्यते, द्विष्टः' इत्यादौ न तृतीयवर्णापत्तिः।

अघोषे वर्णे परतो धुटां वर्णानां प्रथमवर्णापन्नता "अघोषे प्रथमः" ( २।३।६१ ) इत्यनेन सिध्यति, पुनस्तदर्थम् "अघोषेष्वशिटां प्रथमः" ( ३।८।९ ) इति कृतं सूत्रं नियमार्थमङ्गीक्रियते। अघोषेषु परतोऽशिटामेव धुटां वर्णानां प्रथमवर्णापन्नतेति नियमाकारः। एतेन अस्तीत्यादौ नायं विधिः प्रवर्तते।

यत्र सूत्रे एवग्रहणेन कस्यचिद् विधेर्नियमो विज्ञायते तत्र केनचित् सूत्रेण तद् विधानं स्यादिति नावश्यकम्। यथा "स्तौतीनन्तयोरेव षणि" ( ३।८।२८ ) इति नियमयति—निमित्तात् परः प्रत्ययविकारागमस्थः सः षत्वभूते षणि परतश्चेत् षत्वमापद्येत तर्हि स्तौतीनन्तयोरेवेति। तेन सिसिक्षति, सुसूषतीत्यादौ षत्वभूतेऽपि षणि परतो विकारस्थस्य सकारस्य न षकारादेशः।

'ईषत्प्रलम्भः, सुप्रलम्भः' इत्यादौ "रभिलभोरविकरणपरोक्षयोः" ( ३।५।३४ ) इत्यनेन नकारागमेऽपि सति सिद्धे "उपसर्गात्सुदुर्भ्यां लभेः प्राग् भात् खल्घञोः" ( ४।१।२५ ) इतिसूत्रकरणं नियमार्थम्—उपसर्गादेव लभेर्भात् प्राक् खल्घञोः परतो मकारागम इति, तेनान्यपूर्वस्य केवलस्य च लभेर्न भवतीति। खल्घञोरेवेति न विपरीतनियमः, "प्रलम्भने गृधिवञ्च्योः" ( ३।२।४२-६३ ) इत्यत्र युटप्रत्ययेऽपि मकारागमस्य दर्शनात् लभेरेवेत्यपि नियमो नास्ति "प्रोपाभ्यामारम्भे" ( ३।२।४२-३७ ) इत्यत्र रभेरपि दर्शनात्, 'विद्लृ लाभे' इत्यत्र मकारागमस्यादर्शनाच्च।

'यम' धातुः पवर्गान्तस्तस्य तु "शकिसहिपवर्गान्ताच्च" ( ४।२।११ ) इत्यनेनैव यप्रत्यये प्राप्ते "यमिमदिगदां त्वनुपसर्गे" ( ४।२।१४ ) इत्यत्र यप्रत्ययविधानार्थं पुनस्तस्य पाठो नियमार्थं बोद्धव्यः। अनुपसर्गे एव यमो यप्रत्यय इति नियमस्तेन प्रयाम्यमित्यादौ न यप्रत्ययो जायते।

"क्विप् च" ( ४।३।६८ ) इति सामान्यसूत्रेणैव 'ब्रह्महा, भ्रूणहा' इत्यादावपि क्विपि सिद्धे तदर्थं पुनः "क्विब् ब्रह्मभ्रूणवृत्रेषु, कृञः सुपुण्यपापकर्ममन्त्रपदेषु, सोमे सुञः, चेरग्नौ" ( ४।३।८३-८६ ) इति सूत्रचतुष्टयं नियमार्थं क्रियते। तत्र क्वचित् त्रिविधः क्वचिच्च चतुर्विधो नियमः परिलक्ष्यते। एतद्विषये काशिकावृत्तिकारः कातन्त्रव्याख्याकाराश्च सम्मता, भाष्यकारेण तु "ब्रह्मभ्रूणवृत्रेषु क्विप्" ( ३।२।८३ ) इत्यत्र द्विविध एव नियमोऽङ्गीक्रियते। चतु:सूत्रीयं प्रपञ्चार्थैव विज्ञेया, नियमे विकारस्य दर्शनात्। ब्रह्मादिषूपपदेषु हन्तेर्णिनिर्दिश्यते, "अन्येभ्योऽपि दृश्यन्ते" ( ४।३।६७ ) इति वचनेन मातृहा, पितृहेत्यादयोऽपि सिध्यन्ति। "क्विब् ब्रह्मभ्रूणवृत्रेषु" ( ४।३।८३ ) इत्यत्र चतुर्विधो नियमोऽभिमतो

व्याख्याकाराणाम् । ब्रह्मादिष्वेव, हन्तेरेव, अतीते एव, क्विबेवेति । परम् मधुहेत्यादावुक्तोपपदान्यत्वे, ब्रह्मविदित्यादौ धातुभिन्नत्वे, आखुहेत्यत्र कालभिन्नत्वेऽपि क्विप्प्रत्ययस्य दर्शनात् प्रपञ्चो विज्ञायते । ब्रह्मघ्नः, वृत्रस्य हन्तुरित्यादौ प्रत्ययान्तरमपि दृश्यते । "**कृञः सुपुण्यपापकर्ममन्त्रपदेषु** (४।३।८४) इत्यादावुपपद विहाय त्रिविध एव नियमोऽङ्गीक्रियते, तेन शास्त्रकृत्, सूत्रकृदादिप्रयोगा उपपद्यन्ते। 'पदकारः' इत्यत्र प्रत्ययव्यभिचारोऽपि विज्ञेयः । "**सोमे सुञः**" (४।३।८५) इत्यत्र नियमस्य चतुर्विधत्वात् सुरा सुनोतीत्यादावतीतकालाभावे न क्विप्प्रत्ययः । सोम सुतवानित्यत्र तु "**कर्मण्यण्**" ( ४।३।१ ) इत्यण् न भवति किं च क्विबेव । अन्येभ्यस्तु क्विबभावेऽण् प्रवर्तते एव । "**चेरग्नौ**" ( ४।३।८६ ) इत्यत्रापि चतुर्विधो नियमः, तेन पुष्प चितवान्, अग्निं हुतवान्, अग्निं चिनोतीत्यादौ न क्विप्। अग्निं चितवानित्यत्र चाण्प्रत्ययोऽपि भवितुं नार्हतीति ।

'वृ-दृ' इति स्वरान्तौ धातू, स्वरान्तत्वादेव तयोरल्प्रत्ययः सिद्धः, पुनः "**स्वरवृदृगमिग्रहामल्**" ( ४।५।४१ ) इत्यत्र तयो· पाठो नियमार्थः—ऋकारान्तेभ्यश्चेदल्प्रत्ययस्तर्हि वृदृभ्योरेवेति । तेनान्येभ्य ऋकारान्तेभ्यो घञ्प्रत्ययो जायते, यथा कारः, हार इत्यादि । अत्रालेवेति न प्रकृतिनियम· सम्भाव्यते–वरणम्, वृत्तमित्यादौ युट्क्तप्रत्यययोरपि दर्शनात् ।

पक्तु व्रजतीत्यादिवद् इच्छति भोक्तुमित्यादावपि "**वुण्तुमौ क्रियायां क्रियार्थायाम्**" ( ४।४।६६ ) इत्यनेनैव तुमि सिद्धे तद्विधानार्थं पुनः "**इच्छार्थेष्वेककर्तृकेषु तुम्**" ( ४।५।१०६ ) इति सूत्रकरण नियमार्थं विज्ञेयम् । इच्छार्थेष्वेककर्तृकेषु धातुषूपपदेषु धातोस्तुमेव भवति न तु वुणिति नियमाकार· । एव कालसमयवेलाशक्त्यर्थेषु चोपपदेष्वपि तुमेव भवतीति तदपि सूत्रं नियमार्थमुपस्थाप्यते—"**कालसमयवेलाशक्त्यर्थेषु च**" ( ४।५।१०७ ) इति ।

आरिवान्, ईयिवान्, पेचिवान्, ददिवानित्यादौ "**इडागमोऽसार्वधातुकस्यादिर्व्यञ्जनादेरयकारादेः**" ( ३।७।१ ) इत्यनेनेडागमः प्राप्तो "**घोषवत्योश्च कृति**" ( ४।६।८० ) इत्यनेन निषिध्यते, पुनः क्वन्सुप्रत्ययस्य परोक्षावद्भावात् "**सृवृभृस्तुद्रुश्रुस्रुव एव परोक्षायाम्**" ( ३।७।३५ ) इत्यनेन सिद्धः "**अर्तीण्घसैकस्वरातामिड्वन्सौ**" (४।६।७६) इत्यनेन नियम्यते-अर्तीण्घसैकस्वरादन्तानामेव वन्साविड् भवति नान्येषामिति । सूत्रे एवग्रहणं सुखार्थमित्यवगन्तव्यम् ।

**इति कातन्त्रव्याकरणविमर्शाभिधे शोधप्रबन्धे सप्तमाध्यायान्तर्गतं नियमसूत्रालोचनम् ।**



# अतिदेशसूत्रविमर्शः

## अतिदेशस्यार्थो भेदाश्च

अतिदेशः=उपचारः, अन्यधर्मस्यान्यत्राऽऽरोपणमित्यर्थः[1]। अतिदिश्यते इति कर्मणि, अतिदिश्यतेऽनेनेति करणे वा घञ्। स चातिदेश प्राधान्यतश्चतुर्विध. स्मर्यते—शास्त्रातिदेशः, निमित्तातिदेश., व्यपदेशातिदेशः रूपातिदेशश्चेति। केचिदत्र शास्त्रकार्ययोर्भेदाकलनात् तादात्म्यातिदेशस्य पृथगङ्गीकरणाच्च षडतिदेशान् प्रकल्पयन्ति। प्रदीपकारेण शास्त्रकार्ययोरभेद एवोक्तः—

**"कार्यातिदेशस्तु शास्त्रातिदेशादभिन्नत्वात् पृथङ् नोपन्यस्तः"** (म० भा० प्र० **७।१।६५, ६६**) इति। **"स्थानिवदादेशोऽनल्विधौ"** (अ० १।१।५६) इति सूत्रस्य कार्यातिदेशत्व ब्रुवता नागेशभट्टेनाप्येतदेव समर्थितम् "प्राधान्यात् कार्यातिदेशोऽयम्। शास्त्रातिदेशस्तु कार्यातिदेशादभिन्नरूपः, तस्यापि कार्यफलकत्वात् (श० शे०, अच्स० १।१।५६) इति। कार्यस्य स्वशास्त्रेणैव सम्भवात्तयोरभिन्नत्व प्रतीयते। कातन्त्रव्याख्याकारास्तु तादात्म्यातिदेश विहाय तदीयसूत्राभावात् पञ्चधाऽतिदेशान् स्वीकुर्वन्ति, तत्रापि पञ्जीकारो रूपातिदेश कार्यातिदेशस्यैवैक[2] भेदं मत्वा न तमङ्गीकर्तुं स्वतन्त्ररूपेणोद्यतः प्रतिभाति।

पाणिनीये **"पूर्ववत् सनः"** (अ० १।३।६२) इत्यत्र निमित्तातिदेशः। येन निमित्तेन सन. पूर्वस्माद् धातोरात्मनेपद विधीयते तेनैव निमित्तेन सनन्तादप्यात्मनेपद स्यादिति सूत्रार्थ.। अत्र कार्यातिदेशस्याङ्गीकारे तु अनुपसर्गस्य प्रपूर्वस्य च क्रमुधातोरिह सना व्यवहितस्याप्यात्मनेपदनिमित्तत्वात् **"स्नुक्रमोरनात्मनेपदनिमित्ते"** (अ० ७।२।३६) इति निमित्तात् तत्रेडागमो न प्रवर्तते। व्यपदेशातिदेशस्तु **"आद्यन्तवदेकस्मिन्"** (अ० १।१।२१) इत्यत्र विज्ञेयः। अत्रैकस्मिन्=असहायेऽपि वर्णे आद्यन्तयोर्व्यपदेशात् तत्तदुद्दिष्टानि कार्याणि प्रवर्तन्ते। यथा वृक्षाभ्यामित्यादावकारान्तस्याङ्गस्य **"सुपि च"**

---

१. अतिक्रम्य=स्वविषयमुल्लङ्घ्यान्यत्र विषये देश.=उपदेशः। विस्तरेण तु अधिकरणमालायामुक्तम्, यथा—

अन्यत्रैव प्रणीतायाः कृत्स्नाया धर्मसंहतेः।
अन्यत्र कार्यत. प्राप्तिरतिदेश. स उच्यते ॥
प्राकृतात् कर्मणो यस्मात् तत् समानेषु कर्मसु।
धर्मप्रवेशो येन स्यादतिदेशः स उच्यते ॥ इति।

२. स च निमित्तरूपव्यपदेशशास्त्रकार्यभेदात् पञ्चधा भिद्यते।——
कार्यातिदेशप्रकार एवायम्, किमिदमुच्यते रूपातिदेश इति? (पञ्जी २।२।६०)।

( अ० ७।३।१०२ ) इत्यनेन दीर्घः प्रवर्तते, एवमाभ्यामित्यादावसहायस्याकारमात्रस्यापि वर्णस्य, अन्यथाऽकारान्तस्याङ्गस्याभावात् तन्न प्रवर्तेत। एतच्च प्राचामभिमतम्। पञ्जीकारेण तु कार्यातिदेश एवात्राङ्गीक्रियते, सर्वातिदेशाना कार्यार्थतया कार्यस्यैव प्राधान्यात्। कार्यातिदेशाभ्युपगमे यत्र किञ्चिद् बाधक तत्रैवातिदेशान्तरव्यवहारः प्रवर्तते। अत्र तु व्यपदेशातिदेशपक्षे एव दोषः सम्भाव्यते न तु कार्यातिदेशपक्षे। तदित्थ विज्ञेयम्—'कुरुते, कुर्वे' इत्यादौ 'त–इट्' प्रत्यययोः ( अनेकस्वरवर्णानामभावात् ) अन्त्यो योऽच् स आदिर्यस्येत्येवरूपस्य बहुव्रीह्यर्थस्याभावाट्टिसञ्ज्ञा न स्यादित्येत्वमपि भवितुं नार्हतीति। कार्यातिदेशपक्षे तु कुर्वाते इत्यादौ दृष्टं टिकार्यमत्राप्यतिदिश्यते इति न दोषः। यत्र भिन्नयोर्द्वयोः पदार्थयोरभेदव्यवहारः स तादात्म्यातिदेश.। यथा—"**सुबामन्त्रिते पराङ्गवत् स्वरे**" ( अ० २।१।२ ) इति। 'यत्ते दिवो दुहितर्मर्तभोजनम्' इत्यत्राऽऽमन्त्रिते दुहितृपदे परतः सुबन्तो यो दिवस्शब्दस्तस्याङ्गवद्भावो जायते, तेन "**आमन्त्रितस्य**" ( अ० ८।१।१६ ) इत्यनेन प्रवृत्त आमन्त्रितपदस्य निघातः 'दिवो दुहितः' इति समुदायस्य प्रवर्तते। "**कर्मवत् कर्मणा तुल्यक्रियः**" ( अ० ३।१।८७ ) इत्यत्र शास्त्रातिदेशः। एतेन 'भिद्यते काष्ठं स्वयमेव' इत्यादौ यक्प्रत्ययविधायकम्, 'अभेदि काष्ठं स्वयमेव' इत्यादौ च्विणप्रत्ययविधायकमात्मनेपदविधायक च शास्त्रं प्रवर्तते। तेन 'वृक्ष + ङे' इत्यवस्थाया प्राप्तौ दीर्घो ङेर्यादेशे कृते तस्य सुबादेशस्य सुप्त्वात् "**सुपि च**" ( अ० ७।३।१०२ ) इत्यनेन प्रवर्तते। "**तृज्वत् क्रोष्टुः**" ( अ० ७।१।६५ ) इत्यादौ रूपातिदेशः, अत एव क्रुशधातोर्यत् तृजन्त रूपं 'क्रोष्टृ' इति, तदेव रूप क्रोष्टुशब्दस्यापि तृज्वद्भावेन सम्पद्यते।

केचिदर्थातिदेशमपि समाद्रियन्ते, अत एवोच्यते—

**कार्यरूपनिमित्तार्थशास्त्रतादात्म्यशब्दिताः।**
**व्यपदेशश्च सप्तैतानतिदेशान् प्रचक्षते॥**

( उद्धृतः—त० बो०, अज० पु० ७।१।९५ ) इति।

तेन गार्गी च गार्ग्यायणौ चेत्यर्थे स्त्रियाः शेषे तदर्थस्य "**स्त्री पुंवच्च**" ( अ० १।२।६६ ) इत्यनेन पुवत्त्वे "**यञञोश्च**" ( अ० २।४।६४ ) इत्यनेन यञो लुक् स्यात्। अर्थातिदेशाभावे तु तन्न स्यात्, स्त्रिया तल्लुग्विधानस्य प्रतिषेधात्।

अतिदेश इववदितिसादृश्यवाचकशब्दयोः प्रयोगेण साक्षादवगम्यते, क्वचित्तु सादृश्यवाचकशब्दप्रयोगाभावेऽपि स परिलक्ष्यते। यथा "**गोतो णित्**" ( अ० ७।१।९० ) इति। अत्र पक्षान्तरेषु दोषसत्त्वादतिदेशपक्ष एवाङ्गीक्रियते। सादृश्यवाचकशब्दप्रयोगाभावेऽप्यतिदेशो भवितुमर्हतीत्याह महाभाष्यकारः—

"अन्तरेणापि वतिमतिदेशो गम्यते। तद् यथा—एष ब्रह्मदत्तः। अब्रह्मदत्तं ब्रह्मदत्त इत्याह ते मन्यामहे ब्रह्मदत्तवदयं भवतीति। एवमिहाप्यणितं णिदित्याह–

णिद्वदिति गम्यते" ( म० भा० ७।१।९० ) इति। न्यासकारादिभिरप्येतत्[1] सोपपत्तिकं व्याख्यातम्।

कातन्त्रे तु प्रकारान्तरमपहायेह **"गोरौ घुट्"** ( २।२।३३ ) इत्यनेन ओकारस्य औकारो विधीयते। कुटादीना ङिद्भाव विहाय साक्षादेव गुणनिषेधः क्रियते— **"कुटादेरनिनिचट्सु"** ( ३।५।२७ ) इति। लोके 'गोसदृशो गवयः' इत्युक्ते रूपातिदेशोऽवगम्यते, गोर्यद् रूपं गवयस्यापि तद्वित्यर्थः। एतेन लोकेऽतिदेशव्यवहारो निदर्शितः।

'ङलोड्' इत्येव निर्देष्टव्ये "लोटो लङ्वत्" ( अ० ३।४।८५ ) इति निर्देश आतिदेशिक कार्यमनित्यमिति विज्ञापयतीति वदन्ति केचिद् व्याख्यातारः, तेन च लोटोऽपि लङ्वत्त्वात् **"सिजभ्यस्तविदिभ्यश्च"** ( अ० ३ ४।१०९ ) इत्यनेन जुह्वतुप्रभृतौ न प्रवर्तते झेर्जुसादेश.। पर प्रायेण विद्वासो भाष्यकारेणाकीर्तितत्वान्नैतद् वचन समीचीनमाकलयन्ति। तेषामभिमतमिदम्—सिचसाहचर्येणाभ्यस्तादप्यनतिदिष्टङित्ववत एव लस्य स्थाने झेर्जुसादेशः प्रवर्तते न त्वतिदिष्टङित्ववतो लोटोऽपि स्थाने झेर्जुसादेश.[2] इति।

## कातन्त्रीयातिदेशसूत्रविमर्शः

**"अग्निवच्छसि"** ( २।१।६५ ) इत्यत्र कार्यातिदेशोऽङ्गीक्रियते, अतिदेशान्तरेषु दोषसत्त्वात्। शसि परे अग्नेर्यत् कार्यं दृष्टं तदृदन्तस्यापि लिङ्गस्य भवतीत्यर्थः। एतेन पितॄनित्यादौ **"शसोऽकारः सश्च नोऽस्त्रियाम्"** ( २।१।५२ ) इत्यनेन शसोऽकारस्य पूर्वस्वराधन्नता सकारस्य च नकारादेशो जायते। **"स्त्री नदीवत्"** ( २।२।३ ) इति। नदीनिबन्धन यत् कार्यं तत् स्त्रीशब्देऽपि स्यादिति कार्यातिदेशोऽयमङ्गीक्रियते। व्यपदेशातिदेशोऽप्यत्र दोष नाकलयन्ति व्याख्याकाराः। व्यपदेश. = सञ्ज्ञा, सा च स्त्रीशब्देऽतिदिश्यते। मुख्यनदीसज्ञाऽङ्गीकारे तु स्त्रियमतिक्रान्तायातिस्त्रियै, अतिस्त्रेः, अतिस्त्रावित्यत्राग्निसञ्ज्ञा-

---

१. '"गाङ्कुटादिभ्योऽञ्णिन्ङित्" ( अ० १।२।१ ) इत्यत्र ङितोऽतिदेशत्व यथा साध्यते तथैवात्र णितोऽतिदेशत्वमिति ङितमतिदेश साधयन्नाह न्यासकार —तृतीये तु पक्षे न कश्चिद् दोष इति मत्वा तमेवाश्रित्याह-अतिदेशोऽयमिति। यद्येव वतिना निर्देश कर्तव्य', अन्यथा तदर्थो नावगम्येत। नैतदेवम्, परपदार्थेषु हि प्रयुज्यमाना. शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्ति। यथा—सिंहो माणवक गौर्वाहीक ( न्या० १।२।१ ) इति।

२. ङ्लोडिति वाच्ये लोटो लङ्वदिति ज्ञापकोऽतिदेशोऽस्या.।
तेन च जुह्वत्वादिषु न सिजभ्यस्तेति झेर्जुसादेशः॥
इति परिभाषाषट्क प्राचीनोदितमनित्यपदघटितम्।
तद् भाष्येऽनुपलम्भादसम्मतत्वाच्च निर्मूलम्॥

सिच्साहचर्यतश्चाभ्यस्तादप्यनतिदिष्टङित्ववत.।
लस्य स्थाने यो झिस्तस्य जुसिति नैष जुह्वतुप्रभृतौ॥
( परि० प्र०, तृ० परि०, परि० ९८, का० १७७-८५ ) इति।

निबन्धनं कार्यं न स्यात्, किं च एकदेशविकृतस्यानन्यवत्त्वान्नदीसञ्ज्ञानिबन्धने कार्ये सञ्जाते उक्तरूपाणि न स्युरिति। तस्मादत्र वद्ग्रहण सादृश्यार्थम्, सादृश्य पुनरीकारमन्तरेण न सम्भवतीति 'अतिस्त्रि' शब्देऽग्निसञ्ज्ञानिबन्धन कार्यं प्रवर्तते। अत्र विचार्यते—स्त्रीशब्द ईकारान्तत्वात् स्वत एव नदीसञ्ज्ञकः कथ पुनस्तत्र नदीत्वमतिदिश्यते ? इति। इद विज्ञेयम्—स्त्रीशब्दस्य "स्त्री च" ( २।२।४१ ) इत्यनेन धातुवद्भावादियादेशविषयत्वात् "स्त्र्याख्याावियुवौ वामि" ( २।२।४ ) इत्यनेनाऽऽमि परतः "ह्रस्वश्च ङवति" ( २।२।५ ) इत्यनेन ङवत्सु वचनेषु च परतो विकल्पेन प्राप्तस्य नदीवद्भावस्य बाधनाय वद्व्यावृत्त्या शेषवचनेष्वप्राप्तनदीवत्त्वस्य विधानाय च सूत्रमिदमारभ्यते इति। आमि परतः स्त्र्याख्ययोरियुवृस्थानयोर्नदीवत्त्व "स्त्र्याख्याावियुवौ वामि" ( २।२।४ ) इत्यनेन विकल्पेन निर्दिश्यते, तेन इयुवृस्थानयोः 'श्री-भ्रू' शब्दयोरामि परे पाक्षिक नदीकार्यं दृश्यते—श्रीणाम्, श्रियाम्, भ्रूणाम्, भ्रुवामित्यत्र। 'ङे-ङसि ङस् ङि' इति ङवत्सु वचनेषु परतो ह्रस्वयोरिदुतोरियुवृस्थानयो· स्त्र्याख्ययोश्च शब्दयोर्विकल्पेन नदीवत्त्व "ह्रस्वश्च ङवति" ( २।२।५ ) इत्यनेन क्रियते, तेन 'बुद्ध्यै, बुद्धये, धेन्वै, धेनवे, श्रियै, श्रिये, भ्रुवै, भ्रुवे' इत्यादौ नदीकार्यं विकल्पेन दृश्यते।

एकार्थमादाय पुंस्त्वाद्यनेकलिङ्गवर्ति यद् भाषितपुंस्क नपुंसकलिङ्ग तस्य पुमानिव कार्यविधानायातिदिश्यते "भाषितपुंस्कं पुंवद् वा" ( २।२।१४ ) इति। पुंवत् कार्यं भाषितपुंस्कशब्दस्य स्यादित्यर्थः, तेनाय कार्यातिदेशः। पुंलिङ्गकार्यम्—न्वागमाभावो ह्रस्वाभावश्च नपुंसकस्य जायेते। यद्यप्यत्र 'भाषितपुंस्कान्नुर्वा' इत्येवरूपेऽपि सूत्रे कृते कार्यसिद्धिः सम्भवति, तथापि यदतिदिश्यते ( पुंवद्ग्रहण क्रियते ) तद् ह्रस्वाभावार्थमिति बोध्यम्।

"पुंवद् भाषितपुंस्कानूङ्पूरण्यादिषु स्त्रियां तुल्याधिकरणे" ( २।५।१८ ) इत्यत्र व्याख्याकारैः[१] रूपातिदेशोऽङ्गीकृतस्तेन "कर्मधारयसञ्ज्ञे तु पुंवद्भावो विधीयते" ( २।५।२० ) इत्यत्रापि चायमेवातिदेशो वक्तु शक्यते। आयिप्रत्ययेऽपि परतो भाषितपुंस्कशब्दस्य पुंवत्त्वमतिदिश्यते 'भाषितपुंस्कं पुंवदायौ" ( ३।६।६१ ) इति। तेन ब्राह्मणीवाऽऽचरतीत्यर्थे आयिप्रत्यये 'ब्राह्मणायते' इति रूपमुपपद्यते। अत्र कार्यातिदेशः शास्त्रातिदेशो वा मन्तव्यः, पुंवत्कार्यस्य तच्छास्त्रस्य वाऽतिदेशनिर्देशात्। "मनः पुंवच्चात्र" ( ४।३।७९ ) इत्यनेन कर्मण्युपपदे मन्धातोर्णिनिः प्रत्ययो भवति, तस्मिन् णिन्प्रत्ययान्ते धातौ कर्मोपपदस्य पुंवत्त्व क्रियते तच्छास्त्रीयकार्यसम्पादनाय। तेन शास्त्रातिदेशपक्षे तुल्याधिकरणत्वाद् खट्वामानिनीत्यादावपि पुंवद्भावः प्रसज्येत। शास्त्रातिदेशाङ्गीकारे तु

१. उभयपक्षेऽपि रूपातिदेशोऽयम्, पुंवाचकस्य नाम्नो यद् रूप स्वार्थाभिधायिनोऽप्यान्तरतम्यात् तद् भवतीत्यर्थः. ( कात० वृ० टी० २।५।१८ )। अन्यातिदेशस्यासम्भवाद् रूपातिदेशोऽयमिति कविराजः।

"पुंवद् भाषितपुस्कानूङपूरण्यादिषु" ( २।५।१८ ) इतिसूत्रविषये एव णिनिप्रत्यये परे पुंवद्भावः प्रवर्तते, भाषितपुंस्के तु तुल्याधिकरणता नाङ्गीक्रियते ।

क्वचित् पूर्वं यो विधिर्निर्दिश्यते तेन प्राप्तं विशेष कार्यान्तरं मा भूदिति तदभावोऽतिदिश्यते पूर्वस्य वर्णस्य विधौ कर्तव्ये । यथा—"अवमसंयोगादनोऽलोपोऽलुप्तवच्च पूर्वविधौ" ( २।२।५३ ) इति । वमभिन्नसयोगात् परस्यानोऽकारस्याघुट्स्वरादौ परतो लोपो विधीयते, सञ्जाते लोपे 'दध्ना' इत्यादौ "धुटां तृतीयः" ( २।३।६० ) इत्यनेन प्राप्तो धकारस्य दकारोऽलुप्तवद्भावेन वार्यते । अत्रौकारस्थानिके ईकारे ङौ च परत प्राप्तमुक्त कार्यं विकल्पेन विधीयते—"ईङ्योर्वा" ( २।२।५४ ) इति । साम्नी, सामनी, राज्ञि, राजनीत्यादि रूपद्वयमेकस्मिन् प्रत्यये जायते । लोपः = सञ्ज्ञा, तदभावोऽत्रातिदिश्यते इति व्यपदेशातिदेशोऽय प्रतीयते ।

भ्रूशब्दस्त्रीशब्दयोर्लिङ्गरूपत्वात् (लिङ्गम् = प्रातिपदिकम्) तत्र धातुकार्यमियुवादेशरूप स्यादिति धातुत्वातिदेशेन निर्दिश्यते—"भ्रूर्धातुवत्, स्त्री च" ( २।२।६०, ६१ ) इति । अत्र भ्रूस्त्रीशब्दौ द्रव्यवाचिनौ, तेन तत्र धातुनिमित्तायाः क्रियायाः स्वभावादेवासम्भवान्नाय निमित्तातिदेशो भवितुमर्हति । रूपातिदेशोऽपि न सम्भाव्यते—भ्रूशब्दो धातुरूपो भवेदित्यर्थे भ्रूशब्दस्य भ्रमधातोर्डूप्रत्ययेन निष्पन्नत्वाद् भ्रमरूपमापद्येत, ततश्चातिदेशकरणमनर्थकमेव स्यात्—'भ्रूर्भ्रम' इत्येव निर्देशेनैव प्रतिपत्तिलाघवात् । नापि व्यपदेशातिदेशः । व्यपदेशः = सञ्ज्ञा, भ्रूशब्दो धातुसञ्ज्ञो भवत्विति चेत्तर्हि वत्करणमनर्थक स्यात् । शास्त्रातिदेशस्याङ्गीकारे न दोषः । धातोर्यच्छास्त्रं तदस्य भवतीति तत्पुनरीदूतोरियुवौ स्वरे परतः स्याताम् । किन्तु तत्रापि गृह्यमाणे कार्यमेवानुसर्तव्य भवति तन्निष्ठत्वात् प्रवृत्तेः । रूपातिदेशस्तु कार्यातिदेशस्यैवेक- प्रकार इति कार्यातिदेशोऽयमुच्यते, तत्पुनः कार्यमियुवादेशलक्षणमस्तीति वृत्तिकारेण भ्रुवौ, भ्रुवः, स्त्रियौ, स्त्रिय इत्युदाहरणानि प्रदर्शितानि । स्त्रीशब्दस्यामृशसोः परयोस्तु विकल्पेन धातुवत्त्व सूत्रान्तरेण निर्दिश्यते—"वाऽमृशसोः" ( २।२।६२ ) इति ।

"हचतुर्थान्तस्य धातोस्तृतीयादेरादिचतुर्थत्वमकृतवत्" ( २।३।५० ) इति सूत्रे हकारोपादानबलाद् गोधुगित्यत्र प्रागेवाऽऽदिचतुर्थत्वे कृते तस्य दादित्वाभावाद् "दादेर्हस्य गः" ( २।३।४७ ) इत्यनेन गत्व न प्रवर्तेत, तस्मादत्र सूत्रेऽकृतत्वमतिदिश्यते—पूर्वं जातस्याऽऽदिचतुर्थत्वरूपकार्यस्य । अकृतमित्युक्तेऽकृतमिवेति गम्यते एव, वद्ग्रहण तु सुखप्रतिपत्त्यर्थमिति टीकाकारः । पूर्वं यत् कार्यं कृत तदभावस्यातिदेशादय कार्यातिदेशोऽवगन्तव्यः ।

राजभ्यामित्यादौ नलोपे कृते "अकारो दीर्घं घोषवति" ( २।१।१४ ) इत्यनेन प्राप्तस्य दीर्घविधेर्वारणाय विद्वानित्यादौ सलोपे कृते "लिङ्गान्तनकारस्य" ( २।३।५६ ) इत्यनेन नलोपस्य वारणाय नलोपसंयोगान्तलोपावलुप्तवद् विधीयेते—"न संयोगान्ता-

लुप्तवच्च पूर्वविधौ" ( २।३।५८ ) इति। अलुप्तयोर्यत् कार्यं तल्लुप्तयोरपि स्यादिति कार्यातिदेशोऽयम्।

क्वचिद् इववच्छब्दनिर्देशाभावेऽपि अतिदेशो विज्ञायते, यथा—"व्यञ्जनान्तस्य यत् सुभोः" ( २।५।४ ) इति। व्यञ्जनान्तस्य लिङ्गस्य सुभोरुक्त भवत् साक्षात् सकार-भकारोक्तकार्यस्यासम्भवात् सकारभकारयोरेककालोक्तं व्यञ्जनोक्त भवतीत्यर्थः। तेन विदुषा गमनमिति षष्ठीतत्पुरुषसमासे षष्ठ्या लोपे "अनुषङ्गश्चाक्रुञ्चेत्" ( २।२।३९ ) इत्यनेन नलोपः, "विरामव्यञ्जनादिष्वनडुन्नहिवन्सीनां च" ( २।३।४४ ) इत्यनेन च सकारस्य दकारादेश प्रवर्तते। कार्येऽतिदिश्यमाने यस्य यदुक्त तस्य तदेव भवति श्रुतत्वात्। अत्र चेष्टत्वात् कार्यातिदेशोऽङ्गीक्रियते।

सङ्ख्यावाचकादेकार्थकाच्च शब्दाद् वीप्सार्थे गम्यमाने "सङ्ख्यैकार्थाभ्यां वीप्सायाम्" ( २।६।४०-९ ) इत्यनेन शस्प्रत्ययो विधीयते, तदनन्तरं "कतिगणवन्तूनां च" ( २।६।४०-१० ) इत्येव सूत्रे कृते शस्प्रत्यय. सम्पत्स्यते, पुनस्तेषा सङ्ख्यातिदेशकरण सङ्ख्यासञ्ज्ञकत्व प्रदर्शयितु मन्ये—"कतिगणवन्तूनां सङ्ख्यावत्" ( २।६।४०-१० ) इति। एतेन कति-गण-वन्तुप्रत्ययान्तशब्दाना सङ्ख्यावद्व्यपदेशात् तच्छब्देभ्य. शस्प्रत्ययो विधीयते। व्यपदेशातिदेशोऽयम्।

जुहोत्यादिगणपठिताना 'भी-ह्री-भृ-हु' इत्येतेषा परोक्षाया नित्यत्वादामागमे सति व्यवधानात् "जुहोत्यादीनां सार्वधातुके" ( ३।३।८ ) इत्यनेन द्वित्वम्, "भृञ्ह्राङ्मा-ङामित्" ( ३।३।२४ ) इत्यनेन भृञ इत्व च न प्राप्यते, तत्साधनार्थमामागमे तिस्त्वमति-दिश्यते—"भीह्रीभृहुवां तिवच्च" ( ३।२।२१ ) इति। अत्र परोक्षाभिधेयस्यातीतकालस्य सत्त्वेन तिप्रत्ययस्याभिधेया वर्तमानकालादयो न गृह्यन्ते, वर्तमानत्वातीतत्वयोश्चैकस्मिन्न-सम्भवात्। तेनात्र प्रयोजनवशात् सार्वधातुकमात्रमतिदिश्यते। सार्वधातुकनिमित्तकमत्र कार्यं द्वित्वमित्व चेति, तदेवात्र ह्यतिदेशेन सम्पद्यते। कार्यातिदेशोऽयम्, तिप्रत्ययाभिधेय-सार्वधातुककार्यस्य विधानात्।

कर्मकर्तुः कर्मत्वमतिदिश्यते—"कर्मवत् कर्मकर्ता" ( ३।२।४१ ) इति। कर्ता[१] यदि कर्मत्वमाप्नोति तर्हि स एव कर्मकर्तेतिशब्देन व्यवह्रियते। परार्थे प्रयुज्यमानः शब्दो वतिमन्तरेणैव वत्यर्थं गमयति, यथा—सिंहो माणवकः, गौर्वाहीक इत्यत्र माणवकः शौर्यक्रौर्यादिगुणैः सिंहवत्, वाहीकदेशीयः कश्चिज्जाड्यमान्द्यादिगुणैर्गोवदुच्यते, एवमत्रापि वतिमन्तरेणैव वत्यर्थ. सम्भाव्यते, कथ तर्हि तदुपादानमिति? अत्रावधेयम्—वत्करणमन्तरेणेदं सञ्ज्ञासूत्र स्यात्। वत्करणेन च व्यपदेशातिदेशः सम्भाव्यते, तस्य सञ्ज्ञातो भेदाभावात्।

---

१. क्रियमाण तु यत् कर्म स्वयमेव प्रसिद्ध्यति।
सुकरै. स्वैर्गुणैः कर्तु. कर्मकर्तेति तद्विदुः॥
( कात० वृ० ३।२।७ )।

नेन पूर्वार्थस्याङ्गीकारे कर्मकर्तुः कर्मसञ्ज्ञकत्वात् कर्मण्येवाऽऽत्मनेपद स्यान्न तु भावे। वत्करणेन कार्यातिदेशोऽय गम्यते, तेन चाकर्मण एव सतः कर्मकर्तु' कर्मकार्यं विधीयते। एव कर्तृगतं कर्तृत्व स्वकीय भूतपूर्वमकर्मकस्वभावमपि न जहातीति भावेऽपि कर्मकार्यं प्रवर्तते। अत्र च वत्करणं व्याख्याकारैः स्वाश्रयार्थमङ्गीक्रियते। स्वम् = कर्ता, स चाऽऽश्रय. कर्तृत्वस्य, तदर्थं वदुपादाने कृतेऽकर्मके भावेऽपि आत्मनेपदमापद्यते, तदुदाह्रियते—पच्यते ओदनेन स्वयमेवेति। ओदनोऽत्र कर्ता, स च भविता, भवतीत्यादावकर्मकस्तेन भावे कर्तृप्रयुक्ता तृतीया जायते। कर्मणो निमित्त व्याप्यत्व तत् कर्तर्यतिदेष्टुमशक्यम्, कर्तृकर्मणोर्विरुद्धधर्मत्वात्, तेन न निमित्तातिदेश.। सञ्ज्ञातो व्यपदेशस्य भेदाभावादत्र व्यपदेशातिदेशोऽपि नास्ति। कर्मणो रूप यणादिकमिति स्वीकारे रूपातिदेशो वक्तु यदपि शक्यते, तथापि यणादिकस्य कार्यत्वात् कार्यातिदेशस्यैवाङ्गीकारे औचित्य प्रतीयते। शास्त्रातिदेशे यथा **"सार्वधातुके यण्"** ( ३।२।३१ ) इत्येतत् प्रवर्त्यते तथा कर्मकर्तरि परत्वादनादयोऽपि प्रवर्तेरन्निति सोऽपि पक्षो नाङ्गीक्रियते। कार्यातिदेशपक्षे तु सकलमनेनैव कार्यमित्यस्यैव परत्वाद् यणादय एवेत्येष एव पक्षः समीचीनः।

सनः पूर्वं यो धातुः परस्मैपदी आत्मनेपदी वा सनन्तात् तस्माद् धातो. किं पदं स्यादित्यर्थमतिदेशसूत्रं क्रियते **"पूर्ववत् सनन्तात्"** ( ३।२।४६ ) इति। पूर्वस्मादिव पूर्ववदिति पञ्चम्यन्ताद् वतिप्रत्ययः। येन निमित्तेन सनः पूर्वस्माद् धातोर्यत् पद दृष्टं तेनैव निमित्तेन सनन्तादपि तत् पद भवतीत्यर्थः, एवं निमित्तातिदेशोऽयम्। यथा अनुदात्तानुबन्धेन निमित्तेन रुचधातुरात्मनेपदी, एवं सनन्तादप्यात्मनेपद प्रवर्तते—'रुरोचिषते' इति। पचधातुः समाहारानुबन्धेन निमित्तेनोभयपदी, एव सनन्तोऽपि तथैव जायते—पिपक्षति, पिपक्षते इति।

समानसञ्ज्ञकस्यावर्णस्य लोपाभावे सति चण्परे ( चण् परो यस्मात् तस्मिन् ) इन्प्रत्यये यदि लघुसञ्ज्ञको धात्वक्षरः परो वर्तते तर्ह्यभ्यासे सन्वत ( अभ्याससम्बन्धे सन्निमित्तक यत् कार्यं स्यात् ) कार्यस्य विधानायोच्यते—**"अलोपे समानस्य सन्वल्लघुनीनि चण्परे"** ( ३।३।३५ ) इति। एतेन अपीपचदित्यादौ **"सन्यवर्णस्य"** ( ३।३।२६ ) इत्यनेनेत्वम्, अलीलवदित्यादौ **"उवर्णस्य जान्त.स्थापवर्गपरस्यावर्णे"** ( ३।३।२७ ) इत्यनेनेत्व तस्य च **"दीर्घो लघोः"** ( ३।३।३६ ) इत्यनेन दीर्घो जायते। अशिश्रवदित्यादौ चेत्वमात्रम्। सन्वत्कार्यविधानात् कार्यातिदेशोऽयम्।

नाम्नः ओतः ( ओकारात् ) औतश्च ( औकारात् ) यिन्नाप्योः प्रत्यययोः परतः स्वरसन्धिर्न प्रवर्ततेति तयोः स्वरत्वमतिदिश्यते—**"ओतो यिन्नाप्योः स्वरवत्, औतश्च"** (३।४।६८, ६६) इति। व्यपदेशातिदेशोऽयम्-स्वरस्य सञ्ज्ञात्वात्, व्यपदेशस्य च संज्ञयाऽभेदरूपत्वात्। गवाजिनमित्यत्र 'अव' इत्यकारान्तादेशोऽभीष्टस्तथा नात्रेति न स प्रवर्तते। ओकाराद् यिन् औकाराच्च आपिरित्येवंरूपं यथासङ्ख्यमत्र न भवेदिति **"औतश्च"** ( ३।४।६६ ) इति पृथक् सूत्रं क्रियते।

ओकारौकारयोरवावावादेशौ स्वरनिमित्तकौ दृश्येते। लव्यम्, अवश्यलाव्यमित्यादौ यप्रत्यये परत ओकारौकारयोरुक्तादेशौ न सम्भाव्येते यकारस्य स्वरत्वाभावादिति तद्विधानार्थं यकारे स्वरत्वमतिदिश्यते—"**ओदौद्भ्यां कृद् यः स्वरवत्**" ( ४।१।३१ ) इति। अत्र विशेषः कश्चित् प्रदर्श्यते—जि-क्षि' इत्येतयोः शक्यार्थे एव विहितो य. प्रत्ययः स्वरत्व लभते—"**जिक्ष्योः शक्ये**" ( ४।१।३२ ) इति। तेन जेतुं शक्यं जय्यम्, क्षेतु शक्यं क्षय्यमिति रूप निष्पद्यते। अर्थान्तरे तु जेयम्, क्षेयमिति। क्रीञ्धातोश्च द्रव्यविनिमयार्थे एव यप्रत्ययः स्वरत्व प्राप्नोति—"**क्रीञस्तदर्थे**" ( ४।१।३३ ) इति। गा दत्वा द्रव्य प्राप्स्यामीति धिया हट्टे उपस्थापिता गौः क्रय्या भवति, तत्र यकारस्य स्वरवत्त्वादेकारस्यायादेशः प्रवर्तते। आपणे यन्न प्रसारित धान्या विनिमये उदासीनत्वात् तत् क्रेयमेव भवति न तु क्रय्यम्, तत्र यकारस्य स्वरवत्त्वाभावेन एकारस्यायादेशाप्रवर्तनात्। अमरकोषेऽप्येष एवार्थः परिभाषितः—

"**क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रके**" ( २।६।८१ ) इति। स्वरस्य सञ्ज्ञात्वाद् व्यपदेशस्य च सञ्ज्ञातोऽभिन्नरूपत्वाद् व्यपदेशातिदेशोऽयम्।

इञ्चि प्रत्यये परतो यानि कार्याणि क्रियन्ते तानि ञनुबन्धे णनुबन्धे च कृत्प्रत्यये परतः कथं स्युरिति तान्यतिदेशेन विधीयन्ते—"**सिद्धिरिज्वद् ञ्णानुबन्धे**" ( ४।१।१ ) इति। इज्वद्भावेनाभिप्रेतानि कार्याणि वृत्तिकारेण श्लोकद्वयेन सङ्ख्यातानि। तथा हि—

**इज्वद्भावेऽस्योपधाया दीर्घो वृद्धिश्च नामिनाम्।**
**हन्तेर्घो जनवधोर्ह्रस्वः कुटादीनां गुणो भवेत्।**
**न ह्रस्वो मानुबन्धानामिञ्चि वा वचनेन च** ॥ इति।

'पाठक.' इत्यादौ वुणिति णकारानुबन्धप्रत्यये परतः "**अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु**" ( ३।६।५ ) इत्यनेन धातोरुपधाभूतस्याकारस्य दीर्घः। 'कार.' इत्यादौ घञिति ञकारानुबन्धप्रत्यये उक्तसूत्रेण नामिन ऋकारस्य वृद्धि.। 'घात.' इत्यादौ घञ्प्रत्यये "**हनेर्हेर्घिः**" ( २।२।३२ ) इत्यनेन हकारस्य घकारः। 'जनकः, वधक.' इत्यादौ वुण्प्रत्यये दीर्घे कृते "**जनिवध्योश्च**" ( ३।४।६७ ) इत्यनेन तस्य ह्रस्वः। 'उत्कोटः' इत्यादौ घञ्प्रत्यये गुणादेशः, 'पायकः' इत्यादौ वुण्प्रत्यये "**आयिरिच्यादन्तानाम्**" ( ३।६।२० ) इत्यनेन आयिर्भवति। परार्थे यदि कश्चन शब्दः प्रयुज्यते तर्हि स वतिप्रयोगमन्तरेणैव वत्यर्थं बोधयतीतीहापि इच्शब्दो वत्यर्थं बोधयिष्यति—उपधादीर्घादिरूपपरप्रयोजनसिद्धये प्रयुक्तत्वात्। अत्र वत्प्रयोगः सुखार्थं वेदितव्यः। इचि दृष्टाना कार्याणामतिदेशविधानात् कार्यातिदेशोऽयम्।

शन्तृङ्-आनश्-खश्प्रभृतिषु कृत्प्रत्ययेषु परतः सार्वधातुकवत् कार्यविधानायोच्यते—"**सार्वधातुकवच्छे**" ( ४।१।५ ) इति। कार्यातिदेशोऽयम्, सार्वधातुकप्रत्ययनिमित्तककार्यस्यातिदेशात्। अत्रापि वत्करणं सुखार्थं मन्तव्यम्, परार्थे प्रयुज्यमानस्य शब्दस्य

वतिमन्तरेणैव व्यर्थबोधकत्वात्। सार्वधातुकत्वाज् जुहुदित्यादौ अन्विकरणद्वित्वादि, 'पचमान' इत्यादावनादिकार्यं प्रवर्तते।

क्विप्-क्त-क्त्वा क्तवन्तु-क्तीति कानुबन्धप्रत्ययेषु परतो गुणाभावसम्प्रसारणयोर्विधानमतिदेशेन क्रियते—"के यण्वच्च योक्तवर्जम्" (४।१।७) इति। अत्र यण्शब्दाश्रितं सम्प्रसारणकार्यमेवातिदिश्यते। चकारेण गुणाभावोऽनुवर्तते, उपरि "ङे न गुणः" (४।१।६) इत्यनेन गुणाभावस्य विधानादिति वररुचिमतमुपस्थाप्य यणि दृष्टमात्रकार्यस्यायमतिदेश इति स्वीयमभिमतमुपस्थापितम्[१]। जागृधातोश्चान्यस्मिन्नपि कृत्प्रत्यये परतो यण्भावोऽतिदिश्यते—"जागुः शन्तृङ्ञ्योः" (४।१।८) इति। तेन जागरूकः, जागरितः, जागर्तिरित्यत्र "यणाशिषोर्ये" (३।६।१३) इत्यनेन गुणः प्रवर्तते।

'नरम्मन्यः' इत्यादौ 'नृ' इत्युपपदान्मन्धातोः खश्प्रत्ययः, अनव्ययस्यैकस्वरस्योपपदस्य नामिनोऽमागमश्चेत्येतदवस्थाया "घुटि च" (२।१।६७) इत्यनेन ऋकारस्याराऽऽदेशविधानायामागमस्य प्रत्ययवत्त्व क्रियते "नामिनोऽम् प्रत्ययवच्चैकस्वरस्य" (४।१।२१) इति। एव नावम्मन्यः, श्रियम्मन्य इत्यादौ प्रत्ययनिमित्तककार्यान्तरविधानाय चाप्यमागमे प्रत्ययत्वमतिदिश्यते। अत्र 'प्रत्यय' इति सामान्यनिर्देशेऽपि द्वितीयैकवचनमेव गृह्यते न तु ह्यस्तन्यद्यतन्योरम्प्रत्ययः, सान्निध्यात्। ह्यस्तन्यद्यतन्योरम्प्रत्ययमुद्दिश्य त्वडागमादिकार्यं धातुष्वेव विधीयते न तूपपदेष्विति तदग्रहणम्। सान्निध्यशब्देन सादृश्यं गृह्यते तच्च रूपकृतमिति रूपातिदेशोऽयमङ्गीक्रियते।

अतीते वर्तमानाद् धातोः क्रियमाणौ क्वन्सुकानौ परोक्षाविभक्तिवन्मन्येते, परोक्षा विभक्तिनिमित्तककार्यसम्पादनाय। व्यपदेशातिदेशोऽयम्। व्यपदेशः=सञ्ज्ञा, तस्य च सञ्ज्ञातोऽभिन्नरूपत्वात्। अत्राशङ्क्यते—क्वन्सुकानयोः परोक्षासञ्ज्ञैव करणीया, किं प्रयोजन पुनरतिदेशकरणस्य? इति। इदमवधेयम्, सञ्ज्ञाकरणेन परोक्षाया विभक्तित्वात् क्वन्सुकानावपि विभक्तिसञ्ज्ञकौ स्यातामिति तदन्तशब्दस्य लिङ्गसञ्ज्ञा न सम्पद्येत, "धातुविभक्तिवर्जमर्थवल्लिङ्गम्" (२।१।१) इत्यत्र विभक्तिवर्जनात्। अतिदेशेन परोक्षाकार्ये कृते पेचिवानित्यादिरूपाणि सिध्यन्ति।

इति कातन्त्रव्याकरणविमर्शाभिधे शोधप्रबन्धे
सप्तमाध्यायान्तर्गतोऽतिदेशसूत्रविमर्शः।

—:०:—

१. यण्शब्दाश्रितस्य कार्यस्य सम्प्रसारणस्यैवात्रातिदेशश्चकारादगुणश्च, तेन जजागर्वानित्यत्र गुणाभाव इति वररुचि, तदसत्। "जागु. कृत्य०" (४।१।८) इत्यादिना गुण एव भवति जजागर्वानिति, तस्मादत्र यणि दृष्टमात्रकार्यस्यातिदेश' (४।१।७) इति।

# अधिकारसूत्रविमर्शः

## अधिकारस्यार्थो भेदाश्च

अधिकरणमधिक्रियतेऽनेनेति वाऽधिकार.। स्वदेशे लक्ष्यसंस्कारकवाक्यार्थबोधाजनकत्वे सति विधिशास्त्रैकवाक्यतापन्नलक्ष्यसस्कारकवाक्यार्थबोधजनकत्वमधिकारसूत्रत्वमिति वदन्ति वैयाकरणाः। पर यत्र सूत्रैकदेशस्यैवाधिकार. प्रवर्तते तत्र वाक्यार्थबोधजनकत्वं सम्भवति। यथा कातन्त्रे—"**समानः सवर्णे दीर्घीभवति परश्च लोपम्**" (१।२।१) इत्यतः 'परश्च लोपम्' इत्येकदेशस्यैव "**अवर्ण इवर्णे ए**" (१।२।२) इत्यादावनुवृत्तिर्दृश्यते। एवमन्यत्रापि बहुत्र सन्दर्शनाल्लक्षणान्तरमाचार्यबिल्वेश्वरो वक्ति। वक्ष्यमाणार्थलाघवाय कार्यिकार्यनिमित्ताना यदुपादान तदधिकारशब्देनोच्यते[१] इति तदर्थः। पूर्वसूत्रोपात्तपदादेरुत्तरत्र सूत्रेष्वाकाङ्क्षावशादनुवर्तनमिति भावः। आकाङ्क्षावशादेवानुवृत्तेः सत्त्वात् क्वचिदव्यवहितोत्तरेषु सर्वेषु सूत्रेषु नाधिकारस्य प्रवृत्तिर्जायते। उच्यते चापि—"**इष्टितो ह्यधिकाराणां प्रवृत्तिनिवृत्ती स्याताम्**[२]" (पञ्जी ३।४।६७) इति।

महाभाष्यकारोऽधिकारस्य त्रैविध्यमङ्गीकुर्वन्नाचष्टे—यथा एक. प्रदीपो गृहमध्ये स्थापितः सन् सर्वं गृह स्वकीयाऽऽलोकेनाभिज्वलयति तद्वत् किञ्चित् सूत्र शास्त्रे एकत्र विद्यमान सत् सर्वं शास्त्रमभिव्याप्नोति, यथा "**षष्ठी स्थानेयोगा**" (अ० १।१।४६) इति। अयमधिकारः परिभाषारूपो विज्ञेय., अनियमे नियमविधानरूपत्वात्। द्वितीयश्चाधिकारो यथा शृङ्खलया रज्ज्वा वा बद्ध्वा काष्ठमिष्टस्थानेऽनुकृष्य नीयते तद्वद् "**अभिनिविशश्च**" (अ० १।४।४७) इत्यत्र चकारेण "**आधारोऽधिकरणम्**" (अ० १।४।४५) इतिसूत्रस्थमाधारपदमाकृष्यते। तृतीयश्चाधिकारः प्रतिसूत्रमनिर्दिष्टोऽपि प्रतिसूत्रमुपतिष्ठते[३], यथा "**पूर्वत्रासिद्धम्**" (अ० ८।२।१) इति।

---

१ कार्यिकार्यनिमित्ताना पदाना यदुदीरणम्।
वक्ष्यमाणार्थसङ्क्षेपायाधिकार स उच्यते॥
(बि० ३।३।१) इति।

२. अन्यैरपि व्याख्याकारैरेवमुक्तम्, तथा हि—उत्तरत्र वा न वर्ततेऽधिकारस्यैवेष्टत्वात् (टी० २।३।२८)।
'विशेषण' इति न स्मर्यते—इष्टतो ह्यधिकाराणां प्रवृत्तिनिवृत्ती स्यातामिति न्यायात् (कवि० २।४।३५)।

३. अधिकारो नाम त्रिप्रकार। कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति, यथा प्रदीप सुप्रज्वलितः सर्वं वेश्माभिज्वलयति। अपरोऽधिकारो यथा रज्ज्वाऽयसा वा बद्ध काष्ठमनुकृष्यते तद्वदनुकृष्यते चकारेण। अपरोऽधिकार प्रतियोग तस्यानिर्देशार्थ इति योगे योगे उपतिष्ठते (म० भा० १।१।४९)।

कातन्त्रव्याख्याकारा अधिकारस्य चातुर्विध्यमुररीकुर्वन्ति, तदुक्तम्—

**गोयूथः सिंहदृष्टिश्च मण्डूकप्लुतिरेव च ।**
**गङ्गास्रोतःप्रवाहश्च ह्यधिकारश्चतुर्विधः ॥**

( मङ्गला १।८।५ ) इति ।

१—महाभाष्यकारः पतञ्जलिरपि गोयूथवदधिकार मनुते[१] । यथैका गामनुसृत्य बहवो गावो घोषे प्रविशन्ति तद्वदेकस्याधिकारस्यानुमार्गेण यदा बहून्यधिकारान्तराणि प्रवर्तन्ते स गोयूथाधिकार उच्यते । यथा पाणिनीये चातुरर्थिकप्रकरणे तदर्थविधायकस्य **"तदस्मिन्नस्तीति देशे तन्नाम्नि, तेन निर्वृत्तम्, तस्य निवासः, अदूरभवश्च"** ( अ० ४।२।६७-७० ) इत्र सूत्रचतुष्टयस्याधिकारो युगपदेव प्रवर्तते । अय गोयूथाधिकारो गडडलिकाप्रवाहवदुच्यते । अविसङ्घादेकाऽविश्चेद् गर्तादौ पतति तदा तत्सङ्घातान्तर्गतास्ताः सर्वा वार्यमाणा अपि तत्र प्रसह्य निपतन्तीति लोके प्रसिद्धिस्तथाऽत्रापि विज्ञेयम्[२] । कातन्त्रे गोयूथाधिकार प्रदर्शयता टीकाकारेणोक्तम्—

**"ननु व्यवहितयोर्घोषवदघोषयोः कथमनुवर्तनम्? सत्यम्, गोयूथनामाधिकारः"** ( २।२।६३ ) इत्यादि ।

२—यथा सिंहः कश्चिन्मृग हत्वा दृष्टिपथमागतस्य मृगान्तरस्यापि हननकामनया पृष्ठतश्चावलोकयन्नग्रेसरति, दृष्ट च मृग विहन्ति । तथैकस्य शब्दस्य पृष्ठतः पुरतश्चोभयत्रान्वयः सिंहावलोकनाधिकारशब्देन कीर्त्यते । पाणिनीये **"हलन्त्यम्"** ( अ० १।३।३ ) इत्यधिकारसूत्रम् । इदम् **"आदिरन्त्येन सहेता"** ( अ० १।१।७१ ) इत्यत्र पूर्वत्र **"झलां जश् झशि"** ( अ० ८।४।५३ ) इत्यादौ परत्र चाप्यपेक्ष्यते । कातन्त्रवृत्तिटीकाकारोऽधिकारममु प्रदर्शयन्नाह—**"केचिद् धातोरिति सिंहावलोकितमधिकारमिच्छन्ति, यथा सिंहो दूरं गत्वा पश्चादवलोकयति तद्वद् यः स सिंहावलोकित इति"** ( २।३।४९ ) ।

३—यथा मण्डूका उत्प्लुत्योत्प्लुत्य किञ्चित् स्थानं विजहन्तः स्थानान्तर प्राप्नुवन्ति, तद्वत् सूत्रस्थ किञ्चित् पदमव्यवहितोत्तरत्र सूत्राणि विहायाऽऽकाङ्क्षावशाद् दूरस्थसूत्रेषु प्रवर्तते तत्र मण्डूकप्लुतिन्यायोऽङ्गीक्रियते । यथा **"इको यणचि"** ( अ० ६।१।७७ ) इति सूत्रस्थमचीतिपदम् **"अवङ् स्फोटायनस्य"** ( अ० ६।१।१२३ ) इति दूरस्थसूत्रे मण्डूकप्लुतिन्यायेनानुवर्त्यते ।

---

१ गोयूथवदधिकाराः । तद्यथा—गोयूथमेकदण्डप्रघट्टितं सर्वं समं घोषं गच्छन्ति तद्वदधिकाराः ( म० भा० ४।२।७० ) ।

२. गड्डलिकानामवीना सङ्घादेका चेन्नद्यादौ पतति तदा तत्सङ्घातान्तर्गता. सर्वा वार्यमाणा अपि तत्र पतन्तीति लोकप्रसिद्ध्या यत्र वार्यमाणानामपि अनिष्टमार्गे धावन तत्रास्य प्रवृत्ति. ( वाचस्पत्यम्, द्र०—व्या० द० इति०, पृ० ३८३ ) इति ।

४—गङ्गा यथाऽविच्छिन्नभावेन प्रवहति तथैव यदि कस्यचित् सूत्रस्याविच्छिन्नभावेन बहुषु सूत्रेष्वनुवृत्तिर्भवति तर्हि सोऽधिकारो गङ्गास्रोतःप्रवाहशब्देन गृह्यते। यथा "अव्ययीभावः" ( अ० २।१।५ ) इत्यस्य सूत्रस्य "अन्यपदार्थे च सञ्ज्ञायाम्" ( अ० २।१।२१ ) इति सूत्रपर्यन्तमधिकारोऽविच्छिन्नभावेन प्रवर्तते इति गङ्गास्रोतःप्रवाहाख्योऽधिकारः सम्पद्यते, एवं "तत्पुरुषः" ( अ० २।१।२२ ) इत्यादावपि विज्ञेय ।

हरदत्तमिश्रेण सञ्ज्ञादिभेदै षोढा अधिकार परिभाषित, यथा—"अधिकारस्त्वनेकप्रकारो भवति–सञ्ज्ञा, विशेषणम्, स्थानी, प्रकृतिः, निमित्तम्, आदेश इति" ( प० म० १।४।२३ ) इति। पाणिनीये क्रमेणोदाहरणानीत्थं विज्ञेयानि—

१—"प्रत्ययः" ( अ० ३।१।१ ) इति सूत्रेण प्रत्ययशब्दः सञ्ज्ञात्वेनाधिक्रियते, तेन तृतीयाध्यायमारभ्य पञ्चमाध्यायपर्यन्त विहिताना सन्नादीना 'प्रत्ययः' इति सञ्ज्ञा सञ्जायते[1]।

२—शेषाधिकारे पठिता· 'घ-ख' आदय. प्रत्ययाश्चतुरर्थपर्यन्तानामपत्यादिप्रत्ययाना शिष्टत्वाद् विशेषणरूपा., तेन "शेषे" ( अ० ४।२।९२ ) इति विशेषणाधिकारः।

३—"आद्गुणः" ( अ० ६।१।८७ ) इत्यादिक पूर्वपरवर्णयो. स्थाने गुणाद्येकवर्णरूपादेशस्य विधानाद् "एकः पूर्वपरयोः" ( अ० ६।१।८४ ) इति स्थान्यधिकारः। उक्त च पदमञ्जर्याम्—"अथ पूर्वपरयोरिति किमर्थम्? स्थानिनिर्देशार्थम्। असति हि तस्मिन् "आद् गुणः" ( अ० ६।१।८७ ) इत्यादौ स्थानिनिर्देशाभावात् कस्य गुणादिरादेशः स्यात्" ( अ० ६।१।८७ ) इति।

४—स्वादिकप्पर्यन्त प्रत्यया ङ्यन्ताबन्तप्रातिपदिकरूपप्रकृतिभ्यो विधीयन्ते इति "ङ्याप्प्रातिपदिकात्" ( अ० ४।१।१ ) इति प्रकृत्यधिकारः।

५—धातुरूपनिमित्तमाश्रित्य तव्यदादयः प्रत्यया जायन्ते, तेन "धातोः" ( अ० ३।१।९१ ) इति निमित्ताधिकारः।

६—"अपदान्तस्य मूर्धन्यः" ( अ० ८।३।५५ ) इत्यधिकारे पठितै· "सहेः साडः सः" ( अ० ८।३।५६ ) प्रभृतिभिः सूत्रैः सकारादेः स्थाने मूर्धन्यादेशो जायते, तेन "अपदान्तस्य मूर्धन्यः" ( अ० ८।३।५५ ) इत्यादेशाधिकारो विज्ञेयः।

**कातन्त्रीयाधिकारसूत्रविमर्शः**

'सुरेशः' इत्यादौ "अवर्ण इवर्णे ए" ( १।२।२ ) इत्यनेनाकारस्य एकारादेशे कृते ईकारस्य किं भवतीकाङ्क्षाया "समानः सवर्णे दीर्घीभवति परश्च लोपम्" ( १।२।१ ) इत्यतः 'परश्च लोपम्' इत्यंशो गङ्गास्रोत.प्रवाहवदनुवर्तते, तेन च तल्लोपो जायते। एवम्

१ न्यासकारादिभिरत्र प्रत्ययशब्दस्य सञ्ज्ञात्वरूपेणैवाङ्गीकारे लाघवं प्रदर्शितम्।

"उवर्णे ओ" ( १।२।३ ) इत्यादौ "अवर्ण इवर्णे ए" ( १।२।२ ) इत्यतो वर्णपदम्, "वमुवर्णः" ( १।२।६ ) इत्यादौ "इवर्णो यमसवर्णे न च परो लोप्यः" ( १।२।८ ) इत्यतः 'असवर्णे न च परो लोप्य.' इत्यंशोऽनुवर्तते। एव बहुत्राशतोऽधिकारप्रवृत्तिर्दृश्यते। क्वचित् प्रवृत्ताधिकारस्य निवृत्त्यर्थं तत्पदमुपादीयते, यथा "अयादीनां यवलोपः पदान्ते नवा लोपे तु प्रकृतिः" ( १।२।१६ ) इत्यतः पदान्ताधिकारो मा भूदिति "एदोत्परः पदान्ते लोपमकारः" ( १।२।१७ ) इत्यत्र पदान्तपद पठ्यते। पदान्तरस्याप्यधिकारः क्वचिन्निवार्यते, यथा "सखिपत्योर्ङिः" ( २।१।६१ ) इत्यत्रोपात्तं ङिपद "ङिरौ सपूर्वः" ( २।१।६० ) इत्यतः सम्भाविता सपूर्वपदानुवृत्तिं निवर्तयति। क्वचित्तुशब्दोपादानेन क्वचिच्च चशब्दोपादानेन प्रवृत्तोऽधिकारः उत्तरत्र निरस्यते। यथा "घुटि त्वे" ( २।२।२४ ) इत्यत्रोपात्तस्तुशब्दः "दिव उद् व्यञ्जने' ( २।२।२५ ) इत्यत्र "घुटि चासम्बुद्धौ" ( २।२।१७ ) इत्यतः प्रवृत्तमसम्बुद्ध्यधिकारं निवर्तयति, एवम् "एद् बहुत्वे त्वी" ( २।३।४२ ) इत्यत्र तुशब्द उत्तरत्र सूत्रेषु बहुत्वाधिकाराभावायोपादीयते। "उमकारयोर्मध्ये" ( १।५।७ ) इत्यतः "अघोषवत्योश्च" ( १।५।८ ) इत्यत्र चकारेणानुकृष्टम् 'उम् मध्ये' इति पदद्वयमुत्तरत्र न वर्तते। एवम् "अदसश्च" ( २।३।३९ ) इत्यादावपि विज्ञेयम्, उच्यते चापि—"चानुकृष्टमुत्तरत्र नानुवर्तते" ( व्या० परि० वृ०, परि० ५९ ) इति। क्वचित्तु तस्मिन्नेव सूत्रे प्रवृत्ताधिकारवर्जनाय तुशब्द उपादीयते, यथा "शिन्चौ वा" ( १।४।१३ ) इत्यतो वाऽनुवृत्तिर्नापद्येतेति "डढणपरस्तु णकारम्" ( १।४।१४ ) इत्यत्र "भिसैस् वा" ( २।१।१८ ) इत्यतो वापदानुवृत्तेरपसारणाय "घुटि बहुत्वे त्वे" ( २।१।१६ ) इत्यत्र "अकारादसम्बुद्धौ मुश्च" ( २।२।७ ) इत्यतोऽसम्बुद्धेर्निवृत्त्यर्थम् "अन्यादेस्तु तुः" ( २।२।८ ) इत्यत्र च तुपदमुपादीयते। क्वचित् तस्मिन्नेव सूत्रे तुपदमुपादीयते, यतः कस्यचिच्छब्दस्यानुवृत्तिरुत्तरत्र सम्भाव्यते तद्वारणाय, यथा "तृतीयादौ तु परादिः" ( २।१।७ ) इत्यत्र तुशब्दोपादानेनाग्रिमेषु सूत्रेषु तृतीयाद्यधिकारो न प्रवर्तते। "सर्वनाम्नस्तु ससवो ह्रस्वपूर्वाश्च" ( २।१।४३ ) इत्यत्र तुशब्देनोत्तरत्र सुरागमो वार्यते।

पाणिनीयशब्दानुशासने कारक-समास-तद्धितानामधिकारः सूत्रैर्निर्दिष्टः। कातन्त्रे तु न दृश्यते, किं च "अव्ययीभावादकारान्ताद् विभक्तीनाममपञ्चम्याः" ( २।४।१ ) इत्यत्र विभक्तिकार्यविधानेन कारकप्रकरणम्, "नाम्नां समासो युक्तार्थः" ( २।५।१ ) इत्यत्र समाससञ्ज्ञाविधानेन समासप्रकरणम्, "वाऽणपत्ये" ( २।६।१ ) इत्यत्रापत्यार्थेऽण्प्रत्ययविधानेन च तद्धितप्रकरण विज्ञायते।

महर्षिपाणिनिना विभक्त्यधिकारे[1] यावन्तः प्रत्ययाः पठितास्तेषामत्र विभक्तिसञ्ज्ञाया बोधनायोच्यते—

---

१. प्राग् दिशो विभक्तिः ( अ० ५।३।१ )।

विभक्तिसञ्ज्ञा विज्ञेया वक्ष्यन्तेऽतः परं तु ये।
अद्व्यादेः सर्वनाम्नस्तु बहोश्चैव पराः स्मृताः॥
( २।६।२४ ) इति।

विभक्ते. सञ्ज्ञात्वात् सञ्ज्ञाधिकार "पञ्चम्यास्तस्" ( २।६।२८ ) इत्यादाव-विच्छिन्नभावेन प्रवर्तनाद् गङ्गास्रोत.प्रवाहाख्यश्चायमधिकार इति वक्तु शक्यते। पाणिनीये एकोनविंशति.[1] कातन्त्रे चाष्टादश प्रत्यया पठिताः, पाणिनीये छन्दस्युक्तस्य थाप्रत्ययस्यापि प्रदर्शनात्।

"समासान्तगतानां वा राजादीनामदन्तता" (२।६।४१) इत्यत्रोक्तसमासान्त-पदस्य "धेन्वनडुहादयश्च" ( २।६।४१-६५ ) इत्यन्तमधिकारो दृश्यते। अयमपि गङ्गा-स्रोतःप्रवाहाख्योऽधिकारोऽवगन्तव्य., अविच्छिन्नभावेन प्रवर्तनादेतन्मध्येऽधिकारान्तरमपि दृश्यते, "इतोऽव्ययीभावः" (२।६।४१-३७) इत्यस्य "इतो बहुव्रीहिः" (२।६।४१-४६) इत्यस्य च। एतयोरधिकारे पठितैर्गणसूत्रैस्तत्तत्समासे एव अत्प्रत्ययो विधीयते। "नञस्तत्पुरुषे" ( २।६।४१-६३ ) इत्यत्रोक्ततत्पुरुषशब्दस्यापि सूत्रद्वयेऽधिकारो विज्ञायते। वस्तुतस्तु नैतानि सूत्राणि शर्ववर्माचार्यरचितानि, तत्कृतस्य समासतद्धितेतिप्रकरणद्वयस्य-च्छन्दोबद्धत्वात्, एषा सूत्राणा चातथात्वात्।

"सम्प्रति वर्तमाना" ( ३।१।११ ) इत्यादिसूत्रैः सम्प्रत्यादिक्रियाया क्रियात्मके द्रव्ये वा वर्तमानादिविभक्तयो विधीयन्ते इति सन्देहनिराकरणाय सप्तम्यन्तकालाधिकारः क्रियते—"काले" ( ३।१।१० ) इति। तेन सम्प्रत्यादिकाले वर्तमानादिविभक्तयो भवन्तीत्यर्थः सम्पद्यते। सम्प्रत्यादयः शब्दा विशेषणरूपास्तेषा कालो विशेष्यम्। कालाधि-कारेण कर्त्रादिर्वर्तमानाद्यर्थे वर्तमानादयो विभक्तयो न विधीयन्ते। अन्यथा रामस्य वर्तमानदशाया "रामो वनमगच्छत्" इत्यतीते, बलेश्च तद्दशाया "बलिरिन्द्रो भविष्यति" इति भविष्यति प्रत्ययो नोपपद्येत[2]। न चाधिकार. प्रथमान्त एव प्रायेण क्रियते, यथा "कृत्" ( ४।२।७ ) इत्यादि। एवमत्रापि 'काल' इति प्रथमान्तेनैव भाव्यम् इति वाच्यम्, वक्ष्यमाणेषु "सम्प्रति वर्तमाना" ( ३।१।११ ) इत्यादिषु सम्प्रत्यादिसप्तम्या प्रथमान्तस्याघटनात्। अर्थवशाद् विभक्तेर्विपरिणामेन तथात्वे गम्यमानेनेतिशब्देनात्र प्रथमार्थ उच्यते इति विज्ञेयम्। यथा गौरित्ययमाहेत्युच्चारयितव्ये गवित्ययमाहेत्युच्चार्यते प्रथमान्तरहित पदम्। अत एवोक्त वृत्तिकारेण—

---

१. तसिल्-त्रल्-ह-अत्-दा-र्हिल्-अधुना-दानीम्-थाल्-थमु-था - थुस् - थस्-उत - अरि समसण्—थ्यवि-द्य-एद्युसः।

२ अत्र वृत्तिकार —काले इत्यधिकृत वेदितव्यम्। तेन साधने वर्तमानेऽतीते भविष्यति च न स्यात्। ग्राम गतो गमिष्यति चाय देवदत्त., रामो वनमगच्छत्, बलिरिन्द्रो भविष्यति। वर्तमानादिभिः किम्? धातोर्विशेषण द्रव्यस्य वेति सन्देहेऽयमधिकार' ( ३।१।१० ) इत्याह।

'काले इति सप्तम्यन्तमनुकृतम्। काले इत्यधिकृतं वेदितव्यम्' इति। एतत्कालाधिकारस्य करणीयत्वं विस्तरेण दर्शितं पञ्जीकृता[१]। गङ्गास्रोतःप्रवाहाख्योऽयमधिकारः।

पाणिनीये "प्रत्ययः, परश्च" ( अ० ३।१।१, २ ) इति द्वे सूत्रे मन्येते। तत्र 'प्रत्ययः' इति सञ्ज्ञाधिकारः 'परश्च' इति परिभाषाऽङ्गीकृता व्याख्याकारैः। कातन्त्रे तु **"प्रत्ययः परः" ( ३।२।१ )** इत्येकमेव सूत्रं तच्च नाधिकारः किं च परिभाषा। तदुच्यते व्याख्याकारैः—

**"प्रकृतेर्भवन् प्रत्ययो मातुर्वत्सवत् कदाचिदग्रतः पार्श्वतः पृष्ठतो वा स्यात्, अतः पर एवेति नियमार्थं परिभाषेयमिति"** ( पञ्जी ३।२।१ ) इत्यादि।

महर्षिपाणिनिना धातूनां द्वित्वविषयेऽधिकारद्वयमुक्तम्—**"एकाचो द्वे प्रथमस्य, अजादेर्द्वितीयस्य"** ( अ० ६।१।१, २ ) इति। कातन्त्रकारोऽपि तदनुसरन् ब्रूते—**"द्विर्वचनमनभ्यासस्यैकस्वरस्याऽऽद्यस्य, स्वरादेर्द्वितीयस्य"** ( ३।३।१, २ ) इति। पूर्वसूत्रस्य परार्थप्रवृत्तत्वात् परार्थाधिकारः, परसूत्रस्य च स्वस्मिन् कार्याश्रितत्वात् स्वार्थाधिकारो विज्ञेयः। अभ्यासरहितस्य यस्य धातोराद्यवयव एकस्वरविशिष्टस्तस्य धातोर्द्वित्वं भवतीति पूर्वसूत्रस्यार्थः। स्वरादिधातूनां तु आद्यस्वरवर्णं विहाय शेषभागस्य द्वित्वं भवतीति परसूत्रस्यार्थः। परं सूत्रं पूर्वसूत्रस्य बाधकम्—**"येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति"** ( व्या० परि० वृ०, परि० ४२ ) इति न्यायेन। पूर्वसूत्रेऽनभ्यासग्रहणेन 'जुगुप्सिषते' इत्यादौ 'जु' इत्यादेर्न पुनर्द्वित्वम्। पपाच, जुहोतीत्यादौ पूर्वसूत्रस्याधिकारेण **"चण्परोक्षाचेक्रीयितसनन्तेषु, जुहोत्यादीनां सार्वधातुके" ( ३।३।७, ८ )** इत्येताभ्यां द्वित्वमुपपद्यते। आशिशत्, अटाट्यते इत्यादौ **"स्वरादेर्द्वितीयस्य" (३।३।२)** इत्यनेन द्विर्वचनं प्रवर्तते सूत्रमिदं विधिरधिकारश्चापि, स्वस्मिन् कार्यस्य विधानात्।

महर्षिपाणिनिनाऽधिकारसूत्रेषु क्वचित् प्राक्शब्दो योजितः—**"प्राग्रीश्वरान्निपाताः, प्राक् कडारात् समासः"** ( अ० १।४।५६, २।१।३ ) इत्यादिषु। क्वचिच्चावधिनिर्धारणार्थक आङ्शब्दोऽपि विनियुक्तः—**"आकडारादेका सञ्ज्ञा" ( अ० १।४।१ )** इत्यादौ। कातन्त्रे यतस्तदधिकारोऽभीष्यते तत्र सूत्रे 'इतः' इति पदं प्रपठ्यते, यथा **"इतो लोपोऽभ्यासस्य" ( ३।३।३८ )** इति। सर्वावयवविशिष्टस्याभ्यासस्य लोपो यथा स्यादिति सूत्रमिदमुच्यते, तेनाग्रे पठितैः **"सनि मिमीमादारभलभशकपतपदामिस्**

---

१. एतदुक्तं भवति, कालाधिकारेऽस्मिन् वर्तमानादिना साधनं न विशिष्यते, तेन वर्तमाने साधने न वर्तमानादि, अतीते च साधने न परोक्षादिः, भविष्यति साधने न भविष्यन्त्यादिः प्रत्यय इति, अपि तु काल एव विशिष्यते। तेन वर्तमानेऽपि साधने कालस्यातीतत्वाद् भविष्यत्त्वाच्चातीते भविष्यति च विहितः प्रत्ययो जात इत्याह—ग्रामं गतो गमिष्यति चार्थं देवदत्त इति। अयमिति साधनस्य प्रत्यक्षपरामृश्यमानमूर्तिकत्वाद् वर्तमानतामाह। अथवा ह्ययमिति साधनस्य वर्तमानत्वाद् वर्तमानाया एव विषय इति भावः। तथाऽतीतभविष्यद्विषयाणां तु प्रत्ययानामतीतभविष्यत्साधनविषयत्वमेव स्यादिति दर्शयन्नाह—रामो वनमगच्छत्, बलिरिन्द्रो भविष्यति। तस्मात् कार्यः कालाधिकार इति ( ३।१।१० ) इत्यादि।

**स्वरस्य"** ( ३।३।१६ ) इत्यादिभिश्चतुर्भिः सूत्रै. कार्यान्तरेण सहाभ्यासलोपः प्रवर्तते– प्रमित्सति, प्रमित्सते इत्यादौ । 'इतः' इतिशब्देन निर्धारणे कृते पूर्वोक्ते सन्वद्भावविषये अमीमपत्, अदीदपदित्यादौ नेद प्रवर्तते ।

महर्षिपाणिनिना इकः स्थाने जायमानस्य यण्प्रत्याहारस्थवर्णचतुष्टयस्य सम्प्रसारण-सज्ञा विधाय ष्यङादेः सम्प्रसारणविधानमुक्तम् । आचार्यशर्ववर्मणा विहितायामपि सम्प्रसारणसज्ञाया तद्विधानमधिकारेणोक्तम्—**"सपरस्वरायाः सम्प्रसारणमन्तस्थायाः"** ( ३।४।१ ) इति । परेण धातुस्वरेण सहान्त.स्थाया. सम्प्रसारणकार्यमधिक्रियते इत्यर्थः । व्यञ्जनस्य यकारादिवर्णस्य परस्थेनैव स्वरवर्णेन सह सयोगात् सस्वरत्व लोके प्रसिद्धमिति सूत्रे परग्रहणं स्पष्टार्थं मन्तव्यम्–कातन्त्रव्याकरणेऽर्थलाघवस्य समादृतत्वात् । गङ्गास्रोतः-प्रवाहवदयमधिकारोऽष्टादशसूत्राण्यभिव्याप्नोति । व्यवधानेन सम्प्रसारणसञ्ज्ञाया उदीरितत्वान्मण्डूकप्लुतिरप्यत्र विज्ञेया ।

आख्यातिकपञ्चमपादारम्भे गुणविधानाय सूत्रमुच्यते—**"नाम्यन्तयोर्धातुविकरण-योर्गुणः"** ( ३।५।१ ) इति । अत्रत्य गुणपदं **"विजेरिटि"** ( ३।५।२८ ) इतिसूत्रपर्यन्त-मनुवर्तते, एतदन्तरे विधिनिषेधौ विहितौ दृश्येते । गुणपद गङ्गास्रोत.प्रवाहवदधिक्रियते इति विज्ञेयम् ।

कातन्त्रे आख्यातप्रकरणे कृतोऽपि धात्वधिकारस्तस्य प्रकरणादङ्गीक्रियते । अत एव **"तृतीयादेर्घढधभान्तस्य धातोरादिचतुर्थत्वमकृतवत् स्ध्वोः"** ( ३।६।१०० ) इति सूत्रव्याख्याने वृत्तिकारेणोच्यते—**"पुनर्धातुग्रहणमुत्तरार्थमिह सुखार्थं च"** इति । अत्राह पञ्जीकारस्त्रिलोचनदासः–प्रकरणान्महाधात्वधिकाराच्च धातुर्लब्ध एवेत्याह–पुनरित्यादीति ।

कृत्प्रकरणे वररुचिना कात्यायनेन **"धातोः"** ( ४।२।१ ) इत्यधिकारसूत्रमुपस्थाप्य वक्ष्यमाणप्रत्यया धातोः स्युरित्यर्थ आविष्कृतः, तेन तव्यादयः प्रत्यया अविशेषाद् धातो-र्भवन्ति । धात्वधिकाराभावे 'कुम्भस्य भावः कुम्भता, कुम्भ करोति कुम्भकारः' इत्यादिस्थले **"भावकर्मणोः कृत्यक्तखलर्थाः"** ( ४।६।४७ ) इति निर्देशेन भावकर्मार्थे तव्यादयोऽपि प्रत्यया. स्यु., तद्वारणाय धात्वधिकारोऽभिप्रेतः । **"युष्मदि मध्यमः"** ( ३।६।१ ) इत्यत्र युष्मदीत्यस्य सप्तम्यन्तत्वात् **"सप्तम्युक्तमुपपदम्"** ( ४।२।२ ) इत्यनेनोपपदसञ्ज्ञा स्यात्, तस्य च **"तत् प्राङ् नाम चेत्"** (४।२।३) इति नियमेन धातो. प्राक् प्रयोगे 'त्व पचसि' इत्येव वाक्य स्याद् न तु पचसि त्वमिति । किं च **"वाऽसरूपोऽस्त्रियाम्"** ( ४।२।८ ) इत्यस्यासीमकत्वादाख्यातेऽपि प्रसङ्गोपन्यासात् **"सणनिटः शिडन्तान्नाम्युपधाददृशः"** ( ३।२।२५ ) इत्यनेन सरूपत्वात् सिच्प्रत्ययस्य सण्प्रत्ययो नित्य एव बाधकः स्यान्न तु विकल्पेन । सति धात्वधिकारे तु नैषाऽव्यवस्था सम्भाव्येतेति धात्वधिकारः क्रियते ।

धात्वाधिकारे धातोर्विहिताना प्रत्ययाना कृत्सञ्ज्ञाविधानाय **"कृत्"** ( ४।२।७ ) इति प्रथमान्तपदेनाधिकारः क्रियते । अयं तु परार्थाधिकारः । कृत्प्रकरणेऽस्मिन् सर्वत्र धातुकृतारुपस्थितत्वाद् गोयूथवदधिकारावमौ मन्तव्यौ ।

सर्वस्माद् धातोर्भावे घञ्प्रत्ययः "भावे" ( ४।५।३ ) इत्यधिकारेण विधीयते। स चायमधिकारो गोयूथवद् विज्ञेयः। एवम् "अकर्तरि च कारके सञ्ज्ञायाम्" ( ४।५।४ ) इत्यपि तथैवावगन्तव्यम्, एतत्प्रदेशेषु धातुकृदधिकारयोरप्युपस्थितत्वात्, यत्र स्त्रीलिङ्गे क्तिरित्यादौ क्तिप्रत्ययो विधीयते तत्राप्यनयोः प्रवृत्तिसत्त्वाच्च। किं च सर्वेष्वव्यवहित-सूत्रेषु प्रवृत्तेरभावान्मण्डूकप्लुतिरप्यत्र विज्ञातु शक्यते।

"निष्ठायां च" ( ४।६।८८ ) इत्येषोऽधिकारो गोयूथवत् प्रवर्तते—अग्रिमेषु कतिपयेषु सूत्रेष्वव्यवधानेन प्रवर्तनात्। अधिकारेऽस्मिन् क्वचिदिड् विधीयते क्वचिच्च निषिध्यते तेन 'पवितः, पवितवान्, उड्डीन, शूनः' इत्यादिप्रयोगा उपपद्यन्ते।

**इति कातन्त्रव्याकरणविमर्शाभिधे शोधप्रबन्धे**
**सप्तमाध्यायान्तर्गतोऽधिकारसूत्रविमर्शः,**

**समाप्तश्च सप्तमो विधिनियमातिदेशा-**
**धिकारविमर्शाध्यायः।**



# उपसंहारः

शोधप्रबन्धस्यास्य प्रथमेऽध्याये वङ्गोत्कलादिप्रदेशीय त्रिविष्टपदेशीयं च कातन्त्र-वाङ्मय विवृण्वता कातन्त्रविभ्रमादिग्रन्थाना कश्चिद् विशेषः परिचय. प्रस्तुतः। तत्र शब्दार्थयोर्लाघवम्, वाङ्मयस्यास्य समृद्धिः, सम्प्रदायान्तरेषु कातन्त्रव्याकरणस्य समादरश्चावश्यमवधारणीयः सुधीभि.।

द्वितीयेऽध्याये 'सन्धि-नाम-आख्यात' इत्यध्यायत्रितयस्य क्रमसङ्गतिः, 'सन्धि-नाम-आख्यात-कृत्' इत्यध्यायचतुष्टयसूत्राणा रचना, क्रम, कार्याणि च दर्शितानि। अत्र क्वचित् प्रतीताया विसगतेरसङ्गतेश्च समाधानमाचार्याभिप्रायमाविष्कुर्वता कृतमिति तल्लक्षणीय वर्तते।

तृतीयेऽध्याये खिलपाठान्तर्गतो धातुपाठस्तत्र मनोरमाटीकागता केचिद् वैशिष्ट्याभिधायका विचाराः प्रकाशिता., येन धातूना प्रयोगविषये वररुचिप्रभृतीनामाचार्याणामभिमत स्वतन्त्र क्वचिद् विज्ञायते। शब्दप्रमाणकानामाचार्याणा तेषा तदभिमतमवश्यमवधेयं वर्तते जिज्ञासुभिः।

चतुर्थेऽध्याये खिलपाठे स्मृताना गणपाठ-उणादिसूत्र-लिङ्गानुशासनसूत्राणा पाणिनीय-गणपाठादिभिः सह काचित् परीक्षा कृता। परीक्षयाऽनया यत्र क्वचित् प्रतीयमान उत्कर्षोऽपकर्षश्च दर्शित.। तुलनात्मकमेतादृश परीक्षण विज्ञैर्भवति समादरणीयम्।

सञ्ज्ञाविमर्शाभिधाने पञ्चमेऽध्याये सञ्ज्ञाना व्याकरणशास्त्रे उपयोगिता, स्वरादि-सञ्ज्ञानामन्वर्थतादिक च सयुक्तिक विवेचितम्। अत्र पूर्वाचार्यानुसारेण वर्णादिसञ्ज्ञानामपि प्रयोगो दर्शितः, येन पूर्वाचार्यप्रयोगानुसरण ग्रन्थकर्त्रा प्रतीयते।

षष्ठेऽध्याये परिभाषाणामावश्यकतां प्रदर्श्य दुर्गसिंह-भावशर्मभ्या व्याख्याताना कातन्त्रीयपरिभाषाणामर्थादे. स्पष्टीकरण स्वीयभाषाशैलीक्रमेण विहितमिति तत्र तत्र व्याख्याने उपस्थित साम्यवैषम्यादिक लक्षणीयं गुणज्ञैध्यानवद्भिः।

अन्तिमे सप्तमेऽध्याये विधि-नियम-अतिदेश-अधिकारसूत्राणामर्थः, भेदा., वैशिष्ट्य च किञ्चिद् वर्णितम्। तत्र वैयाकरणमीमासकसम्मतो विधिर्नियमश्च, अधिकारातिदेशयोः पाणिनीयव्याख्यानात् कातन्त्रव्याख्याने किञ्चिद् वैषम्य वैशिष्ट्य च वैयाकरणैरवश्यमवधारणीयम्। विस्तरेणावगमाय भूमिकाऽध्येतव्या।

सञ्ज्ञाधातुगणादिरत्नलसितात् कातन्त्रतन्त्राम्बुधे-
रुद्भूतः कृपया हि यस्य ललितः शोधप्रबन्धो मणिः।
सौभाग्येन समर्पितः सुकरुणासिन्धोः कराम्भोजयो-
स्तस्य श्रीपरमेश्वरस्य सततं भूयादसौ प्रीतये॥
वसुद्वन्द्वबियद्द्वन्द्वमिते (२०२८) वैक्रमवत्सरे।
चन्द्रे पूर्णशरच्चन्द्रे प्रबन्धः पूर्णतामगात्॥

# परिशिष्टम्

## १. दुर्गवृत्त्यादिषु व्याख्यानेषूद्धृता ग्रन्थाः

| क. सं. | उद्धृतग्रन्थाः | आधारग्रन्थाः | अध्याय-पाद-सूत्रसंख्या |
|---|---|---|---|
| १ | अनर्घराघवम् | कलापचन्द्रः | ३।२।४२-२० |
| २ | अभिधानकाण्डम् | कलापचन्द्रः | २।१।१ |
| ३ | अमरकोषः | व्याख्यासारः | १।१।८, ३।१।१४, १४ |
| | | कलापचन्द्रः | २।२।६, ५।१, १६ |
| ४ | अर्थन्यास. | कलापचन्द्रः | १।१।१ |
| ५ | उपाध्याय-सर्वस्वम् | कलापचन्द्रः | ३।२।३ |
| ६ | कन्दली | व्याख्यासार. | ३।१।६ |
| ७ | कातन्त्रप्रदीपः | कलापचन्द्रः | २।१।१७, ३।२।६ |
| ८ | कादम्बरी | कलापचन्द्रः | ३।२।४० |
| ९ | काव्यप्रकाशः | कलापचन्द्रः | ३।२।४२-११ |
| १० | काशिकावृत्तिः | कलापचन्द्रः | २।२।१४, ५२, ४।३३, ३८, ३।१।१६; २।८, ६, १६, ४२-४५ |
| | | मञ्जुला | ३।७।२, ९ |
| ११ | किरणावली | व्याख्यासारः | ३।१।१६ |
| १२ | किरातार्जुनीयम् | दुर्गवृत्ति | ३।२।४२-११ |
| | | पञ्जी | ३।२।४५ |
| १३ | कुमारसम्भवम् | व्याख्यासारः | मङ्गलाचरणम्—पृ० १, ३।२।१७ |
| | | कलापचन्द्रः | २।१।५, ३।२।१७ |
| १४ | कोषः | व्याख्यासारः | २।१।१ |
| | | कलापचन्द्रः | २।१।२५ |
| १५ | खण्डनप्रकाशः | कलापचन्द्रः | ३।२।३ |
| १६ | गीतगोविन्दम् | कलापचन्द्रः | ३।२।१ |
| १७ | चण्डी | व्याख्यासारः | ३।२।४२-४०, ४।९ |
| | | कलापचन्द्रः | ३।२।४२-२०-३७ |

| | | | |
|---|---|---|---|
| १८ | चान्द्रम् | पञ्जी | २।३।३७ |
| | | कलापचन्द्रः | १।२।१५, २।३।४१ |
| १९ | जयमङ्गला | कलापचन्द्रः | ३।२।४२-१३-४३ |
| २० | टीका | पञ्जी | २।२।२०, ४।४, ९, ५।१९, ३।८।२२ |
| | | व्याख्यासारः | १।२।६, ५।१४, ३।२।१४, १८, ३।२७; ४।१, १०, ५२, ६२, ७३, ६।५९ |
| | | कलापचन्द्रः | १।३।१, ४।५, ७, ५।१४, १६, २।१।१, १०, १८, २५ ३६, ५६, ७०, २।१, ३, ३५, ५२; ३।८, २०,२१, ३२, ३७, ४१, ४४, ५०, ५३, ५४, ५५, ४।१, ३,९, १२, १३, १४, २४, ३१, ३२, ३७, ५०, ५।१, २, ३, ४, २१, २३, २४, २५, २८, ६।१, ७, ८, ११, १२, १४, १५, १६, १८, २२, २८, २९, ३१, ३६ ३७, ६१, १३८, १३९, १४१, १४३, १४६, १४७, ३।१।४, ५, ७, १९, २०, २१; २।५, ६, ८, ११, १४, १५, १६, १९, २१, ३६, ४०, ४१, ४२-३, ४५, ४७ |
| | | बिल्वेश्वरटीका | ३।३।१, २, ३, ४, ५, ७, ८ १०, ११, १३, १४, १९, २२, २३, २४, २५, २७, २८, ३४, ४।२१, ३४, ६८, ६९, ७०, ७८, ५।६, १०, ३५; ६।४३, ५९, ७३, ७।५, ८।२६ |
| | | मङ्गला | ३।७।१, ८।२, १४ |
| २१ | तन्त्रप्रदीपः | परिशिष्टवृत्तिः | नामप्रकरणम्-सू० १० |
| २२ | दुर्गवाक्यप्रबोधः | बिल्वेश्वरटीका | ३।३।१, २, ३, ४, १०, २७, २९, ४।६२, ५।१०, ६।७३ |
| २३ | दुर्गवृत्तिः | बिल्वेश्वरटीका | ३।८।१२ |
| २४ | दुर्घटवृत्तिः | व्याख्यासारः | मङ्गलाचरणम्-पृ० ४ |
| २५ | द्विरूपकोषः | कलापचन्द्रः | मङ्गलाचरणम्-पृ० ५ |
| २६ | धरणिः | व्याख्यासारः | मङ्गलाचरणम्-पृ० ४ |

